THE

# BRAHMASÛTRA-SHÂNKARBHÂSHYAM

with the commentaries

RATNAPRABHÂ, BHÂMATÎ AND NYÂYANIRṆAYA

OF

SHRÎGOVINDÂNANDA, VÂCHASPATI AND ÂNANDAGIRI.

Edited by

RÂMCHANDRA SHÂSTRÎ DHUPAKAR

AND

MAHÂDEVA SHÂSTRÎ BÂKRE.



Printed and published

BY

TUKÂRÂM JÂVAJÎ,

*Proprietor of Jâvajî Dâdâjî's "Nirṇaya-sâgar" Press.*

BOMBAY:

1904.

*Price 8 Rupees.*





# ब्रह्मसूत्रशांकरभाष्यम् ।

## श्रीगोविन्दानन्द-वाचस्पति-आनन्दगिरिप्रणीत-

रत्नप्रभा-भामती-आनन्दगिरीय(न्यायनिर्णय)-

व्याख्यात्रयोपेतम् ।

---

धूपकरोपाह्वरामचन्द्रशास्त्री-वाक्रेइत्युपाह्वमहादेवशास्त्री

इत्येताभ्यां चतुःसूत्रीभामत्यां टिप्पणयोजनेन

परिष्कृतम् ।

---

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसंकर्षणः श्रीमच्छंकरदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।

दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥

माधवः

---


तच्च

मुम्बय्यां

तुकाराम जावजी इत्येतैः

स्वीये "निर्णयसागराख्य" मुद्रणयन्त्रालये मुद्रयित्वा

प्राकाश्यं नीतम् ।

---

शाकः १८२५, खीस्ताब्दः १९०४.

---

मूल्यं ८ रूप्यकाः ।

# भूमिका

श्रीगणेशाय नमः ।

## श्रीसद्गुरुचरणारविन्दाभ्यां नमः ।

वक्त्रारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताभूत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम् ॥ १ ॥

सर्वोऽपि प्राणभृद्वर्गो निसर्गत एवेष्टमभीप्सुरनिष्टपरिजिहीर्षुश्च भवतीति भगवानाम्नायस्तदुपायं तात्पर्येण प्रतिपादयन्नखिलं प्राणिजातमनुगृह्णाति । स च ऋग्यजुःसामाथर्वभेदैर्मन्त्रब्राह्मणारण्यकोपनिषदादिभेदैर्बहुधा विभक्तोऽप्यर्थनिरूपणसौकर्याय पुनः कर्मकाण्डोपासनाकाण्डज्ञानकाण्डभेदेन त्रिधा व्यभाजि पूर्वाचार्यैः । तत्र मन्त्रभागस्याध्वरप्रयोगसमवेतद्रव्यदेवताद्यर्थस्मारकतया कर्मकाण्डत्वं ब्राह्मणभागस्य च मन्त्रोदितार्थेतिकर्तव्यताबोधनपरस्य तच्छेपतामुपनिपद्भागस्य च यथायथमुपासनाज्ञाननिरूपणपरस्योपासनाकाण्डत्वं ज्ञानकाण्डत्वं चाचक्षते । तत्रानाद्यविच्छिन्नवैदिकसंप्रदायस्थेम्नाऽनुन्मिपत्स्वरवर्णक्रमविपर्ययासु निखिलकामदोग्ध्रीषु कर्मकाण्डशब्दितश्रुतिषु यद्यपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादयः परःसहस्रं स्वःस्वाराज्यादिप्रापका उपायाः श्रूयन्ते । स्वःपदं च दुःखासंभिन्नमक्षयं सुखं ब्रूते । तदुक्तम्—

'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् ।
संकल्पोपनतं यच्च तत्सुखं स्वःपदास्पदम् ॥ १ ॥' इति

'अपाम सोमममृता अभूम' इत्यादिमन्त्रवर्णश्चामुमेवार्थं द्रढयति । अथापि 'तद्यथेह कर्मचितो लोकः क्षीयत एवममुत्र पुण्यचितो लोकः क्षीयते' 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' इत्यादिश्रुतेः 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोके विशन्ति' इत्यादिस्मृतेः, यत्कृतकं तदनित्यमिति व्याप्तेश्च स्वर्गादिसुखस्य क्षयित्वावगमात्, 'सोन्वेष्टव्यः स विजिज्ञासितव्यः' 'आत्मा वारे द्रष्टव्यः श्रोतव्यः' इत्याद्यमृतत्वकामं प्रत्यात्मश्रवणादिविधिभ्यः, 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिना चामृतत्वंप्रति साधनान्तरनिराकरणाच्च 'अपाम सोमं' इत्यादिवाक्येष्वमृताक्षयादिपदानि सव्यपेक्षामृतत्वाक्षयत्वाद्यभिप्रायतया व्याख्यातुमुचितानि । तथाच स्मृतिः—

'आभूतसंप्लवं स्थानममृतत्वं प्रचक्षते' इति ।

सातिशयत्वं चास्य स्वर्गादिसुखस्यावगम्यते । ज्योतिष्टोमयाजी स्वर्गी भवति राजसूययाजी च स्वाराडिति । तदिदमुक्तमीश्वरकृष्णैः साङ्ख्यकारिकासु—

'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति

व्याख्यातं चैतद्वाचस्पतिमिश्रैः—

गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः, एतदुक्तं भवति—श्रूयत एव परं न केनापि क्रियत इति । तत्र भव आनुश्रविक इति। तत्र प्राप्तो ज्ञात इति यावत्। आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्तत इत्यैकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्। यद्यपि चानुश्रविक इति सामान्येनाभिहितं तथापि कर्मकलापाभिप्रायं द्रष्टव्यं विवेकज्ञानस्याप्यानुश्रविकत्वात्। तथा च श्रूयते—'आत्मा वा अरे द्रष्टव्यः' 'न स पुनरावर्तते' इति । अस्यां प्रतिज्ञायां हेतुमाह—'स ह्यविशुद्धिक्षयातिशययुक्तः ।' अविशुद्धिः—सोमादियागस्य पशुबीजादिवधसाधनता । यथाह स्म भगवान् पञ्चशिखाचार्यः—'स्वल्पः संकरः सपरिहारः सप्रत्यवमर्पः' इति । स्वल्पः संकरः—ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनापूर्वेण, सपरिहारः—कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः । अथ प्रमादतः प्राय-

श्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये स विपच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः—प्रत्यवमर्षेण सहिष्णुतया सह वर्तत इति। मृष्यन्ते हि पुण्यसंभारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्। नच 'मा हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन बाध्यत इति युक्तं, विरोधाभावात्। विरोधे हि बलीयसा दुर्बलं बाध्यते, न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात्। तथाहि—'मा हिंस्यात्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि 'अग्नीषोमीयं पशुमालभेत' इत्यनेन वाक्येन च पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावः, तथासति वाक्यभेदप्रसङ्गात्। नचानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति। हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति। क्षयातिशयौ च फलगतावप्युपाय उपचरितौ, क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम्। ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम्, परसंपदुत्कर्षो हि हीनसंपदं पुरुषं दुःखाकरोति 'अपाम सोमममृता अभूम' इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति। यदाहुः—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति। अत एव च श्रुतिः—'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति'। तथा 'कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः। तथाऽपरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः' इति। तस्माचेदमवधार्यते न कर्मकाण्डस्य निरतिशयाक्षयसुखोपायज्ञापकत्वमिति।

किंतु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिवचननिचयप्रामाण्यान्नानाविधभोक्तृभोक्तव्यादिभेदप्रपञ्चस्य ब्रह्मण्यविद्यापरिकल्पितत्वात्, 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिनिन्दया पारमार्थिकभेदनिराकरणात्, 'तरति शोकमात्मवित्' इत्यादिश्रुतिशिरःशतवशेन निर्विशेषब्रह्मात्मैकत्वविषयानाद्यविद्यानिवृत्तिबोधनात्, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुत्यात्मन उपनिषदेकगम्यत्वावधारणादैकान्तिकात्यन्तिकेष्टानिष्टप्राप्तिपरिहारोपायभूतां ब्रह्मविद्यामाम्नायशिरोभूता उपनिषद एव प्रतिपादयन्तीत्यत्र न काचिद्विप्रतिपत्तिः श्रुतेरन्तिमप्रमाणत्वमभ्युपगच्छताम्। उपनिषच्छब्दं चैवं व्याचख्युः श्रीमच्छङ्कराचार्या मुण्डकोपनिषद्भाष्ये—

'सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते। मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यां उपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते। तथाच वक्ष्यति—'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति। पूर्वोक्तविशेषणान्मुमुक्षून्वा परंब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत्। तथाच वक्ष्यति—'ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युः' इति। लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते। तथाच वक्ष्यति—'अमृतत्वं भजन्ते' इति। ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति उपनिषदधीमहेऽध्यापयाम इति च। एवं नैष दोषः अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसंभवात् विद्यायां च संभवात्। ग्रन्थस्यापि तादर्थ्येन तच्छब्दोपपत्तेः' इति।

तदविद्यादिसंसारबीजविशरणशीलामुपनिषच्छब्दवाच्यां ब्रह्मविद्यां प्रतिपादयन्तीनामप्युपनिषदां क्वचित्क्वचिद्विरोधाभासवतीनां यथार्थमर्थमनवगच्छतां श्रुतिप्रामाण्यवादिनामपि परस्परमतप्रतिक्षेपेण विवदतामात्मानमधिकृत्य परःशतं राद्धान्ताः प्रवव्रृतिरे। तथाहि—केचिदस्य कर्तृत्वभोक्तृत्वादिमत्त्वमातिष्ठन्ते। केचित्कर्तृत्वमेव न भोक्तृत्वं केचिदणुत्वं केचिन्महत्त्वं केचित्प्रकाश्यत्वमात्रं केचित्प्रकाशकत्वमात्रमित्यादि। श्रुतेः प्रामाण्यमनभ्युपगच्छन्तो लोकायतिकास्तु केवलमुच्छृङ्खलं तर्कमास्थायेत्थं प्रलपन्ति—

पृथिव्यादीनि भूतानि चत्वारि तत्वानि। तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते। तेषु विनष्टेषु सत्सु स्वयं विनश्यति। तस्माच्चैतन्यविशिष्टदेह एवात्मा। अत एवच स्थूलोऽहं कृशोऽहं गौरोऽहमित्यादिसामानाधिकरण्यमप्युपपद्यते। मम देह इति बुद्धिस्तु राहोः शिर इतिवदौपचारिकी। नचात्मनो देहादतिरेके किंचित्प्रमाणमप्यस्ति। प्रत्यक्षमेवहि प्रमाणम्। नच तद्देहादतिरिच्यमानात्मानमहंप्रत्ययगम्यं प्रमापयति। अनुमानं तु प्रमितिकरणतावच्छेदकधर्मासंपृक्तमेव न किंचिदपि प्रमापयितुमर्हति प्रागेवात्मनो देहातिरेकम्। तथाहि—अनुमानप्रामा-

ण्यवादिभिर्व्याप्तिपक्षधर्मताविशिष्टं लिङ्गमेव गमकमभ्युपगतम् । व्याप्तिश्चोपाधिविधुरः संबन्धः । स न स्वरूपसन्नेव फलाय कल्पत इति ज्ञायमानस्य तस्य हेतुत्वं वक्तव्यम् । तच्चानुपपन्नं व्याप्तिग्रहोपायाभावात् । न तावत्प्रत्यक्षं सत्संप्रयुक्तार्थबुद्ध्युपजननस्वभावस्य तस्य भूतभविष्यद्विप्रकृष्टविषयोपसंहारवत्या व्याप्तेर्ग्रहणेऽशक्तत्वात् । शब्दोऽप्यनुमानकक्षाप्रविष्टस्तत्प्रत्याख्यानप्रत्याख्यात एव । इति नास्ति किंचिदात्मनो देहातिरेके प्रमाणम् । एवंच देहोच्छेद एव मोक्षः । ऐहलौकिकं तत्तद्विषयोपभोगजन्यं सुखमेव स्वर्गः । कण्टकादिजनितं दुःखमेव नरकः । जगद्वैचित्र्यं चाग्निजलयोरुष्णत्वशीतत्वादिवत्स्वभावादेवोपपद्येत । अग्निहोत्राद्युपदेशश्च बुद्धिपौरुषहीनानां जीविकोपाय इति ।

तदेतच्चार्वाकमतमसहमाना बौद्धा व्याप्तिग्रहोपायाभावं प्रत्याचक्षते—

'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमः—' इति

धूमधूमध्वजयोरविनाभावः कार्यकारणभावान्निर्णीयते । यदि धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यात् । तत्रा-(वह्निजन्यत्वे-)ऽपि समुपजायमानाशङ्का व्याघातेनापनोदनीया यदि धूमो वह्निजन्यो न स्याद्धूमार्थिनो न वह्नौ प्रवर्तेरन्निति । आशङ्काया व्याघातावधिकत्वात् । तस्मात्कार्यकारणभावादविनाभावनिश्चय इति । कार्यकारणभावनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । कार्यस्योत्पत्तेः प्रागनुपलम्भः, कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात्कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते । एवं स्वभावात् (तादात्म्यनिश्चयात्) अविनाभावो निश्चीयते—यदि शिंशपा वृक्षत्वमतिपतेत्स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः । शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते । नह्यत्यन्ताभेदे सत्येतत्संभवति युगपत्प्रयोगायोगात् ।

इत्येवमनुमानं प्रतिष्ठाप्य तत्सध्रीचीनात् 'सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यम्' इति भगवतो भावनाचतुष्टयोपदेशात्स्वस्वबुद्ध्यनुसारेण चतुर्विधतत्त्वनिर्णयेन ते माध्यमिक–योगाचार–सौत्रान्तिक–वैभाषिकभेदेन चतुर्धा अभूवन् ।

तत्र माध्यमिकास्तावत्–भगवतोपदिष्टं नीलादिक्षणानां क्षणिकत्वं सत्त्वेन हेतुनानुमातव्यमितिमन्वानाः 'यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावाः' इत्यादिरीत्या भगवदुपदिष्टमर्थं विभावयन्तो भगवता भिक्षुपादप्रसारिकान्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्व–सर्वगतत्व–सर्वसत्यत्वव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानं बोधितमिति मन्यन्ते ।

अपरेतु—गुरूक्तार्थाङ्गीकारलक्षणमाचारमान्तरस्य शून्यत्वं कथमिति पर्यनुयोगं च कृतवन्तो योगाचारप्रथामापुवन्तो बाह्यमर्थमनङ्गीकुर्वाणाः अनादिवासनावशाद्बुद्धिरेवानेकाकारावभासत इति ब्रुवाणाः प्रागुक्तचतुर्विधभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदय एव महोदय इति मन्यन्ते ।

अन्येतु—सूत्रस्यान्तं पृच्छन्तो भगवता बोधिताः सौत्रान्तिकप्रथामापुः । ये बाह्यमर्थजातमनुमेयं मन्यन्ते ।

परेतु—बाह्येषु गन्धादिषु आन्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकानची-कथद्भगवान् । द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति । तृतीयानुभयं सदित्यभिमत्य स्थितान् विज्ञेयमनुमेयमिति । सेयं विरुद्धा भाषा इति वर्णयन्तो वैभाषिकाख्यया ख्याताः ।

एवमार्हतादीनि सन्ति भूयांस्यात्मानमधिकृत्य प्रवृत्तानि दर्शनानि । तेषां च युक्तिगाढतया सांख्यादीनां च शिष्टैः केनचिदंशेन परिगृहीततया च श्रुतिमूलत्वेनाभासमानतया च मन्दप्रज्ञमुमुक्षुजनव्यामोहकतया सम्यग्दर्शनप्रतिपक्षभूतत्वात् तन्निराकरणाय सम्यग्दर्शनोपायभूतोपनिषद्वाक्यार्थनिर्णयाय च भगवान्बादरायणश्चतुर्भिरध्यायैर्ब्रह्ममीमांसाशास्त्रमन्वशासीत् । तदपि स्वस्वसिद्धान्तानुसारेण व्याख्यायद्भिः कतिपयैः स्वार्थात्प्रच्याव्य दुरवस्थामापाद्यमानमवलोक्य भगवान् महेश्वरो मानुषेषु शंकरयतिरूपेणावतीर्य तद्व्याचक्षाणः स्वार्थे समन्वाययञ्छ्रुतीः स्वार्थे प्रतिष्ठापयामास ।

तदेवं प्रौढैः परां काष्ठामारूढस्यास्य ग्रन्थरत्नस्य निगूढतरभाष्यकृदाशयप्रकटनालंकर्मीणभामती-प्रभा-न्यायनिर्णयाख्य-व्याख्यात्रितययुतस्य मुद्रणे बद्धपरिकरैः श्रीमद्भिर्निर्णयसागरमुद्रणालयाधिपतिभिरस्य परिशोधनादिसंस्करणे न्ययोजि अधीततर्कव्याकृतिवेदान्तो धूपकरकुलावतंसो रामचन्द्रशर्मा । तस्मिंश्च दुर्दैवोपनिपातादन्तरैव स्मृतिमात्रपात्रे संपन्ने द्वितीयाध्यायतृतीयपादमारभ्यासमाप्त्यस्य परिशोधनमहमकरवम् । तत्र मम ग्रन्थपरिशोधनकर्मणि प्रथमप्रवृत्तस्य दृष्टिदोषवशाद्वा प्रमादाद्वा व्युत्पत्त्यपरिपाकाद्वा समुपजातानां स्खलितानां प्रबोधनेनानुगृह्णन्तु मां विचक्षणा येन द्वितीयसंस्करणे यतिष्ये तन्मार्जनायेति सशिरःप्रणाममभ्यर्थयते—

महामहोपाध्यायश्रीद्दशिवकुमारमिश्रचरणान्तेवासी—

बाक्रे इत्युपाह्वो महादेवशर्मा ।

श्रीः ।

# अथ ब्रह्मसूत्रशांकरभाष्यस्थविषयाणामनुक्रमणिका ।

## प्रथमोऽध्यायः १

### प्रथमः पादः ।


सू० पृ० पं०

१ उपोद्घातः ।

१० १ अनिर्वचनीयताख्यातिवादिमतेऽध्यासलक्षणम् ।

१३ १ अन्यथात्मख्यातिवादिमतेऽध्यासलक्षणम् ।

१३ १ अख्यातिवादिमतेऽध्यासलक्षणम् ।

१५ १ शून्यवादिमतेऽध्यासलक्षणम् ।

१६ २ अध्याससंभावनाया आक्षेपपूर्वकमुपपादनम् ।

२० १ अध्यासस्य प्रमाणसिद्धत्वम् ।

२६ १ शास्त्रस्य विषयप्रयोजनप्रदर्शनम् ।

**१ ब्रह्मणो विचार्यत्वाधिकरणम् (जिज्ञासाधि०)**

२७ अथशब्दस्यानन्तर्यार्थकत्वव्यवस्थापनम् ।

२९ ३ तच्चानन्तर्यं शाब्दबोधापेक्षं कर्मावबोधापेक्षं वेति संदिह्योभयनिरसनपूर्वकं नित्यानित्यवस्तुविवेकादिसाधनसंपत्त्यानन्तर्यसाधनम् ।

३७ २ अतःशब्दघटकस्येदंशब्दस्याग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलत्वार्थकत्वकथनम् ।

३९ १ ब्रह्मजिज्ञासापदस्य शेषषष्ठीसमासत्वनिराकरणपूर्वककर्मषष्ठीसमासत्वव्यवस्थापनम् ।

४२ २ ब्रह्मणो जिज्ञास्यत्वं विकल्पासहत्वेनाक्षिप्य सर्वजनीनेनात्मास्तित्वप्रत्ययेन प्रसिद्धिमुपपाद्य तत्त्वनिर्णयपरिपन्थिभूतानां बहुविधप्रतिपत्तीनां युक्तिवाक्यतदाभाससमुत्थितानां निरसनहेतुद्वारा वेदान्तवाक्यमीमांसाया निःश्रेयसप्रयोजनत्वप्रतिपादनम् ।

**२ जन्माद्यधिकरणम् ।**

२ ४६ जन्मादिपदस्यार्थकथनम् ।

,, ४७ ३ अस्येतिपदस्यार्थकथनम् ।

,, ४७ ४ यतःपदस्यार्थकथनम् ।

,, ४८ २ विपरिणामादीनां शेषभावविकाराणां जन्मादिष्वन्तर्भावप्रतिपादनम् ।

,, ४९ ३ उक्तस्य ब्रह्मलक्षणस्यातिव्याप्तत्वशङ्कानिरासाय जगतः कारणान्तरादसंभवप्रतिपादनम् ।

,, ४९ ४ स्वभाववादिमतनिराकरणम् ।

सू० पृ० पं०

२ ५४ ५ प्रकृताधिकरणस्य विषयवाक्यप्रदर्शनं तद्गतयच्छब्दार्थनिर्णायकवाक्यप्रदर्शनमुत्तरसूत्रावतरणं च ।

**३ शास्त्रयोनित्वाधिकरणम् ।**

३ ५५ ब्रह्मणो वेदकर्तृत्वप्रतिपादनेन जगद्योनित्वावगतनिरतिशयसर्वज्ञत्वदृढीकरणम् ।

द्वितीयवर्णकम्—

,, ५८ १ ब्रह्मणः शास्त्रप्रमाणकत्वप्रतिपादनम् । अस्मिन्कल्पे पूर्वसूत्रेणास्य सूत्रस्य गतार्थत्वाशङ्का तत्परिहारश्च ।

,, ५८ ६ उत्तरसूत्रावतरणव्याजेन द्वितीयवर्णकाक्षेपपूर्वकोत्तरसूत्रनिवर्त्यपूर्वपक्षाभिधानम् ।

**४ समन्वयाधिकरणम् ।**

४ ६१ सूत्रघटकपदानामर्थकथनम् ।

,, ६२ १ वेदान्तनामेकान्तेन ब्रह्मप्रतिपादनपरत्वमाख्यातुं केषांचिद्वाक्यानामुपदर्शनम् ।

,, ६३ ४ ब्रह्मणः सिद्धत्वेन मानान्तरवेद्यत्वमित्यादीनां पूर्वपक्षबीजानां निराकरणम् ।

द्वितीयवर्णकम्—

,, ६६ १ ब्रह्मण उपास्तिविधिशेषत्ववादिमतोपन्यासः ।

,, ७० १ कर्मज्ञानफलयोर्वैलक्षण्यप्रदर्शनम् ।

,, ७८ ७ ब्रह्मणस्तज्ज्ञानस्य च कार्यानुप्रवेशानर्हत्वम् ।

,, ८० १ ब्रह्मण आप्यत्वनिरासः ।

,, ८३ १ ज्ञानस्य क्रियात्वमाशङ्क्य तत्परिहारः ।

,, ८४ २ ब्रह्मविषयकलिङादीनां विधित्वनिराकरणम् ।

,, ८५ ४ ब्रह्मात्मावगतौ सर्वकर्तव्यताहान्यादेरिष्टत्वकथनम् ।

,, ८५ ८ केवलवस्तुवादी वेदभागो नास्तीति प्राभाकरमतस्य निराकरणम् ।

,, ८८ ६ आम्नायस्य क्रियार्थत्वादितिसूत्रे आनर्थक्यमतदर्थानामित्युक्तस्यानर्थक्यस्य पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयकत्वाभिधानम् ।

,, ९१ १ निषेधवाक्यवद्वेदान्तानां सिद्धेऽर्थे प्रामाण्यप्रतिपादनम् ।

,, ९४ ३ न वेदान्तानां कर्तव्यविध्यनुप्रवेशमन्तरेण र-

| सू० | पृ० | पं० | |
|---|---|---|---|
| | | | ज्जुस्वरूपकथनवदर्थवत्त्वं संभवति श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनादित्याक्षेपस्य निराकरणम्। आत्मनः सशरीरत्वस्य शरीरात्माभिमानलक्षणमिथ्याज्ञानरूपत्वकथनम्। |
| ४ | ९६ | ३ | शरीरात्माभिमानस्य गौणत्वं वदतः प्राभाकरस्य खण्डनम्। विदुषः सर्वप्रवृत्त्यसंबन्धप्रदर्शनेनावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वाभावावधारणम्। |
| ,, | ९७ | ९ | वेदान्तानां प्रतिपत्तिविधिपरत्वनिराकरणम्। |
| ,, | ९८ | ७ | अद्वैतात्मसाक्षात्कारेणाविद्यानिवृत्तौ प्रमात्रादिभावविरहात्प्रमाणादिव्यवहारबाधप्रतिपादनम्। |
| ,, | १०० | | उत्तरसूत्रावतरणम्। |
| | | | **५. ईक्षत्यधिकरणम्।** |
| ५ | १०२ | | सूत्रगतपदानां योजना व्याख्यानं च। |
| ,, | १०३ | १ | ईक्षितृत्वप्रतिपादकश्रुतिप्रदर्शनम्। |
| ,, | १०४ | ५ | ईक्षतेरित्यस्य धात्वर्थनिर्देशत्वकथनं तत्प्रयोजनकथनं च। |
| ,, | १०४ | ८ | सत्त्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति सांख्योक्तिखण्डनम्। |
| ,, | १०५ | ६ | सेश्वरसांख्यमतखण्डनम्। |
| ,, | १०५ | ८ | ब्रह्मणो न मुख्यं सर्वज्ञत्वमुपपद्यते इति पूर्वपक्षबीजस्य निरसनम्। |
| ,, | १०६ | ७ | जीवस्येव ब्रह्मणोऽपि ज्ञाने शरीरसंबन्धाद्यपेक्षेत्याशङ्क्य तन्निराकरणम्। |
| ,, | १०७ | ५ | यदुक्तं संसारिणः शरीराद्यपेक्षाज्ञानोत्पत्तिर्नेश्वरस्येति तदयुक्तं ईश्वरादतिरिक्तस्य संसारिणोऽभावादित्याशङ्का तत्परिहारश्च। अचेतनेऽपि प्रधाने ईक्षितृत्वस्यौपचारिकत्वोपपादनेनोत्तरसूत्रावतरणम्। |
| ६ | १०८ | १६ | सूत्रस्थात्मशब्दादितिपदेन जीवे सत आत्मशब्दप्रयोगादितिविवक्षया प्रधानस्येक्षितृत्वाभावप्रतिपादनम्। |
| ,, | १०९ | ८ | विधान्तरेण हेतुव्याख्यानम्। |
| ,, | ११० | १ | आत्मशब्दस्याप्रधानेऽपि नानार्थत्वाद्गुणवृत्त्या वा संभवाभिधानेनोत्तरसूत्रावतरणम्। |
| ७ | ११० | ७ | तन्निष्ठस्य (सत्यभेदज्ञानवतः) मोक्षोपदेशात् प्रधानस्यात्मशब्दालम्बनत्वाभावप्रतिपादनम्। |
| ,, | १११ | ३ | तत्त्वमसीत्युपदेशस्य प्रधानैक्यसंपदुपासनार्थत्वनिराकरणम्। गौणत्वसाधारणत्वयोर्दृष्टान्तवैषम्यप्रदर्शनेन निराकरणम्। |
| ,, | ११२ | ५ | स्वतन्त्रहेतुपरतया सूत्रव्याख्यानम्। |
| ८ | ११२ | | स्थूलारुन्धतीन्यायेन तत्त्वमसीत्यत्र प्रधानस्यैवात्मत्वोपदेश इत्याशङ्कानिराकरणम्। |
| ९ | ११३ | | जगत्कारणं प्रकृत्य स्वपितीत्यस्य निर्वचनं कुर्वत्या श्रुत्या चेतनस्यैव जगत्कारणत्वप्रतिपादनाभिधानम्। |
| १० | ११५ | | सर्वेषु वेदान्तेषु जगत्कारणचैतन्यावगतेः प्रधानस्य जगत्कारणत्वाभावप्रतिपादनम्। |
| ११ | ११६ | | सर्वज्ञस्य जगत्कारणत्वप्रतिपादकश्रुतिप्रदर्शनम्। |
| ,, | ११६ | ४ | वृत्तसंकीर्तनपुरःसरमुत्तरसूत्रसंदर्भाक्षेपः। |
| ,, | ११६ | ८ | द्विरूपब्रह्मबोधकश्रुतिप्रदर्शनपूर्वकमुत्तरग्रन्थप्रयोजनकथनम्। |
| | | | **६ आनन्दमयाधिकरणम्।** |
| १२ | ११९ | | एकदेशिमतेन व्याख्यानम्। |
| ,, | ११९ | | विषयवाक्यप्रदर्शनपूर्वकं तत्रतेनानन्दमयशब्देन किं ब्रह्मोच्यतेऽर्थान्तरं वेति संदिह्य पूर्वपक्षसमर्थनम्। |
| ,, | १२० | ५ | परस्मिन्नानन्दशब्दाभ्यासप्रदर्शनेन सिद्धान्तः। |
| ,, | १२१ | ७ | अमुख्यात्मप्रवाहपतितत्वरूपपूर्वपक्षबीजनिरसनम्। |
| ,, | १२१ | ८ | प्रियादीनां शिरस्त्वादिकल्पनानुपपत्तिरूपपूर्वपक्षबीजनिरसनम्। |
| १३ | १२१ | | मयटो विकारे दर्शनाद्विकारविषयत्वमानन्दमयशब्दस्याशङ्क्य प्राचुर्येऽपि स्मरणात्तद्विषयत्वप्रतिपादनम्। |
| १४ | १२२ | | ब्रह्मण आनन्दहेतुत्वव्यपदेशाद्धेतोर्मयटः प्राचुर्यार्थत्वप्रतिपादनम्। |
| १५ | १२२ | | मान्त्रवर्णिकस्यैत्र परस्य ब्रह्मणो ब्राह्मणे आनन्दमयशब्देन गानादानन्दमयः पर एवात्मेति प्रतिपादनम्। |
| १६ | १२३ | | शरीराद्युत्पत्तेः प्रागभिध्यानाद्यसंभवाज्जीवस्यानन्दमयत्वाभावप्रतिपादनम्। |
| १७ | १२३ | | रसं ह्येवायं लब्ध्वानन्दी भवतीति भेदव्यपदेशादानन्दमयशब्देन न संसारिणो ग्रहणम्। लब्धुर्लभ्यत्वाभावे श्रुतिस्मृतिबाधमाशङ्क्य तत्परिहारः। |
| १८ | १२४ | | आनन्दमयाधिकारे कामयितृत्वनिर्देशात्प्रधानमानन्दमयत्वेन कारणत्वेन वाऽपेक्षितुं न शक्यत इति प्रतिपादनम्। |
| १९ | १२४ | | आनन्दमयविषयकप्रबोधवतो जीवस्य मुक्तिशासनादानन्दमयशब्दो प्रधाने जीवे वा न प्रवर्तत इति प्रतिपादनम्। |

सू० पृ० पं०

१९ १२५ ५ स्वमतेनाधिकरणपरिग्रहार्थमेकदेशिमतदूषणम्।

,, १२८ १७ स्वसंमताधिकरणानुगुण्येन सूत्राणां व्याख्यानम्।

७ अन्तरधिकरणम्।

२० १३० विषयवाक्यप्रदर्शनपूर्वकं विवक्षितोपाधिभेदं ब्रह्म उपास्यत्वेन श्रूयते उत विद्याकर्मातिशयलब्धोत्कर्षो जीव इति संदिह्य रूपवत्त्वश्रुतेराधारश्रवणादैश्वर्यमर्यादाश्रुतेश्च पूर्वपक्षसमर्थनम्।

,, १३२ ३ तद्धर्मोपदेशादिति सूत्रावयवव्याख्यानेन सिद्धान्तप्रतिपादनम्।

,, १३३ ५ रूपवत्त्वश्रुतिलक्षणपूर्वपक्षसमर्थकप्रथमहेतुनिराकरणम्।

,, १३३ १२ द्वितीयहेतुनिराकरणम्।

,, १३३ १३ तृतीयहेतुनिराकरणम्।

२१ १३४ आदित्यशरीराभिमानिभ्यो जीवेभ्योऽन्यस्यान्तर्यामिण ईश्वरस्य श्रुत्योपदेशाद्ब्रह्मण एवोपास्यत्वप्रतिपादनम्।

८ आकाशाधिकरणम्।

२२ १३४ अस्य लोकस्येति छान्दोग्यवाक्ये आकाशपदं भूताकाशपरं ब्रह्मपरं वेति संदिह्य पूर्वपक्षसमर्थनम्।

,, १३४ ११ तल्लिङ्गादितिसूत्रस्थपदव्याख्यानेन सिद्धान्तप्रतिपादनम्।

,, १३७ १ प्रसिद्धिबलेन शीघ्रं बुद्ध्यारोहादिति पूर्वपक्षसमर्थकहेतोर्निराकरणम्।

९ प्राणाधिकरणम्।

२३ १३७ कतमा सा देवतेतिवाक्ये पूर्ववत्संशयनिर्णययोरतिदेशः।

,, १४० ६ वृत्तिकारकृतव्याख्यानखण्डनम्।

१० ज्योतिश्चरणाधिकरणम्।

२४ १४० अथ यदतःपरो दिवो ज्योतिर्दीप्यते इति वाक्ये आदित्यादिज्योतिरभिधीयते किंवा परमात्मेति संदिह्य इह पूर्ववत्तल्लिङ्गाभावात्प्रसिद्धेर्मर्यादाश्रुतेः (अत्र कार्यस्याऽपि मर्यादाऽयोगाशङ्का तत्परिहारः) आधारश्रुतेः परस्य ज्योतिषोऽध्यासात् अल्पफलश्रुतेः पूर्ववाक्ये ब्रह्मनिर्देशाभावात् दिव आधारत्वश्रवणेन प्रत्यभिज्ञानाभावाच्च पूर्वपक्षसमर्थनम्।

२४ १४३ १० चरणाभिधानमिति सूत्रावयवव्याख्यानेन ब्रह्मनिर्देश इति समाधानम्।

,, १४४ ४ संदंशन्यायप्रदर्शनम्।

,, १४४ ५ प्रसिद्धेरित्यस्य निरसनम्।

,, १४५ ४ मर्यादाश्रुत्यादीनां निरसनम्।

२५ १४६ एकदेशिमतेन सूत्रव्याख्यानम्। पूर्वस्मिन्वाक्ये ब्रह्मनिर्देशाभावादिति पूर्वपक्षसमर्थकहेतुपरिहारप्रतिज्ञा।

,, १४६ १० प्रश्नपूर्वकं हेतुप्रदर्शनम्।

,, १४६ ११ तावानिति मन्त्रस्य ब्रह्मप्रकाशकत्वाभावप्रतिपादनम्।

,, १४६ १४ यद्वै तद्ब्रह्मेतिमन्त्रगतब्रह्मशब्दस्य छन्दोविषयत्वप्रतिपादनम्।

,, १४७ ३ तथा चेतोऽर्पणनिगदादिति सूत्रावयवव्याख्यानेन गायत्र्याख्यविकारानुगतस्य जगत्कारणस्य ब्रह्मणः सर्वशब्देन प्रतिपादनाभिधानम्। तथाहि दर्शनमिति सूत्रशेषव्याख्यानम्।

,, १४८ १ गायत्रीशब्दस्य संख्यासामान्याद्गौण्या वृत्त्या ब्रह्माभिधायित्वमिति मतान्तरप्रदर्शनम्।

२६ १४९ भूतादिपादव्यपदेशादपि पूर्ववाक्ये ब्रह्मणः प्रकृतत्वाभिधानम्।

२७ १५० दिव आधारत्वेन मर्यादात्वेन चोपदेशात्प्रत्यभिज्ञानमित्येतस्याक्षेपस्य परिहारः।

११ प्रातर्दनाधिकरणम्।

२८ १५० विषयवाक्यप्रदर्शनपुरःसरं प्राणशब्देन वायुमात्रं वा देवतात्मा वा जीवो वा परं ब्रह्म वा गृह्यत इति चतुष्कोटिकसंशयोपपादनम्।

,, १५२ ब्रह्मणो विज्ञेयत्वप्रतिपादनम्।

२९ १५३ न वक्तुरात्मोपदेशादिति सूत्रावयवव्याख्यानेन पूर्वसूत्रसिद्धान्तं 'प्राणो ब्रह्मेति' आक्षिप्य देवतात्मेति द्वितीयकोटिसमर्थनम्।

,, १५३ १४ अध्यात्मसंबन्धभूमा ह्यस्मिन्निति सूत्रशेषव्याख्यानेन ब्रह्मोपदेश एवायं न देवतात्मोपदेश इति सिद्धान्तः।

३० १५४ देवतालिङ्गानां गतिप्रदर्शनम्।

३१ १५५ जीवमुख्यप्राणलिङ्गप्रदर्शनेन प्राणशब्दस्य ब्रह्मपरत्वाक्षेपः।

,, १५६ २ नोपासात्रैविध्यादिति सूत्रांशव्याख्यानेन समाधानम्।

,, १५७ ७ आश्रितत्वादित्यादिसूत्रशेषव्याख्यानम्।

,, १५६ ९ जीवमुख्यप्राणलिङ्गानां ब्रह्मणि नयनम्।

सू० पृ० पं०

३१ १५७ ४ प्राणप्रज्ञात्मनोर्भेददर्शनस्यौपाधिकत्वप्रतिपादनम् ।

,, १५७ ७ वृत्तिकारमतेन नोपासात्रैविध्यादित्यादिसूत्रभागस्य व्याख्यानम् ।

इति प्रथमः पादः ।

---

## प्रथमाध्याये द्वितीयः पादः ॥ २ ॥

,, १६० वृत्तसंकीर्तनपूर्वकमत्र द्वितीये पादे निर्णेयार्थस्य कथनम् ।

### १ सर्वत्रप्रसिद्ध्यधिकरणम् ।

१ १६० सर्वं खल्विदमित्यादिछान्दोग्योपनिषद्गतं वाक्यं विषयत्वेन निर्दिश्य किमिह शारीर उपास्यत्वेनोपदिश्यत आहो परं ब्रह्मेति संशयप्रदर्शनम् ।

,, १६१ ३ शारीर इति पूर्वपक्षस्योपपादनम् । तदर्थं सर्वमित्यादिवाक्यस्य शमविधिपरत्वप्रतिपादनम् ।

,, १६२ ३ जीवे ज्यायस्त्वायोगशङ्का तत्परिहारः । अन्ते ब्रह्मसंकीर्तनस्यापि जीवविषयत्वसमर्थनम् ।

,, १६२ ८ परमेव ब्रह्मेति सिद्धान्तोपपादनम् ।

२ १६३ श्रुत्युक्तगुणानां विवक्षितत्वोपपादनम् । सत्यसंकल्पत्वादीनां गुणानां ब्रह्मण्युपपादनम् ।

,, १६४ १ मनोमयत्वादिजीवलिङ्गानां ब्रह्मण्युपपादनम् ।

३ १६४ सत्यसंकल्पत्वादीनां शारीरे आञ्जस्येनानुपपत्तेर्ब्रह्मण उपास्यत्वप्रतिपादनम् ।

४ १६४ कर्मकर्तृव्यपदेशाच्च मनोमयत्वादिगुणः शारीरो न भवतीति प्रतिपादनम् ।

५ १६५ शब्दविशेषात्सिद्धान्तोपपादनम् ।

६ १६५ ईश्वरः सर्वभूतानामित्यादिस्मृतेरपि हृदिस्थस्य जीवाद्भेदप्रतिपादनम् । जीवस्य परस्माद्भेदायोगशङ्का तत्परिहारश्च ।

७ १६६ अर्भकौकस्त्वाणीयस्त्वरूपजीवलिङ्गद्वयस्य निरासः ।

८ १६७ ब्रह्मणो हार्दत्वेऽनिष्टसंभोगापत्तेर्जीव एव हार्द उपास्य इत्याशङ्कय तन्निराकरणम् ।

### २ अत्त्रधिकरणम् ।

९ १६८ यस्य ब्रह्म चेति विषयवाक्यं प्रदर्श्यौदनोपसेचनसूचितोऽत्ता अग्निर्वा जीवो वा परमात्मा वेति संदिह्य 'अनश्नन्नन्यो' इति दर्शनान्तरमात्मनोऽत्तृत्वासंभवादग्निर्वा जीवो वेति पूर्वपक्षः ।

९ १६९ ४ चराचरग्रहणादिति सूत्रशेषव्याख्यानेन परमात्मेति सिद्धान्तः ।

,, १६९ ८ अत्तृत्वासंभवनिराकरणम् ।

१० १६९ प्रकरणात्परमेश्वरस्यात्तृत्वप्रतिपादनम् ।

### ३ गुहाप्रविष्टाधिकरणम् ।

११ १७० 'ऋतं पिबन्तौ' इति मन्त्रे बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति संदिह्य पक्षद्वयस्याप्युपपत्तिप्रदर्शनम् ।

,, १७० १३ पक्षद्वयस्याप्याक्षेपः ।

,, १७१ ३ आक्षेपनिरासेन संशयोपपादनम् ।

,, १७१ ७ बुद्धिक्षेत्रज्ञाविति पक्षस्य समर्थनम् ।

,, १७२ १ पूर्वपक्षं निराकृत्य जीवपरमात्मानाविति व्यवस्थापनम् ।

१२ १७३ अग्रे गन्तृगन्तव्यत्व–मन्तृमन्तव्यत्वविशेषणश्रवणाज्जीवपरमात्मानावेव गुहां प्रविष्टौ गृह्येते ।

,, १७३ ६ प्रकरणस्याप्युक्तार्थोपष्टम्भकत्वप्रतिपादनम् ।

,, १७३ ७ कृत्वाचिन्तया द्वासुपर्णेत्यादावस्य न्यायस्यातिदेशः ।

,, १७४ १ कृत्वाचिन्तोद्घाटनम् ।

### ४ अन्तराधिकरणम् ।

१३ १७५ य एषोऽक्षिणीति वाक्ये किं प्रतिबिम्बात्माऽक्ष्यधिकरणो निर्दिश्यतेऽथवा विज्ञानात्मा उत देवतात्मेन्द्रियस्याधिष्ठाताथवेश्वर इति संदिह्य त्रयाणामपि पूर्वेषां पक्षाणां समर्थनम् ।

,, १७६ ८ उपपत्तेरितिसूत्रांशव्याख्यानेन परमेश्वर इति व्यवस्थापनम् ।

१४ १७७ परस्याक्षिस्थानानुपपत्तिनिराकरणम् ।

१५ १७८ प्रकृतानुसारादपि ब्रह्मण एव प्रत्येतव्यत्वम् ।

१६ १८० ब्रह्मविद्विषयाया गतेरक्षिपुरुषविदोऽभिधानादक्षिस्थानस्य ब्रह्मत्वनिर्णयः ।

१७ १८१ छायात्म-विज्ञानात्म-देवतात्मनामक्षिस्थानत्वनिराकरणम् ।

### ५ अन्तर्याम्यधिकरणम् ।

१८ १८२ 'यः पृथिव्यां तिष्ठन्नित्यादिवाक्ये अधिदैवताधिकं कश्चिदन्तरवस्थितो यमयिता श्रूयते स किं तत्तदभिमानी देवतात्मा किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी उत परमात्मा आहोस्विदर्थान्तरमिति संदिह्य परमात्मव्यतिरिक्तानां त्रयाणामपि पक्षाणां समर्थनम् ।

,, १८३ ९ तद्धर्मव्यपदेशादिति सूत्रावयवव्याख्यानेन परमात्मैवेति सिद्धान्तोपपादनम् ।

| सू० | पृ० | पं० | |
|---|---|---|---|
| १९ | १८४ | | प्रधानस्यान्तर्यामिशब्दत्वाशङ्का। |
| ,, | १८५ | ३ | सूत्रव्याख्यानेन परिहारः। |
| ,, | १८५ | ७ | शारीरस्यान्तर्यामित्वोपपादनेनोत्तरसूत्रावतरणम्। |
| २० | १८५ | | काण्वैर्माध्यन्दिनैश्चान्तर्यामिणः शारीरस्य भेदेनाधीतत्वाच्छारीरस्यान्तर्यामित्वाभावप्रतिपादनम्। |
| ,, | १८६ | ३ | शारीरपरमात्मनोस्तात्विकभेदाशङ्कानिरासाय द्रष्टृद्वयानुपपत्त्याशङ्का तत्परिहारश्च। |

६ अदृश्यत्वाद्यधिकरणम्।

| सू० | पृ० | पं० | |
|---|---|---|---|
| २१ | १८६ | | अथ परा ययेति वाक्ये अद्रेश्यादिगुणको भूतयोनिः प्रधानमुत शारीर आहो परमेश्वर इति संदिह्य प्रधानस्य तत्त्वोपपादनम्। |
| ,, | १८८ | ७ | शारीरस्य भूतयोनित्वप्रतिपादनम्। |
| ,, | १८८ | ९ | धर्मोक्तेरिति सूत्रावयवव्याख्यानेन परमेश्वर इति प्रतिपादनम्। |
| ,, | १८८ | ११ | यः सर्वज्ञ इति वाक्यशेषस्य भूतयोनिविषयत्वाभावखण्डनम्। |
| ,, | १८९ | ८ | परविद्येतिसमाख्यया भूतयोनेर्ब्रह्मत्वप्रतिपादनम्। |
| ,, | १९० | २ | ब्रह्मविद्येतिसमाख्यया भूतयोनेर्ब्रह्मत्वप्रतिपादनम्। |
| ,, | १९० | १० | अचेतनानां दृष्टान्तत्वेनोपन्यासादिति भूतयोनेः प्रधानत्वापादकहेतोर्निराकरणम्। |
| २२ | १९१ | | विशेषणाच्छारीरस्य भूतयोनित्वाभावप्रतिपादनम्। |
| ,, | १९१ | ६ | भेदव्यपदेशात् प्रधानस्य भूतयोनित्वाभावप्रतिपादनम्। |
| २३ | १९२ | | वृत्तिकृन्मतेन सूत्रव्याख्यानम्। |
| ,, | १९२ | १६ | स्वमतेन व्याख्यानम्॥ |

७ वैश्वानराधिकरणम्।

| सू० | पृ० | पं० | |
|---|---|---|---|
| २४ | १९३ | १४ | विषयवाक्यं प्रदर्श्य तत्र वैश्वानरशब्देन किं जाठरोग्निरुपदिश्यते उत भूताग्निरथ तदभिमानिनी देवताऽथवा शारीर आहोस्वित्परमेश्वर इति संदिह्य संदेहकारणं चाभिधाय चतुर्णामपि पूर्वपक्षाणां क्रमेणोपपादनम्। |
| ,, | १९६ | १ | साधारणशब्दविशेषादिति सूत्रावयवव्याख्यानेन परमात्मेति सिद्धान्तोपपादनम्। अत्रैवार्थे लिङ्गान्तराभिधानं च। |
| २५ | १९६ | | अग्निरास्यं द्यौर्मूर्धेत्यादि त्रैलोक्यात्मकं परमेश्वरस्य रूपं स्मर्यमाणं मूलभूतां श्रुतिमनुमापयत् वैश्वानरशब्दस्य परमेश्वरपरत्वे गमकमिति प्रतिपादनम्। |
| २६ | १९७ | | शब्दादीनां गतिं वक्तुमुक्तसिद्धान्ताक्षेपः |
| ,, | १९८ | ३ | 'न तथा दृष्ट्युपदेशात्' इत्यस्य। |
| ,, | १९८ | ७ | असंभवादित्यस्य। |
| ,, | १९८ | ९ | 'पुरुषमपि चैनमधीयते' इत्यस्य सूत्रावयवस्य व्याख्यानेन जाठरो वैश्वानरः प्रत्येतव्य इति प्रथमपक्षनिराकरणम्। |
| ,, | १९८ | १२ | सूत्रे पुरुषमपीतिस्थानीयस्य पुरुषविधमपीतिपाठस्य व्याख्यानम्। |
| २७ | १९९ | | भूताग्निर्वा देवतात्मा वेति द्वितीयतृतीयपक्षनिरसनम्। |
| २८ | १९९ | | प्रतीकोपाधिकल्पनाभ्यां विनापि परमेश्वरस्योपास्यत्वप्रतिपादनम्। |
| २९ | २०० | | परमेश्वरपरिग्रहे प्रादेशमात्रश्रुत्युपपत्तिप्रदर्शनम्। |
| ३० | २०१ | | बादरिमतेन प्रादेशमात्रश्रुत्युपपादनम्। |
| ३१ | २०१ | | प्रादेशमात्रश्रुतेः श्रुत्युक्तगतिप्रदर्शनम्। |
| ३२ | २०२ | | प्रादेशमात्रश्रुतेः संपत्तिनिमित्तत्वे जाबालश्रुतिसंवादप्रदर्शनम्। |


## प्रथमाध्याये तृतीयः पादः॥ ३॥

१ द्युभ्वाद्यधिकरणम्।


| सू० | पृ० | पं० | |
|---|---|---|---|
| १ | २०४ | | यस्मिन्द्यौरिति वाक्ये द्युप्रभृतीनामोतत्ववचनाद्गम्यमानमायतनं किं ब्रह्म स्यादाहो अर्थान्तरमिति संदिह्यार्थान्तरमिति पूर्वपक्षस्योपपादनम्। |
| ,, | २०५ | ६ | सूत्रव्याख्यानेन सिद्धान्तः। |
| ,, | २०६ | १ | स्वशब्दादित्यस्यार्थान्तरम्। |
| ,, | २०६ | २ | पुनरर्थान्तरम्। |
| ,, | २०७ | २ | सेतुश्रुतेर्गतिप्रदर्शनम्। |
| ,, | २०७ | | सेतुशब्दस्य ज्ञानपरत्वेन व्याख्यानम्। |
| २ | २०७ | | द्युभ्वाद्यायतनस्य मुक्तोपसृप्यत्वव्यपदेशाद्ब्रह्मत्वप्रतिपादनम्। |
| ,, | २०८ | ५ | वाग्विमुक्तेर्विज्ञेयत्वव्यपदेशस्यापि तत्र हेतुत्वप्रतिपादनम्। |
| ३ | २०८ | | प्रधानस्य वायोश्च द्युभ्वाद्यायतनत्वनिराकरणम्। |
| ४ | २०९ | | विज्ञानात्मनः द्युभ्वाद्यायतनत्वनिराकरणम्। |
| ५ | २०९ | | ज्ञेयज्ञातृभावरूपभेदव्यपदेशादपि विज्ञानात्मनो द्युभ्वायतनत्वप्रतिषेधः। |
| ६ | २०९ | | तत्रैव प्रकरणस्य हेतुत्वप्रतिपादनम्। |
| ७ | २०९ | | द्युभ्वाद्यायतनं प्रकृत्य द्वा सुपर्णा इत्यत्र स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञयोः पृथग्ग्रहणादपि |

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| | | | विज्ञानात्मनो न द्युभ्वाद्यायतनत्वमिति प्रतिपादनम् । |
| ७ | २१० | ८ | द्वासुपर्णेत्यत्र पैङ्ग्युपनिषत्कृतव्याख्यानेन सत्त्वक्षेत्रज्ञावुच्येते तस्मिन्पक्षे व्याख्यानम् । |

**२ भूमाधिकरणम् ।**

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| ८ | २११ | | भूमा त्वेवेति छान्दोग्यवाक्ये भूमा प्राण उत परमात्मेति संदिह्य संशयबीजप्रदर्शनम् । |
| ,, | २१२ | ३ | पूर्वपक्षसमर्थनम् । |
| ,, | २१२ | | प्राणो भूमेतिपक्षे भूमलक्षणविरोधाशङ्का तत्परिहारश्च । |
| ,, | २१३ | ३ | सुखत्वामृतत्वश्रुतीनामस्मिन्पक्षे निर्वाहप्रदर्शनम् । |
| ,, | २१३ | ७ | प्रकरणविरोधाक्षेपस्तत्परिहारश्च । |
| ,, | २१३ | १२ | संप्रसादादध्युपदेशादिति सूत्रावयवव्याख्यानेन परमात्मैवेह भूमेति सिद्धान्तोपपादनम् । |
| ९ | २१६ | | भूम्नि श्रूयमाणानां धर्माणां परमात्मन्युपपत्तिप्रदर्शनम् । |
| ,, | २१६ | ११ | भूम्नो लक्षणस्य सुखत्वामृतत्वयोश्च प्राणेऽयोगप्रदर्शनम् । |

**३ अक्षराधिकरणम् ।**

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| १० | २१७ | | कस्मिन्नु खल्वाकाश इति वाक्ये अक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति संदिह्य वर्ण इति पूर्वपक्षस्य समर्थनम् । |
| ,, | २१८ | २ | अम्बरान्तधृतेरित्यस्य व्याख्यानेन परमेश्वर इति सिद्धान्तः । |
| ११ | २१८ | | अम्बरान्तधृतिः प्रधानवादिनोऽप्युपपद्यत इत्याशङ्कानिराकरणम् । |
| १२ | २१९ | | अम्बरान्तधरणस्याक्षरस्य वर्ण–प्रधान-अव्याकृतत्वस्य श्रुत्या व्यावर्तनादक्षरं ब्रह्मेति प्रतिपादनम् । |

**४ ईक्षतिकर्माधिकरणम् ।**

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| १३ | २१९ | | यः पुनरेतमिति वाक्ये किं परं ब्रह्माभिध्यातव्यमुच्यत आहोस्विदपरमिति संदिह्यापरमिति पूर्वपक्षोपपादनम् । |
| ,, | २२० | ७ | सूत्रव्याख्यानेन परमिति सिद्धान्तोपपादनम् । |
| ,, | २२२ | ५ | देशपरिच्छिन्नस्य फलस्योच्यमानत्वादिति पूर्वपक्षहेतोर्निराकरणम् । |

**५ दहराधिकरणम् ।**

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| १४ | २२२ | | अथ यदिदमस्मिन्निति वाक्ये यो दहरे पुण्डरीके दहराकाशः श्रुतः स किं भूताकाशोऽथवा विज्ञानात्माऽथवा परमात्मेति संशय्य संशयहेतोः प्रतिपादनम् । |
| १४ | २२३ | ५ | भूताकाश इतिपक्षस्य समर्थनम् । |
| ,, | २२३ | ८ | जीव इति पक्षस्य समर्थनम् । |
| ,, | २२४ | ४ | अथवा भूताकाश एव दहराकाशोस्तु दहराकाशान्तःस्थस्य ध्येयत्वेनोपादानादिति पक्षान्तरम् । |
| ,, | २२४ | ६ | उत्तरेभ्य इति सूत्रावयवव्याख्यानेन दहराकाशपदेन भूताकाशग्रहणासम्भवप्रदर्शनम् । |
| ,, | २२५ | १२ | जीवपक्षस्य निरसनम् । |
| ,, | २२६ | १२ | दहराकाशान्तःस्थस्य ध्येयत्वेनोपादानादित्यस्य निरसनम् । |
| १५ | २२७ | | पूर्वसूत्रे उत्तरेभ्यो हेतुभ्य इत्युक्तं तेषूत्तरहेतुषु गतिशब्दयोः प्रदर्शनम् । |
| १६ | २२९ | | सर्वजगद्धारणस्य । परमात्मलिङ्गस्य दहरे दर्शनाद्दहरस्य ब्रह्मत्वप्रतिपादनम् । |
| १७ | २२९ | | आकाशशब्दस्य परमात्मनि प्रसिद्धत्वादपि 'दहरोऽस्मिन्नन्तराकाशः' इति परमेश्वर एवोच्यत इति प्रतिपादनम् । |
| १८ | २३० | | वाक्यशेषे जीवस्यापि परामर्शाद्दहरोऽस्मिन्नन्तराकाश इत्यत्र जीव उच्यत इत्याशङ्कानिराकरणम् । |
| १९ | २३१ | | जीवाशङ्कायाः प्राजापत्यवाक्यात्पुनः समुत्थानम् । |
| ,, | २३३ | ४ | 'आविर्भूतस्वरूपस्तु' इति सूत्रावयवव्याख्यानेन सिद्धान्तनिरूपणम् । |
| ,, | २३४ | ११ | स्वेन रूपेणाभिनिष्पत्तिरित्यत्र विरोधाशङ्का । |
| ,, | २३५ | ५ | पूर्वाशङ्कापरिहारः । |
| ,, | २३६ | ३ | श्रुत्यर्थस्याविरुद्धतया आविर्भूतस्वरूपस्त्विति सूत्रशेषस्य युक्तत्वप्रतिपादनम् । |
| ,, | २३६ | ५ | प्रजापतिवाक्यसंदर्भपर्यालोचनयापि भेदस्य मिथ्यात्वप्रतिपादनम् । |
| ,, | २३७ | ९ | श्रुतेरेकदेशिव्याख्यानम् । |
| ,, | २३७ | ११ | तन्निरसनम् । |
| ,, | २३८ | १ | मतान्तरमुपन्यस्य तत्र शारीरकशास्त्रस्यैवोत्तरत्वाभिधानम् । |
| ,, | २३८ | ३ | शारीरकस्यार्थस्य संक्षेपेण कथनम् । |
| २० | २३९ | | जीवपरामर्शस्य गतिप्रदर्शनम् । |
| २१ | २३९ | | दहरशब्दाद्गम्यमानमल्पत्वं जीवस्यैवावकल्पत इत्युक्तस्य परिहारः । |

**६ अनुकृत्यधिकरणम् ।**

| सू० | पृ० | पं० | विषयः |
|---|---|---|---|
| २२ | २४० | | न तत्र सूर्य इति मुण्डकवाक्ये तच्छब्दो- |

सू० पृ० पं०

पात्तः किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति संदिह्य तेजोधातुरिति पूर्वपक्षस्य समर्थनम्।

२२ २४१ १ सूत्रव्याख्यानेन प्राज्ञ इति सिद्धान्तोपपादनम्।

,, २४२ दर्शितमाण्डूक्यश्रुतिगतसर्वशब्दस्यार्थान्तरमादाय व्याख्यानम्।

,, २४२ ७ न तत्रेति सतिसप्तमीति पक्षनिरसनम्।

२३ २४३ णिजध्याहारेण ब्रह्मणः सूर्याद्यविषयत्वे श्रुत्युक्ते स्मृतेः प्रमाणत्वेनोपन्यासः।

७ प्रमिताधिकरणम्।

२४ २४३ अङ्गुष्ठमात्र इति काठकवाक्ये श्रूयमाणोऽङ्गुष्ठमात्रः पुरुषः किं विज्ञानात्मा किंवा परमात्मेति संदिह्य परिमाणोपदेशात्स्मृतिसंवादाच्च जीवेति पूर्वपक्षसमर्थनम्।

,, २४४ ५ सूत्रव्याख्यानेन परमात्मेति सिद्धान्तप्रतिपादनम्।

२५ २४५ परिमाणोपदेशोपपत्तिप्रदर्शनम्।

,, २४६ २ पूर्वपक्षबीजनिरसनम्।

८ देवताधिकरणम्।

२६ २४६ संगतिप्रदर्शनपूर्वकं देवादीनामप्यस्ति ब्रह्मज्ञानाधिकार इति सिद्धान्तमुपन्यस्य संभवादित्यस्य व्याख्यानेन तत्समर्थनम्।

,, २४८ २ कर्मानधिकारकारणस्य ब्रह्मविद्यानधिकाराकारणत्वोपपादनम्।

२७ २४८ देवादीनां विग्रहवत्त्वे कर्मणि विरोधाशङ्का।

,, २४८ ११ अनेकप्रतिपत्तेरिति सूत्रावयवव्याख्यानेन परिहारः।

,, २४९ दर्शनादितिसूत्रावयवव्याख्यानेनोक्तप्रतिपत्तौ हेतुप्रदर्शनम्।

,, २५० ५ अनेकप्रतिपत्तिपदस्य अनेकेषु युगपदङ्गभावगमनपरतया व्याख्यानम्।

२८ २५० देवताया विग्रहवत्त्वे वैदिके शब्दे प्रामाण्यविरोधाशङ्का।

,, २५१ ५ नातः प्रभवादित्यस्य व्याख्यानेन परिहारः।

,, २५२ ४ इन्द्रादिपदानामुपाधिनिमित्तत्वकथनम्।

,, २५२ ६ जगतो ब्रह्मप्रभवत्वतः शब्दप्रभवत्वस्य वैलक्ष्ण्यप्रतिपादनम्।

,, २५२ ८ प्रत्यक्षानुमानाभ्यामित्यस्य व्याख्यानेन जगतः शब्दप्रभवत्वे मानप्रदर्शनम्।

,, २५३ ७ प्रत्यक्षानुमानशब्दयोः प्रमाणविभाजकोपाध्यवच्छिन्नपरतया व्याख्यानम्।

,, २५३ ११ जगतः शब्दप्रभवत्वमाक्षिप्य शब्दस्वरूपनिरूपणम्। स्फोटवादिमतनिरूपणम्। वर्णपक्षे दोषाः।

२८ २५५ ७ वर्णा एव तु शब्द इति सिद्धान्तोपपादनम्।

२९ २६० वेदनित्यत्वदृढीकरणम्।

३० २६१ महाप्रलये जगतो निर्लेपप्रलयाच्छब्दार्थसंबन्धस्यानित्यत्वाशङ्का।

,, २६१ ५ समाननामरूपत्वाचावृत्तावप्यविरोधः।

३१ २६५ मध्वादिष्वसंभवाद्ब्रह्मविद्यायां देवादीनां नाधिकार इति जैमिनिः।

३२ २६७ विग्रहाभावाचानधिकारो देवानाम्।

३३ २६८ बादरायणो भावमधिकारस्य देवादीनां मन्यते।

,, विग्रहाभावादित्येतस्य निरसनम्॥

९ अपशूद्राधिकरणम्।

३४ २७४ संगतिप्रदर्शनपूर्वकमधिकरणतात्पर्यमुक्त्वा शूद्रस्य विद्यायामधिकारोऽस्तीति पूर्वपक्षसमर्थनम्।

,, २७५ ७ न शूद्रस्याधिकार इति सूत्राद्बहिरेव सिद्धान्तः।

,, २७६ ६ संवर्गविद्यायां शुश्रूषोः शूद्रशब्देन परामर्शादित्येतस्य पूर्वपक्षबीजस्य सूत्रव्याख्यानेन शूद्रशब्दस्य यौगिकत्वप्रदर्शनेन च निरसनम्।

३५ २७८ प्रकरणनिरूपणादिना जानश्रुतेर्जातिशूद्रत्वनिराकरणम्।

३६ २७९ विद्योपदेशप्रदेशेषूपनयनसंस्कारपरामर्शाच्छूद्रस्य ब्रह्मविद्यायामनधिकाराभिधानम्।

३७ २८० शूद्रत्वाभावे निर्धारिते उपनयनेऽनुशासने च प्रवृत्तिप्रदर्शनेन शूद्रस्य विद्यायामनधिकारप्रतिपादनम्।

३८ २८० श्रवणादिप्रतिषेधादप्यनधिकार इति प्रतिपादनम्।

१० कम्पनाधिकरणम्।

३९ २८१ यदिदं किंचेति वाक्ये श्रूयमाणः प्राणो वज्रश्च क इति जिज्ञासायां क्रमेण वायुरशनिश्चेति पूर्वपक्षसमर्थनम्।

,, २८२ ८ पूर्वोत्तरालोचनाद्ब्रह्मेतिसिद्धान्तसमर्थनम्। प्राणवज्रशब्दयोर्ब्रह्मणि योगप्रदर्शनं च।

११ ज्योतिरधिकरणम्।

४० २८३ एष संप्रसाद इतिवाक्ये ज्योतिःशब्दं तेज उत परं ब्रह्मेति संशय्य तेज इति पूर्वपक्षसमर्थनम्।

,, २८४ ७ दर्शनादिति सूत्रावयवव्याख्यानेन ब्रह्मेति सिद्धान्तोपपादनम्।

१२ अर्थान्तरत्वादिव्यपदेशाधिकरणम्।

४१ २८६ आकाशो वै नामेति वाक्ये आकाशशब्दे

सू० पृ० पं०

भूताकाशं ब्रह्म वेति संदिह्य भूताकाश इति पूर्वपक्षसमर्थनम् ।

४१ २८६ ७ अर्थान्तरत्वादिव्यपदेशादित्येतद्व्याख्याय परं ब्रह्मेति सिद्धान्तोपपादनम् ॥

**१३ सुषुप्त्युत्क्रान्त्यधिकरणम् ।**

४२ २८७ बृहदारण्यके षष्ठे प्रपाठके कतम आत्मेत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः । तत्किं संसारिस्वरूपाख्यानपरं वाक्यमुतासंसारिस्वरूपप्रतिपादनपरमिति संशय्य संसारिस्वरूपमात्रविषयमिति पूर्वपक्षस्य समर्थनम् ।

,, २८८ ५ व्यपदेशादिति पूर्वसूत्रतोऽनुषज्य सूत्रव्याख्यानेन परमेश्वरोपदेशपरमिति सिद्धान्तः ।

,, २८९ १ पूर्वपक्षबीजनिरसनम् ।

४३ २८९ असंसारिस्वभावप्रतिपादनपरैः संसारिस्वभावप्रतिषेधपरैश्च शब्दैरसंसारिस्वरूपप्रतिपादनपरत्वोपपादनम् ॥

---

**प्रथमाध्याये चतुर्थः पादः ॥**

**१ आनुमानिकाधिकरणम् ।**

१ २९१ वृत्तसंकीर्तनपूर्वकं 'महतः परमव्यक्तम्' इति काठकश्रुतौ महदादीनां श्रवणात् प्रधानस्याशब्दत्वानुपपत्त्युपपादनम् ।

,, २९२ ५ काठकश्रुत्यन्तर्गताव्यक्तशब्दस्य प्रधानपरत्वनिरासः ।

,, २९३ शरीररूपकविन्यस्तगृहीतेरिति सूत्रावयवव्याख्यानेन अव्यक्तशब्दस्य शरीरपरत्वप्रतिपादनम् ।

,, २९५ ६ शरीरादिषु रथादिरूपककल्पनायाः प्रयोजनप्रदर्शनम् ।

,, २९५ ८ काठकग्रन्थस्यैकवाक्यतात्पर्ये लिङ्गप्रदर्शनम् ।

२ २९६ स्थूलशरीरारम्भकस्य भूतसूक्ष्मस्याव्यक्तत्वाच्छरीरेऽव्यक्तपदार्हत्वप्रतिपादनम् ।

३ २९६ बीजात्मकस्यानभिव्यक्तनामरूपस्य प्रागवस्थस्य जगतोऽभ्युपगमे प्रधानवादप्रसक्तोपपादनम् ।

,, २९७ १ उक्तायां प्रागवस्थायामविद्याशक्तिमायादिपदवाच्यत्वस्य तत्त्वान्यत्वाभावस्य च प्रदर्शनेनाव्याकृतवादस्य प्रधानवादाद्भेदप्रतिपादनम् ।

,, २९८ ६ सूत्रद्वयस्य वृत्तिकृत्संमतार्थप्रदर्शनम् ।

,, २९८ ११ तत्खण्डनम् ।

४ २९९ अत्राव्यक्तस्य ज्ञेयत्वेनोपास्यत्वेनवानुक्तत्वात्सांख्यैश्चोक्तत्वादयमव्यक्तशब्दो न सांख्याभिमतप्रधानपर इति प्रतिपादनम् ।

५ ३०० ज्ञेयत्वावचनस्यासिद्धत्वोपपादनम् ।

,, ३०० ११ अशब्दमस्पर्शमिति वाक्ये निचाय्यत्वेन श्रूयमाणस्य ब्रह्मत्वप्रतिपादनेन ज्ञेयत्वावचनासिद्धिनिरसनम् ।

६ ३०१ कठवल्लीषु अग्निजीवपरमात्मनां त्रयाणामेव वरप्रदानसामर्थ्यात्, वक्तव्यत्वेनोपन्यासात्प्रधानस्य नाव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वेति प्रतिज्ञायाग्न्यादित्रितयविषयकप्रश्नप्रतिवचनप्रदर्शनम् ।

,, ३०२ १ जीवपरमात्मविषयकप्रश्नयोरेकत्वे सूत्रविरोधाशङ्का ।

,, ३०२ ४ भेदे वरप्रदानान्तर्भावेऽपि प्रश्न इव प्रधानाख्यानमप्यदुष्टमित्याक्षेपः ।

,, ३०२ ६ वस्तुतो जीवपरमात्मनोरभेदात्प्रष्टव्याभेदेनैक एव प्रश्नः । सूत्रं त्ववास्तवभेदाभिप्रायमिति परिहारः ।

७ ३०४ सांख्यप्रसिद्धेर्वैदिकप्रसिद्ध्या विरोधादव्यक्तशब्दो वैदिके प्रयोगे न प्रधानमभिधातुमर्हतीति प्रतिपादनम् ।

**२ चमसाधिकरणम् ।**

८ ३०५ अजामेकामित्यादि मन्त्रेऽवगम्यमानत्वात्प्रधानस्याशब्दत्वमसिद्धमित्याक्षेपः ।

,, ३०६ ७ सूत्रोक्तचमसदृष्टान्तेनात्र प्रधानमेवाभिप्रेतमिति नियन्तुमशक्यमिति प्रतिपादनम् ।

,, ३०७ १ उत्तरसूत्रावतरणम् ।

९ ३०७ इयमजा चतुर्विधभूतग्रामप्रकृतिर्भूतत्रयलक्षणा प्रतिपत्तव्या, शाखान्तरे तेषामेव रोहितादिरूपताख्यानादिति प्रतिपादनम् ।

,, ३०७ ९ मायाप्रकरणादपि अजामन्त्रे न प्रधानाम्नानमिति प्रतिपादनम् । उत्तरसूत्रावतरणम् ।

१० ३०८ नायमजाशब्दस्तेजोबन्नलक्षणायामवान्तरप्रकृतौ जातिनिमित्तो नापि यौगिकः, किंतु रूपकक्लृप्त्युपदेशोयमिति प्रतिपादनम् ।

,, ३०९ २ मध्वादिवदित्यादिसूत्रावयवव्याख्यानम् ।

**३ संख्योपसंग्रहाधिकरणम् ।**

११ ३०९ 'यस्मिन्पञ्च पञ्चजनाः' इति वाक्ये पञ्चसंख्याविषयापरपञ्चसंख्याश्रवणेन पञ्चविंशतिसंख्याप्रतीतेः सांख्यसंख्यातपञ्चविंशतितत्त्वोपसंग्रहात्प्रधानस्य श्रुतिमत्त्वमिति पूर्वपक्षः ।

सू० पृ० पं०

११ ३१० ४ नानाभावादिति सूत्रावयवव्याख्यानम्—तत्त्वानां पञ्चशः पञ्चशः साधारणधर्माभावात्पञ्च संख्यानिवेशासंभवप्रतिपादनम् ।

„ ३११ २ अवयवद्वारेण पञ्चविंशतिसंख्या लक्ष्यत इति मतनिरसनम् ।

„ ३१२ ३ संख्यान्तरानाकाङ्क्षा-नोपसर्जनन्यायाभ्यां पूर्वपक्षनिरसनम् ।

„ ३१३ २ पञ्चपञ्चजनशब्दस्य अतिरेकादिति सूत्रावयवव्याख्यानेन पञ्चविंशतितत्त्ववाचकत्वनिरासः ।

„ ३१३ ९ पञ्चपञ्चजनशब्दस्य रूढत्वप्रतिपादनम् ।

१२ ३१४ प्राणादीनां पञ्चजनपदप्रतिपाद्यत्वप्रतिपादनम् ।

„ ३१५ एकदेशिमतद्वयप्रदर्शनम् ।

१३ ३१६ कण्वानां ज्योतिषा पञ्चसंख्यापूर्तिरिति प्रतिपादनम् ।

## ४ कारणत्वाधिकरणम् ।

१४ ३१६ १७ वृत्तकीर्तनपूर्वकं ब्रह्मणो जन्मादिकारणत्वं ब्रह्मविषयं गतिसामान्यं च वेदान्तवाक्यानां परस्परविरोधादाक्षिप्य कारणान्तरं परिग्रहीतव्यमिति पूर्वपक्षसमर्थनम् ।

„ ३१८ १० कार्यविषयके विगाने सत्यपि कारणनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वान्न ब्रह्मणः कारणत्वे विरोध इति सिद्धान्तप्रतिपादनम् ।

१५ ३२० असद्वा इदमग्र इत्यादिकारणविषयविगानस्य परिहारः ।

## ५ बालाक्यधिकरणम् ।

१६ ३२२ यो वै बालाक इत्यादि कौषीतकिवाक्ये किं जीवो वेदितव्यत्वेनोपदिश्यते उत मुख्यः प्राण उत परमात्मेति संशय्य प्राणपक्षसमर्थनम् ।

„ ३२३ ५ जीवपक्षसमर्थनम् ।

„ ३२४ ४ परमेश्वर एवेति सिद्धान्तोपपादनम् ।

„ ३२५ १ यस्य वैतत्कर्मेति वाक्ये कर्मपदस्य जगद्वाचित्वावधारणम् ।

„ ३२५ ९ जगत्कर्तृत्वाभिधानस्य प्रयोजनप्रदर्शनम् ।

१७ ३२६ पूर्वपक्षबीजस्य प्रतर्दनन्यायेन निरासः ।

„ ३२६ १२ प्रतर्दनाधिकरणेनास्य गतार्थत्वाशङ्का तन्निरासश्च ।

१८ ३२६ २७ जीवव्यतिरिक्तविषयकप्रश्नप्रतिवचनाभ्यां जीवपरामर्शस्य ब्रह्मप्रतिपत्त्यर्थत्वप्रतिपादनम् ।

„ ३२७ १० वाजसनेयिनां बालाक्यजातशत्रुसंवादगतपरमात्मप्रतिपादकवाक्यप्रदर्शनम् ।

## ६ वाक्यान्वयाधिकरणम् ।

१९ ३२८ न वा अरे पत्युः कामायेति वाक्ये द्रष्टव्यत्वेन विज्ञानात्मा उपदिश्यत उत परमात्मेति संदिह्य संशयकारणं चोक्त्वा विज्ञानात्मोपदेश इति पूर्वपक्षस्य समर्थनम् ।

„ ३३० ४ वाक्यान्वयादिति सूत्रव्याख्यानेन परमात्मोपदेश इति सिद्धान्तः ।

२० ३३१ आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञायाः सिद्धिं सूचयति विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमिति प्रतिपादनम् ।

२१ ३३१ जीवः परमात्मनोऽत्यन्तं भिन्नोऽपि ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नः परमात्मनैक्यमापद्यतेऽत उपपन्नमभेदेनोपक्रमणमित्यौडुलोमिमतप्रदर्शनम् ।

२२ ३३२ जीव आत्मनो नान्यो नापि तद्विकारः, किंत्वात्मैवाविद्याकल्पितावच्छेद इति काशकृत्स्नमतोपपादनम् ।

„ ३३२ १३ दर्शितमतत्रयं विभज्य युक्तायुक्तत्वविचारः ।

„ ३३३ ७ द्वितीयपूर्वपक्षबीजनिरासपरतया त्रिसूत्रीयोजना ।

„ ३३४ एतेभ्यो भूतेभ्य इतिश्रुतावुत्पत्त्युच्छेदावुक्तौ नाभेद इत्याक्षेपपरिहारः ।

„ ३३४ १६ कर्तृवचनेन शब्देनोपसंहारादिति तृतीयबीजपरिहारः । काशकृत्स्नीयमतस्य श्रुतिस्मृतिमत्त्वप्रदर्शनम् ।

## ७ प्रकृत्यधिकरणम् ।

२३ ३३७ ब्रह्मणो जगत्कारणत्वं प्रकृतित्वरूपमुत निमित्तत्वमिति संदिह्य निमित्तत्वमेवेतिपूर्वपक्षस्य समर्थनम् ।

„ ३३९ २ प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रावयवव्याख्यानेन प्रकृतित्वसाधनम् ।

„ ३४० ३ पञ्चम्याःश्रुत्यापि प्रकृतित्वसाधनम् ।

„ ३४० ५ निमित्तत्वसाधनम् ।

२४ ३४० अभिध्योपदेशात्प्रकृतित्वप्रतिपादनम् ।

२५ ३४० साक्षाद्ब्रह्मैव कारणमुपादाय प्रभवप्रलयाम्नानादपि ब्रह्मणः प्रकृतित्वमिति प्रतिपादनम् ।

२६ ३४१ कर्तृत्वकर्मत्वदर्शनादात्मनः प्रकृतित्वस्य निमित्तत्वस्य च प्रतिपादनम् ।

„ ३४१ ११ परिमाणादित्वस्यावच्छिद्य व्याख्यानम् ।

२७ ३४२ योनित्वेन पाठादपि प्रकृतित्वसाधनं पूर्वपक्षोक्तानुमानदूषणं च ।

सू० पृ० पं०

८ सर्वव्याख्यानाधिकरणम्।

२८ ३४३ अण्वादिकारणवादानां प्रधानकारणवादनिराकरणेन प्रधानमल्लनिराकरणन्यायेन निराकृतत्वबोधनम्।

इति प्रथमोऽध्यायः।

द्वितीयोऽध्यायः।

प्रथमः पादः॥

१ स्मृत्यधिकरणम्।

३४५ वृत्तवर्तिष्यमाणयोरध्याययोः संगतिप्रदर्शनाय संक्षेपतस्तात्पर्यार्थकथनम्।

१ ३४६ कपिलादिस्मृतीनां मोक्षसाधनप्रकाशकत्वाभावे आनर्थक्यापातात्तदविरोधेन वेदान्ता व्याख्यातव्या इति पूर्वपक्षसमर्थनम्।

„ ३४६ १३ पूर्वपक्षस्यायुक्तत्वाशङ्का तत्परिहारश्च।

„ ३४७ ७ नान्यस्मृतीत्यादिसूत्रशेषव्याख्यानेन स्मृतीनामविगानाच्छ्रौत एवार्थ आस्थेय इति प्रतिपादनम्।

„ ३४८ ९ कपिलादिस्मृतीनां प्रत्यक्षमूलत्वाशङ्का तन्निराकरणं च।

„ ३४९ ८ श्रुतिः कपिलादीनां ज्ञानातिशयं बोधयति तत्कथं तेषां वचनमप्रमाणमित्याशङ्कानिराकरणम्।

„ ३५० २ मन्वादीनां श्रौतत्वप्रदर्शनम्।

„ ३५० ६ उक्तेर्थे महाभारतसंमतिप्रदर्शनम्।

„ ३५० ११ मनुस्मृतेः श्रुतिसंवादप्रदर्शनम्। उपसंहारश्च।

२ ३५१ महदादीनामलोकवेदप्रसिद्धत्वात् सांख्यस्मृतेरनवकल्पनप्रदर्शनम्।

२ योगप्रत्युक्त्यधिकरणम्।

३ ३५२ औपनिषदेन तत्त्वज्ञानेनापेक्षणात्संवादबाहुल्याच्च वेदेन योगस्मृतिः प्रमाणमिति पूर्वपक्षः।

„ ३५३ ३ येनांशेन न विरुध्यते तत्रेष्टं प्रामाण्यं नान्यत्रेति सिद्धान्तः।

३ विलक्षणत्वाधिकरणम्।

४ ३५४ पूर्वपक्षेऽनवकाशत्वाक्षेपसमाधी।

„ ३५६ १ 'न विलक्षणत्वादस्य' इति सूत्रावयवव्याख्यानेन जगतोऽब्रह्मप्रकृतिकत्वरूपपूर्वपक्षसमर्थनम्।

„ ३५७ २ चेतनकारणश्रवणबलाज्जगतश्चेतनत्वोत्प्रेक्षा।

„ ३५७ ११ तथात्वं च शब्दादित्यस्य व्याख्यानेन जगतोऽचेतनत्वोपपादनम्।

„ ३५८ १३ अचेतनत्वेनाभिमतानां भूतेन्द्रियाणां चेतनत्वप्रदर्शकश्रुतीनामुपन्यासेनोत्तरसूत्रावतरणम्।

५ ३५८ दर्शितश्रुतीनां मृदादीनां वागादीनां वा न साक्षाच्चैतन्याभिधायकत्वं किंत्वयं तत्तदभिमानिदेवताव्यपदेश इत्येतस्योपपादनेन जगतो ब्रह्मविलक्षणत्वं व्यवस्थाप्याब्रह्मप्रकृतिकत्वरूपपूर्वपक्षोपसंहारः।

६ ३५९ विलक्षणत्वादिति हेतौ व्यभिचारोद्भावनम्।

„ ३५९ १४ प्रकृतिविकारभावे सारूप्यं हेतुरिति पूर्वपक्ष्यभिप्रायं गृहीत्वा तस्यात्रासंभवप्रदर्शनम्।

„ ३५९ १७ विलक्षणत्वहेतोस्त्रिधा विकल्प्य दूषणम्।

„ ३६० ६ ब्रह्मणि परिनिष्पन्नेपि प्रमाणान्तरानवकाशोपपादनम्।

„ ३६१ १६ मननविधानाद्ब्रह्मणस्तर्कविषयत्वमित्याक्षेपनिरासः।

„ ३६१ ६ विभागश्रुतिविरोधपरिहारः।

७ ३६२ असत्कार्यवादपरिहारः।

८ ३६३ जगद्ब्रह्मणोः कार्यकारणभावविषयकोपनिषद्दर्शने चतुर्विधसूत्रव्याख्यानेनासामञ्जस्यप्रदर्शनम्।

९ ३६३ प्रथमाऽसामञ्जस्यपरिहारः।

„ ३६५ ४ द्वितीयासामञ्जस्यपरिहारः।

„ ३६५ ११ तृतीयस्य परिहारः।

„ ३६५ १२ चतुर्थस्य परिहारः।

१० ३६६ वैलक्षण्यादीनां सांख्यपक्षसाधारणत्वप्रतिपादनम्।

११ ३६६ निरागमानां तर्काणामप्रतिष्ठितत्वोपपादनम्।

„ ३६७ ६ प्रतिष्ठिततर्कसंभवप्रदर्शनम्।

„ ३६८ ५ एवमप्यनिर्मोक्षप्रसङ्गः इति सूत्रावयवव्याख्यानेनागमानुसारितर्कवशेन जगतो ब्रह्मप्रकृतिकत्वव्यवस्थापनम्।

४ शिष्टापरिग्रहाधिकरणम्।

१२ ३६९ मन्वादिभिः शिष्टैरपरिगृहीतानामण्वादिवादानां प्रधानकारणवादनिराकरणकारणातिदेशेन निराकरणम्।

५ भोक्त्रापत्त्यधिकरणम्।

१३ ३७१ प्रमाणान्तरसिद्धभोक्तृभोग्यविभागबाधकत्वं श्रुतेरयुक्तमित्याक्षिप्य परिणामदृष्टान्तेन तन्निरासः।

| सू० | पृ० | पं० | |
|---|---|---|---|
| | | | **६ आरम्भणाधिकरणम् ।** |
| १४ | ३७२ | | सूत्रं व्याख्याय पूर्वाधिकरणपूर्वपक्षस्य विवर्ताश्रयणेन परमसमाधानम् । |
| ,, | ३७४ | ५ | अनेकान्तवादोत्थापनम् । |
| ,, | ३७५ | ३ | तन्निरसनम् । |
| ,, | ३७६ | ८ | एकत्वैकान्ताभ्युपगमे लौकिकप्रमाणव्याघातापादनम् । मोक्षशास्त्रस्यानृतत्वेन तद्बोधितात्मैकत्वस्यासत्यत्वापत्तिश्च । |
| ,, | ३७७ | ३ | प्रमाणानां प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपादनम् । |
| ,, | ३७७ | ९ | मोक्षशास्त्रानृतत्वापादितस्यात्मैकत्वानृतत्वस्य निरासः । |
| ,, | ३८० | ५ | अनेकत्वस्य श्रौतत्वात्तात्त्विकत्वाशङ्का तन्निरासश्च । |
| ,, | ३८१ | ९ | सूत्रस्य श्रुतिप्रतिज्ञाभ्यां विरोधाशङ्का तन्निरासश्च । |
| १५ | ३८३ | | कारणसत्वे एव कार्यस्योपलम्भात्कार्यस्य कारणानन्यत्वप्रतिपादनम् । |
| ,, | ३८४ | ४ | भावाच्चेति पञ्चम्यन्तपाठपक्षे सूत्रव्याख्यानम् । |
| १६ | ३८५ | | उत्पत्तेः प्राक्कारणात्मना कार्यस्य सत्त्वश्रवणात्तदनन्यत्वप्रतिपादनम् । |
| १७ | ३८६ | | असदेवेदमित्यादिश्रवणात्प्रागुक्तकार्यसत्वमाक्षिप्य तन्निरासः । |
| १८ | ३८६ | | कार्यस्य कारणानन्यत्वावगमकयुक्तिप्रदर्शनम्। |
| ,, | ३८७ | ७ | समवायदूषणम् । |
| ,, | ३८८ | २ | अवयविनोऽवयवातिरिक्तत्वनिराकरणम् । |
| ,, | ३८९ | ५ | असत्कार्यवादे उत्पत्तेरकर्तृत्वनिरात्मकत्वयोरापत्तिः । |
| ,, | ३९० | ११ | सिद्धान्ते कारकव्यापारस्यार्थवत्त्वोपपादनम् । |
| ,, | ३९१ | ११ | असत्कार्यवादिमते कारकव्यापारस्य निर्विषयत्वापत्तिः । |
| ,, | ३९२ | ५ | शब्दान्तरात्कार्यस्य कारणानन्यत्वोपपादनम् । |
| १९ | ३९२ | | संवेष्टितप्रसारितपटन्यायेन कार्यस्य कारणानन्यत्वप्रतिपादनम् । |
| २० | ३९२ | | कार्यस्योपादानाद्भेदसाधक—भिन्नकार्यकरत्वहेतौ प्राणान्तरभावेन व्यभिचारं दर्शयित्वा जगतो ब्रह्मानन्यत्वोपपादनम् । |
| | | | **७ इतरव्यपदेशाधिकरणम् ।** |
| २१ | ३९३ | | शारीरस्य ब्रह्मात्मत्वव्यपदेशाद्धितक्रियाद्यदर्शनाच्च चेतनकारणवादाक्षेपः । |
| २२ | ३९४ | | जीवेश्वरयोः कल्पितभेदाङ्गीकाराम्न हिताकरणादिदोषप्रसक्तिरिति सिद्धान्तप्रतिपादनम् । |
| २३ | ३९५ | | जीवप्राज्ञपृथक्त्वस्याश्मादिवदुपपादनम् । |
| | | | **८ उपसंहारदर्शनाधिकरणम् ।** |
| २४ | ३९६ | | अद्वितीयस्य ब्रह्मणो जगत्कारणत्वानुपपत्त्याशङ्का । |
| ,, | ३९६ | ७ | क्षीरादिवद्विचित्रपरिणामोपपत्तिप्रदर्शनेन तन्निरासः । |
| २५ | ३९७ | | दृष्टान्तवैषम्याच्चेतनकरणत्वाक्षेपः । |
| ,, | ३९७ | १० | देवादिदृष्टान्तेन तन्निरासः । |
| ,, | ३९८ | १ | दृष्टान्तदार्ष्टान्तिकयोरसमानत्वाक्षेपः । |
| ,, | ३९८ | ७ | कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वेन निरासः । |
| | | | **९ कृत्स्नप्रसक्त्यधिकरणम् ।** |
| २६ | ३९८ | | ब्रह्मणो निरवयवत्वात्क्षीरादिवत्परिणामः कृत्स्नस्य प्राप्नोतीति परिणामपक्षानुपपत्तिप्रदर्शनम् । |
| २७ | ३९९ | | ब्रह्मणो जगज्जन्मादिवद्विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानश्रवणाच्छब्दप्रमाणकत्वाच्च नास्मत्पक्षे कश्चिद्दोष इति प्रतिपादनम् । |
| ,, | ४०० | १४ | शब्दस्य विरुद्धार्थप्रत्यायनासामर्थ्यादेकदेशिव्याख्यानाक्षेपः । |
| ,, | ४०१ | ५ | विवर्तवादमाश्रित्य तत्परिहारः । |
| २८ | ४०१ | | ब्रह्मणि स्वरूपानुपमर्देनानेकाकारा सृष्टिर्भवतीति प्रतिपाद्य मायावादस्फुटीकरणम् । |
| २९ | ४०२ | | कृत्स्नप्रसक्त्यादिदोषाणां परपक्षेपि समानत्वप्रदर्शनम् । |
| | | | **१० सर्वोपेताधिकरणम् ।** |
| ३० | ४०३ | | ब्रह्मणः पूर्वदर्शितविचित्रशक्तिमत्त्वे प्रमाणश्रुत्युपन्यासः । |
| ३१ | ४०४ | | 'अकरणमश्रोत्रम्' इत्यादिशास्त्रेण परस्या देवतायाः विकरणत्वशासनात्सर्वशक्तियोगासंभवोपपादनम् । |
| ,, | ४०४ | ८ | तत्परिहारः । |
| | | | **११ प्रयोजनवत्त्वाधिकरणम् ।** |
| ३२ | ४०४ | ५ | परमात्मन आत्मप्रयोजनाभावाज्जगत्कर्तृत्वानर्हतया जगतो ब्रह्मोपादानत्वप्रतिक्षेपः । |
| ३३ | ४०५ | | प्रेक्षावत्प्रवृत्तेः श्वासप्रश्वासादिक्रियासु प्रयोजनव्यभिचारदर्शनाद्ब्रह्मणोऽपि जगत्सर्जने प्रवृत्तिर्नानुपपन्नेति प्रदर्शनम् । |
| | | | **१२ वैषम्यनैर्घृण्याधिकरणम् ।** |
| ३४ | ४०७ | | वैषम्यनैर्घृण्यप्रसंगादीश्वरस्य जगज्जन्मादिहेतुत्वाक्षेपः । |
| ,, | ४०७ | १० | सृज्यमानप्राणिधर्माधर्मसापेक्षत्वादीश्वरस्य न वैषम्यनैर्घृण्यप्रसक्तिरिति तन्निरासः । |

सू० पृ० पं०

„ ४०८ सापेक्षत्वे मानप्रदर्शनम् ।

३५ ४०८ सृष्टेः प्राक्कर्मणोऽभावादाद्यसृष्टेस्तुल्यत्वापत्तिः

„ ४०९ १ संसारस्यानादित्वात्तन्निरासः ।

३६ उपपत्तिसहितश्रुतिस्मृतिभ्यां संसारस्यानादित्वसाधनम् ।

**१३ सर्वधर्मोपपत्त्यधिकरणम् ।**

३७ ४१० स्वपक्षपरिग्रहप्रधानप्रकरणोपसंहारः ॥

---

**द्वितीयाऽध्याये द्वितीयः पादः २**

**१ रचनानुपपत्त्यधिकरणम् ।**

१ ४१२ अस्य द्वितीयपादस्य सांख्यादिदर्शननिराकरणरूपप्रयोजनप्रदर्शनम् ।

„ ४१२ ७ सांख्यादिदर्शननिराकरणस्य प्रयोजनवत्त्वप्रतिपादनम् ।

„ ४१३ ३ अत्र सांख्यादिपक्षप्रतिक्षेपस्य पौनरुक्त्यापादनम् ।

„ ४१३ ५ पूर्वतोऽस्य प्रतिक्षेपस्य विशेषप्रदर्शनम् ।

„ ४१३ ८ सर्वेषां बाह्याध्यात्मिकभेदानां सुखदुःखमोहात्मतयान्वीयमानत्वाज्जगत्कारणत्वेन प्रधानसिद्धिरिति पूर्वपक्षोपपादनम् ।

„ ४१४ २ विचित्ररचनानुपपत्तिरूपसूत्रोक्तहेतुप्रपञ्चनेन सांख्यानुमानदूषणम् ।

„ ४१५ ८ अन्वयादितिहेतावसिद्ध्युद्भावनम् ।

„ ४१६ ३ परिमाणादिहेतूनां दूषणम् ।

२ ४१७ प्रवृत्त्यनुपपत्तेरपि जगत्कारणत्वेनाचेतनानुमानदूषणम् ।

„ ४१७ ८ केवलस्य चेतनस्य प्रवृत्तिमाक्षिप्याचेतने तदुपपादनम् ।

„ ४१८ ७ प्रवृत्तिरहितत्वेऽपीश्वरस्य प्रवर्तकत्वोपपादनम् । प्रवर्त्याभावप्रयुक्तप्रवृत्त्यनुपपत्तिनिरसनम् ।

३ ४२० क्षीरादिवच्चेतनं स्वत एव प्रवर्तत इति सांख्यमतनिरसनम् ।

४ ४२० प्रवर्तकत्वाभावात् प्रधानप्रवृत्त्यनुपपत्तिप्रदर्शनम् ।

५ ४२१ तृणादिवत्स्वाभाविकप्रधानपरिणामवादनिरासः ।

६ ४२२ प्रधानस्य स्वाभाविकप्रवृत्तिमभ्युपगम्य तस्याः पुरुषार्थत्वखण्डनम् ।

७ ४२३ दृष्टान्तबलेन पुरुषस्य प्रवर्तकत्वमाशङ्क्य तन्निषेधः ।

८ ४२४ गुणानां साम्यावस्थायां परस्परमङ्गाङ्गिभावानुपपत्तेः प्रधानप्रवृत्त्यनुपपत्तिः ।

सू० पृ० पं०

९ ४२४ गुणानां वैषम्योपगमयोग्यत्वानुमानदूषणम् ।

१० ४२५ परस्परविरोधाच्छ्रुतिस्मृतिविरोधाच्च सांख्याभ्युपगमस्यासामञ्जस्यप्रतिपादनम् ।

„ ४२५ १२ तप्यतापकभावस्यैकस्मिन्ननुपपत्तेरौपनिषददर्शनमप्यसमञ्जसमिति सांख्यस्य प्रत्यवस्थानम् ।

„ ४२७ ३ तप्यतापकभावस्यापारमार्थिकत्वोपपादनम् ।

„ ४२८ ७ तस्य तात्त्विकत्वेऽनिर्मोक्षप्रसङ्गः ।

„ ४२९ २ औपनिषदस्य तदभावः ।

„ ४२९ ५ परमाणुकारणवादिमतानुवादेनोत्तरसूत्रावतरणम् ।

**२ महद्दीर्घाधिकरणम् ।**

११ ४३० परमाणुकारणवादिनां प्रक्रिया ।

„ ४३२ १ तत्प्रक्रियायामेव समानजातीयोत्पत्तिव्यभिचारं दर्शयित्वा चेतनाद्ब्रह्मणोऽचेतनस्य जगत उत्पत्तावनौचित्याभावप्रदर्शनम् ।

**३ परमाणुजगदकारणत्वाधिकरणम् ।**

१२ ४३४ परमाणुकारणवादिनां मते परमाणुसद्भावे उपपत्तिः।परमाणूनां जगत्कारणताप्रक्रिया च।

„ ४३५ ९ निमित्ताभावादाद्यकर्मानुत्पत्त्या तन्निबन्धनसंयोगानुपपत्तिः ।

„ ४३७ १ परमाणुषु संयोगस्वरूपानुपपत्तिः ।

„ ४३७ ५ महाप्रलयेऽणूनां विभागजनककर्मासंभवः ।

१३ ४३७ १८ समवायाभ्युपगमादणुवादस्यायुक्तत्वम् ।

१४ ४३९ परमाणूनां प्रवृत्तिस्वभावत्वादिचतुर्विधविकल्पासहत्वम् ।

१५ ४३९ रूपादिमत्त्वात्परमाणूनां सावयवत्वमनित्यत्वं च ।

„ ४४० ५ वैशेषिकोक्त-नित्यत्वकारणत्रयस्य परमाणौ व्युदासः ।

१६ ४४२ पृथिव्यादिभूतपरमाणूनामुपचितापचितगुणत्वदर्शनादपरमाणुत्वम् ।

१७ ४४३ शिष्टापरिगृहीतत्वात्परमाणुकारणवादस्यानादरणीयत्वम् ।

„ ४४३ ९ वैशेषिकतन्त्राभ्युपगतपदार्थाः । तेषां मिथो भेदे द्रव्याधीनत्वानुपपत्तिः ।

„ ४४४ ८ अयुतसिद्धत्वस्य त्रिधा विकल्प्य खण्डनम् ।

„ ४४६ ४ संबन्धिव्यतिरेकेण संबन्धस्याप्रामाणिकत्वम्।

„ ४४८ ५ परमाणूनां निरवयवत्वखण्डनम् ।

„ ४४९ ३ उपसंहारः ।

**४ समुदायाधिकरणम् ।**

१८ ४४९ वैनाशिकैकदेशिनोः सर्वास्तित्ववादिनोर्मतम्।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| १८ | ४५१ | २ | अस्मिन्मते समुदायिनामचेतनत्वात्संहन्तुः स्थिरस्यानभ्युपगमाच्च समुदायानुपपत्तिः । |
| १९ | ४५२ | | संहन्तुरभावेपि अविद्यादिषु परस्परप्रत्ययत्वेनानिशमावर्तमानेषु समुदायस्यार्थात्सिद्धिः । |
| ,, | ४५४ | ३ | अविद्यादीनामितरेतरोत्पत्तिमात्रनिमित्तत्वम्। |
| ,, | ४५४ | | अविद्यादिभिराक्षिप्तेऽपि संघाते निमित्ताभावात्तदसिद्धिः । |
| ,, | ४५५ | ४ | संघातानादित्वस्य विचारासहत्वम् । |
| ,, | ४५५ | ८ | भोक्त्रभावात्संघातासिद्धिः । |
| २० | ४५६ | | सौगतैरभ्युपगतस्याविद्यादीनामितरेतरोत्पत्तिनिमित्तत्वस्य निरसनम् । |
| २१ | ४५७ | | हेतुसत्त्वेऽपि फलोत्पत्तौ 'चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्ते' इति प्रतिज्ञाया उपरोधः । पूर्वक्षणस्योत्तरक्षणोत्पत्तिपर्यन्तमवस्थाने क्षणिकत्वप्रतिज्ञोपरोधः । |
| २२ | ४५८ | | प्रतिसंख्याऽप्रतिसंख्यानिरोधप्रत्याख्यानम् । |
| २३ | ४५९ | | अविद्यादिनिरोधप्रत्याख्यानम् । |
| २४ | ४६० | | आकाशस्य निरुपाख्यत्वप्रत्याख्यानम् । |
| २५ | ४६१ | | अनुस्मृतेरुपलब्धृक्षणिकताप्रत्याख्यानम् । |
| २६ | ४६४ | | अभावाद्भावोत्पत्तिप्रत्याख्यानम् । |
| २७ | ४६६ | | अभावाद्भावोत्पत्त्यभ्युपगमेऽप्रयतमानानामप्यभिमतसिद्ध्यापत्तिः । |

### ५ अभावाधिकरणम् ।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| २८ | ४६७ | | विज्ञानवादिमतम् । तत्कृतमेव बाह्यार्थाभावोपपादनम् । |
| ,, | ४७० | ५ | बाह्यार्थाभावखण्डनम् । |
| ,, | ४७० | ९ | उपलब्धिव्यतिरेकेण बाह्यार्थाभावशङ्का तन्निराकरणं च । |
| २९ | ४७६ | | जागरितप्रत्ययानां स्वप्नप्रत्ययवैधर्म्यम् । |
| ३० | ४७७ | | वासनानुपपत्त्या तद्वैचित्र्यानुपपत्तिः । |
| ३१ | ४७८ | | आलयविज्ञानस्य वासनानाश्रयत्वम् । शून्यवादस्य प्रमाणविप्रतिषिद्धत्वात् तन्निराकरणे सूत्रकृतोऽनादरः । |
| ३२ | ४७९ | | वैनाशिकसमयस्य सर्वथानुपपन्नत्वम् । |

### ६ एकस्मिन्नसंभवाधिकरणम् ।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| ३३ | ४८० | | जैनानां समयः । |
| ,, | ४८२ | ३ | सप्तभङ्गीनयखण्डनम् । |
| ३४ | ४८४ | | जीवस्य शरीरपरिमाणत्वखण्डनम् । |
| ३५ | ४८५ | | जीवस्य पर्यायेणावयवोपगमापगमखण्डनम् । |
| ,, | ४८६ | ७ | स्रोतःसन्ताननित्यतान्यायेन जीवस्य नित्यतावादखण्डनपरतया सूत्रव्याख्यानम् । |
| ३६ | ४८७ | | मोक्षावस्थाभाविजीवपरिमाणस्य नित्यत्वखण्डनम् । |

### ७ पत्यधिकरणम् ।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| ३७ | ४८७ | | केवलाधिष्ठात्रीश्वरकारणवादः । |
| ,, | ४८८ | ९ | तस्यासामञ्जस्यम् । |
| ३८ | ४९० | | ईश्वरस्य प्रधानादिना संबन्धानुपपत्तिः । |
| ३९ | ४९१ | | प्रधानस्याधिष्ठेयत्वानुपपत्तिः । |
| ४० | ४९१ | | पुरुषस्य करणवदीश्वरस्य प्रधानाधिष्ठातृत्वे भोगादिप्रसङ्गः । |
| ,, | ४९२ | ३ | सूत्रद्वयस्य ईश्वरस्य सशरीरत्वापत्तिपरतया व्याख्यानम् । |
| ४१ | ४९१–९२ | | ईश्वरस्यान्तवत्त्वासर्वज्ञत्वापत्तिः । |

### ८ उत्पत्त्यसंभवाधिकरणम् ।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| ४२ | ४९४ | | भागवतमतम् । |
| ,, | ४९५ | ५ | जीवस्योत्पत्तिखण्डनम् । |
| ४३ | ४९५ | | मनसो जीवप्रभवत्वखण्डनम् । |
| ४४ | ४९६ | | संकर्षणादीनां वासुदेवानिर्विशेषत्वम् । |
| ४५ | ४९७ | | अस्मिन् शास्त्रे बहुविधविप्रतिषेधोपलम्भः । |

## द्वितीयाऽध्याये तृतीयः पादः ३

### १ वियदधिकरणम् ।

| सू० | पृ० | पं० | विषय |
|---|---|---|---|
| १ | ४९८ | | आकाशस्योत्पत्त्यश्रवणादनुत्पत्तिः । |
| २ | ४९९ | | तैत्तिरीयश्रुतावाकाशस्योत्पत्तिश्रवणेऽपि तदनुरोधेनासहायस्याधिगतस्य ससहायत्वकल्पनमयुक्तम् । |
| ३ | ५०० | | वियदुत्पत्तिश्रुतेर्गौणत्वम् । |
| ४ | ५०१ | | श्रुतित आकाशस्याजत्वम् । |
| ५ | ५०२ | | एकस्यापि संभूतशब्दस्य विषयविशेषवशात् ( आकाशे ) गौणत्वम् । |
| ,, | ५०२ | ८ | ब्रह्मणि अद्वितीयत्वप्रतिज्ञायाः स्वकार्यापेक्षया लक्षणान्यत्वाभावाचोपपत्तिः । |
| ,, | ५०३ | २ | ब्रह्माकाशयोरभेदोपचारादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः । |
| ६ | ५०३ | | सिद्धान्तः—प्रतिवेदान्तं दृश्यमानप्रतिज्ञायाः कृत्स्नस्य जगतो ब्रह्मणोऽव्यतिरेक एवानुपरोधः । |
| ,, | ५०३ | १५ | शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्ध्यवगमः । |
| ,, | ५०४ | ९ | वियदुत्पत्तिश्रुतीनां छान्दोग्यश्रुत्याऽविरोधः । |
| ,, | ५०६ | ७ | आकाशस्य सर्वेणानन्यदेशकालत्वात्क्षीरोदकन्यायेन प्रतिज्ञोपपादनदूषणम् । |
| ७ | ५०७ | | आकाशोत्पत्तावसंभवाशङ्कानिराकरणम् । |
| ,, | ५०९ | ५ | नचाकाशस्यैकजातीयमनेकमस्त्यारम्भकद्रव्यमित्युद्भावितविरोधस्य परिहारः । |

सू० पृ० पं०

७ ५१० १० आकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इत्याक्षेपपरिहारः ।

,, ५११ १ आकाशेऽजत्वसाधकवैधर्म्यहेतोर्दुष्टत्वम् ।

,, ५११ ५ शब्दाच्चेत्यादेर्निरसनम् ॥

२ मातरिश्वाधिकरणम् ।

८ ५१२ वियदतिदेशेन वायोरुत्पत्तिसाधनम् ।

३ असंभवाधिकरणम् ।

९ ५१३ ब्रह्मणः सदात्मकस्य न कुतश्चिदुत्पत्तिः ।

४ तेजोधिकरणम् ।

१० ५१५ तेजस आकाशवायुप्रणाड्या ब्रह्मयोनित्वम् ।

५ अबधिकरणम् ।

११ ५१७ अपां तेजोयोनित्वम् ।

६ पृथिव्यधिकाराधिकरणम् ।

१२ ५१७ ता आप ऐक्षन्तेति वाक्ये श्रूयमाणस्यान्नशब्दस्य प्रकरणादिभ्यः पृथिवीपरत्वम् ।

७ तदभिध्यानाधिकरणम् ।

१३ ५१९ ईश्वराधिष्ठितेभ्यो वियदादिभ्य उत्तरोत्तरभूतसर्गः ।

८ विपर्ययाधिकरणम् ।

१४ ५२१ भूतानामुत्पत्तिक्रमविपर्ययेणाप्ययक्रमः ।

९ अन्तराविज्ञानाधिकरणम् ।

१५ ५२२ बुद्धीन्द्रियमनसां भौतिकत्वान्न भूतानामुत्पत्तिप्रलयक्रमभङ्गः ।

१० चराचरव्यपाश्रयाधिकरणम् ।

१६ ५२४ जीवात्मनो न देहाश्रयौ स्थूलावुत्पत्तिप्रलयौ ।

११ आत्माधिकरणम् ।

१७ ५२५ जीवस्याकाशादीनामिव नोत्पत्तिप्रविलयौ ।

१२ ज्ञाधिकरणम् ।

१८ ५२८ जीवात्मनो नित्यचैतन्यस्वरूपत्वम् ।

१३ उत्क्रान्तिगत्यधिकरणम् ।

१९ ५३० जीवस्योत्क्रान्तिगत्यागतिश्रवणादणुत्वम् ।

२० ५३१ गमेः कर्तृस्थभावत्वाद्गत्यागती अमध्यमपरिमाणस्याणुत्वे एव संभवतः ।

२१ ५३२ महत्त्वश्रुतेः परप्रकरणस्थत्वान्न जीवविषयत्वम् ।

२२ ५३३ साक्षादस्याणुत्ववाचिशब्दश्रवणादुन्मानश्रुतेश्चाणुत्वं जीवस्य ।

२३ ५३३ हरिचन्दनबिन्दुः सकलदेहव्यापिनमाह्लादमिवात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति ।

२४ ५३४ उक्तचन्दनदृष्टान्तस्य दार्ष्टान्तिकस्य च वैषम्याशङ्का तत्परिहारश्च ।

२५ ५३४ मणिप्रदीपादीनामपवरकैकदेशवर्तिनामपि प्रभा यथाऽपवरकव्यापिनी एव मणोरपि जीवस्य चैतन्यं सकलदेहव्यापि ।

२६ ५३५ अणोरपि जीवस्य चैतन्यव्यतिरेको भविष्यति गन्धवत् ।

२७ ५३६ आत्मनश्चैतन्येन गुणेन समस्तशरीरव्यापित्वं श्रुतिर्दर्शयति ।

२८ ५३६ आत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनात्मनः शरीरव्यापित्वम् ।

२९ ५३६ अथ सिद्धान्तः—परब्रह्मतादात्म्योपदेशाज्जीवस्य विभुत्वम् । त्वक्संबन्धेऽपि सकलशरीरगतवेदनानुपपत्तिः ।

,, ५३७ ४ गुणव्याप्तिखण्डनम् ।

,, ५३८ २ बुद्धिगुणसारत्वादणुत्वादिव्यपदेशः । स्वशब्दोन्मानादीनां निरासः ।

३० ५३९ सम्यग्दर्शनेन संसारित्वनिवृत्तिपर्यन्तमात्मनो बुद्ध्या संयोगो न शाम्यतीति न बुद्धिसंयोगविनाशस्यावश्यंभावादसंसारित्वप्रसक्तिः ।

३१ ५४० ४१ सुषुप्तिप्रलययोरपि सूक्ष्मात्मना बुद्धिसंयोगस्य सत्त्वम् ।

३२ ५४१ अन्तःकरणानभ्युपगमे नित्योपलब्ध्यनुपलब्धिप्रसङ्गः प्रतिबन्धककल्पनापत्तिर्वा ।

१४ कर्त्रधिकरणम् ।

३३ ५४२ शास्त्रार्थवत्त्वाज्जीवस्य कर्तृत्वम् ।

३४ ५४३ विहारोपदेशाच्च कर्तृत्वम् ।

३५ ५४३ जीवप्रक्रियायां करणानामुपादानसंकीर्तनाच्च ।

३६ ५४३ लौकिकवैदिकप्रक्रियासु जीवस्य कर्तृत्वव्यपदेशाच्च ।

३७ ५४४ स्वतन्त्रस्यापि जीवस्योपलब्धिवदिष्टानिष्टप्रवृत्तिरविरुद्धा ।

३८ ५४५ विज्ञानस्य कर्तृत्वे शक्तिविपर्ययापत्तिः ।

३९ ५४५ समाध्युपदेशस्यात्मनः कर्तृत्वमन्तरेणानुपपत्तिः ।

१५ तक्षाधिकरणम् ।

४० ५४५ शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वं जीवस्येति पूर्वपक्षः । अनिर्मोक्षप्रसङ्गादुपाधिनिमित्तमिति सिद्धान्तः ।

१६ परायत्ताधिकरणम् ।

४१ ५५१ ईश्वरमनपेक्ष्य कर्तृत्वं जीवस्येति पूर्वपक्षः ।

,, ५५२ ८ ईश्वरायत्तमिति राद्धान्तः ।

सू० पृ० पं०

४२ ५५३ जीवस्य धर्मावपेक्ष्येश्वरः कारयिताऽतो न वैषम्यनैर्घृण्यापत्तिः । संसारस्यानादित्वान्न परायत्तकर्तृत्वेपि जीवे ईश्वरस्य कृतप्रयत्नापेक्षत्वानुपपत्तिः ।

१७ अंशाधिकरणम् ।

४३ ५५४ भेदाभेदावगमाज्जीव ईश्वरस्यांशः ।
४४ ५५५ मन्त्रवर्णाच्चांशत्वावगमः ।
४५ ५५६ भगवद्गीतायामपि जीवस्यांशत्वश्रवणम् ।
४६ ५५६ परमात्मनो देहाद्यभिमानाभावान्न जैवदुःखेन दुःखित्वम् ।
४७ ५५८ व्यासादीनां जैवेन दुःखेन न परमात्मा दुःखायत इति स्मृतिः ।
४८ ५५९ एकस्मिन्नेव परमात्मनि सर्वभूतेषु जीवभावेन स्थितेऽपि देहसंबन्धान्नानुज्ञापरिहारानुपपत्तिः ।
४९ ५६० ऐकात्म्याभ्युपगमेऽप्युपाध्यसंतानान्न कर्मफलव्यतिकरः ।
५० ५६१ जीवः परमात्मन आभास इत्यतोऽप्यव्यतिकरः कर्मफलयोः ।
„ ५६१ ६ परपक्ष एवैष व्यतिकरः ।
५१ ५६२ अदृष्टस्यानियामकत्वम् ।
५२ ५६२ अभिसंध्यादीनामपि नियमहेतुत्वानुपपत्तिः ।
५३ ५६३ शरीरावच्छिन्नात्ममनःसंयोगस्याप्यनियामकत्वम् ।

---

द्वितीयाऽध्याये चतुर्थः पादः ४

१ प्राणोत्पत्त्यधिकरणम् ।

१ ५६५ प्राणानामुत्पत्त्याम्नानानाम्नानाभ्यामप्रतिपत्तिरुत्पत्तिश्रुतेर्वा गौणत्वम् । तथाशब्देऽसंबद्धत्वाक्षेपः, तत्परिहारश्च ।
„ ५६७ २ प्राणानां ब्रह्मविकारत्वम् ।
२ ५६७ प्राणोत्पत्तिश्रुतेर्गौणत्वासंभवः ।
३ ५६९ एकस्यैव जन्मवाचिपदस्य प्राक्प्राणेषु श्रुतस्योत्तरत्राकाशादिषु श्रवणादपि प्राणानां जन्मश्रुतेर्मुख्यत्वम् ।
४ ५६९ वाक्प्राणमनसां तेजोबन्नपूर्वकत्वाभिधानादपि प्राणोत्पत्तिश्रुतेर्मुख्यत्वम् ॥

२ सप्तगत्यधिकरणम् ।

५ ५७० सप्तैव प्राणा इति पूर्वपक्षस्य समर्थनम् ।
६ ५७१ एकादश इति सिद्धान्तः ।

३ प्राणाणुत्वाधिकरणम् ।

७ ५७४ ७५ प्राणानां सूक्ष्मत्वं परिच्छिन्नत्वं च ।

सू० पृ० पं०

४ प्राणश्रैष्ठ्याधिकरणम् ।

८ ५७६ श्रेष्ठप्राणस्यापि ब्रह्मविकारत्वम् ।

५ वायुक्रियाधिकरणम् ।

९ ५७७ मुख्यप्राणो वायुर्वा करणवृत्तिर्वेति पूर्वपक्षः । अध्यात्ममापन्नो वायुभेद एव प्राण इति सिद्धान्तः ।
१० ५७९ प्राणस्य न जीववत्स्वातन्त्र्यम् ।
११ ५७९ देहेन्द्रियविधारणप्रयोजनकत्वात्प्राणस्य न विषयान्तरप्रसङ्गलक्षणो दोषः ।
१२ ५८० प्राणस्य कार्यभेदापेक्षाः पञ्च वृत्तयः ।

६ श्रेष्ठाणुत्वाधिकरणम् ।

१३ ५८१ मुख्यप्राणस्य सौक्ष्म्यपरिच्छेदरूपाणुत्ववत्त्वम् ।

७ ज्योतिराद्यधिकरणम् ।

१४ ५८२ प्राणानां स्वमहिम्नैव स्वकार्यप्रवृत्तिरिति पूर्वपक्षः ।
„ ५८३ १ ज्योतिराद्यधिष्ठितानामेव प्रवृत्तिरिति सिद्धान्तः ।
१५ ५८४ शारीरस्यैव भोक्तृत्वं न प्राणाधिष्ठितानां देवतानाम् ।
१६ ५८४ शारीरेणैव प्राणानां नित्यसंबन्धश्रवणान्न करणनियन्त्रीणां देवतानां भोक्तृत्वम् ।

८ इन्द्रियाधिकरणम् ।

१७ ५८५ वागादीनामेकादशप्राणानां मुख्यप्राणवृत्तित्वमिति पूर्वपक्षः ।
„ ५८५ १० तत्त्वान्तराणीति सिद्धान्तः ।
१८ ५८६ वागादिभ्यो भेदेन प्राणस्य श्रवणादपि तत्त्वान्तरत्वं वागादीनाम् ।
१९ ५८७ विरुद्धधर्मवत्त्वाच्च तथा ।

९ संज्ञामूर्तिक्लृप्त्यधिकरणम् ।

२० ५८८ जीवकर्तृकं नामरूपव्याकरणमिति पूर्वपक्षः ।
„ ५८९ ३ त्रिवृत्कुर्वतः परमेश्वरस्यैव नामरूपव्याकर्तृत्वम् ।
२१ ५९१ अध्यात्मं त्रिवृत्करणम् ।
२२ ५९१ अविशेषात्सर्वेषां त्र्यात्मकत्वेऽपि भूयस्त्वादेव तेजोबन्नविशेषवादस्य भूतभौतिकेषूपपत्तिः ।

---

तृतीयोऽध्यायः ।

प्रथमः पादः ।

१ तदन्तरप्रतिपत्त्यधिकरणम् ।

१ ५९३ पूर्वदेहाद्देहान्तरं प्रपद्यमानो जीवो देहबीज-

सू० पृ० पं०
भूतसूक्ष्मैरसंपरिष्वक्तो गच्छतीति पूर्वपक्षः ।
१ ५९५ २ भूतसूक्ष्मैः संपरिष्वक्तो गच्छतीति सिद्धान्तः ।
२ ५९७ अपां त्र्यात्मकत्वादप्शब्देन सर्वेषां देहबीजभूतानां भूतसूक्ष्माणां ग्रहणम् ।
३ ५९८ प्राणगतिश्रवणादपि तदाश्रयभूतानामपां भूतान्तरोपसृष्टानां गतिः ।
४ ५९८ वागादीनामग्न्यादिगतिश्रुतेर्भाक्तत्वम् ।
५ ५९९ प्रथमाग्नौ होम्यद्रव्यत्वेनाप एव श्रद्धाशब्देनाभिप्रेयन्ते ।
६ ६०० आहुतीमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति ।
७ ६०१ इष्टादिकारिणां श्रूयमाणस्यान्नभावस्य भाक्तत्वम् ।

## २ कृतात्ययाधिकरणम् ।

८ ६०३ चन्द्रमण्डलमधिरूढा भुक्तभोगा निरनुशया अनुरोहन्तीति पूर्वपक्षः ।
,, ६०४ ६ सानुशया एवावरोहन्तीति सिद्धान्तः ।
९ ६०९ चरणश्रुतिरनुशयं लक्षयति ।
१० ६०९ इष्टादिकर्मजातस्य चरणापेक्षित्वान्न चरणानर्थक्यम् ।
११ ६१० सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति बादरिः ।

## ३ अनिष्टादिकार्यधिकरणम् ।

१२ ६११ इष्टादिकारिणामितरेषां च समाना चन्द्रप्राप्तिः
१३ ६११ इष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे ।
१४ ६१२ इतरेषां यमायत्तं कपूयकर्मविपाकं स्मरन्ति ।
१५ रौरवप्रमुखान्सप्त नरकाननिष्टादिकारिणः प्राप्नुवन्ति ।
१६ ६१२ यमप्रयुक्तानामेव चित्रगुप्तादीनां रौरवादिष्वधिष्ठातृत्वम् ।
१७ ६१२ क्षुद्रजन्तुलक्षणतृतीयमार्गोपदेशादपि नानिष्टादिकारिणश्चन्द्रमसं प्राप्नुवन्ति ।
१८ ६१३ देहलाभायाहुतीनां पञ्चसंख्यानियमो नादर्तव्यः ।
१९ ६१४ द्रोणधृष्टद्युम्नादीनां शरीरारम्भं प्रत्याहुतिसंख्यानादरो भारतादिषु स्मर्यते ।
२० ६१४ स्वेदजोद्भिज्जयोरप्याहुतिसंख्यानादरो दृश्यते।
२१ ६१४ 'आण्डजं जीवजमुद्भिज्जं च' इति छान्दोग्यश्रुतावुद्भिज्जशब्देन स्वेदजोपसंग्रहः ।

## ४ साभाव्यापत्त्यधिकरणम् ।

२२ ६१५ चन्द्रमसोऽवरोहन्त आकाशादिसाम्यं प्रतिपद्यन्ते न स्वरूपम् ।

## ५ नातिचिराधिकरणम् ।

२३ ६१६ १७ अनुशयिनां व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः ।

## ६ अन्याधिष्ठिताधिकरणम् ।

२४ ६१७ अनुशयिनां भोगाधिष्ठानं व्रीहियवादयः स्थावरा भवन्तीति पूर्वपक्षः ।
,, ६१८ ७ क्षेत्रज्ञान्तराधिष्ठितेष्वेव व्रीहियवादिष्वनुशयिनां संसर्गमात्रप्रतिपत्तिः ।
२५ ६२० आध्वरिकस्य कर्मणोऽविशुद्धत्वाक्षेपनिरासः ।
२६ ६२१ व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भावाम्नानादपि व्रीह्यादिसंश्लेषमात्रं तद्भावः ।
२७ ६२१ योनेः शरीरश्रुतेरपि व्रीह्यादिसंश्लेषमात्रमनुशायिनां तज्जन्म ।

---

## तृतीयाऽध्याये द्वितीयः पादः ॥ २ ॥

## १ संध्याधिकरणम् ।

१ ६२२ संध्ये स्थाने सृष्टिः पारमार्थिकी ।
२ ६२३ कैश्चित्सांध्ये स्थाने प्राज्ञस्यात्मनः कामानां निर्मातृत्वाम्नानाच्च ।
३ ६२३ स्वप्नदर्शनस्य मायामात्रत्वम् ।
४ ६२४ स्वप्नस्य भविष्यतोः साध्वसाधुनोः सूचकत्वम् ।
,, ६२६ १६ रथादिसृष्टिवचनस्य भाक्तत्वम् ।
,, ६२७ ६ सांध्ये स्थाने जीवस्य निर्मातृत्वम् ।
५ ६२८ जीवस्येश्वरांशत्वेऽप्यविद्यादिव्यवधानेन ज्ञानैश्वर्यतिरोधानान्न सांकल्पिकी रथादिसृष्टिः ।
६ ६२८ देहेन्द्रिययोगाज्जीवस्य ज्ञानैश्वर्यतिरोभावः ।

## २ तदभावाधिकरणम् ।

७ ६२९ नाडीपुरीतद्ब्रह्मणां परस्परनिरपेक्षतया सुषुप्तिस्थानत्वमिति पूर्वपक्षः ।
,, ६३१ ५ नाडीपुरीतद्ब्रह्मणां समुच्चितानां सुषुप्तिस्थानत्वं तत्रापि नाडीपुरीततोर्द्वारत्वं ब्रह्मण एव स्थानत्वम् ।
८ ६३५ ब्रह्मणः सकाशाज्जीवस्य प्रबोधश्रुतेरात्मैव सुषुप्तिस्थानम् ।

## ३ कर्मानुस्मृतिशब्दविध्यधिकरणम् ।

९ ६३५ सति संपत्तेः प्रबुध्यमानो यः कश्चित्प्रबुध्यत इति पूर्वपक्षः । यो यत्र सुप्तः स एव जीवस्तत्र प्रबुध्यत इति सिद्धान्तः ।

## ४ मुग्धाधिकरणम् ।

१० ६३७ ३८ मुग्धावस्थाया जागरितस्वप्नसुषुप्तमृत्यन्यतमावस्थायामन्तर्भाव इति पूर्वपक्षः ।

सू० पृ० पं०

,, ६३८ ४ जागरितादिष्वन्तर्भावनिरासः।

,, ६३९ ७ अर्धसंपत्तिरिति सिद्धान्तः।

५ उभयलिङ्गाधिकरणम्।

११ ६४० ब्रह्मण उभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गत्वमिति पूर्वपक्षः। निर्विशेषलिङ्गकत्वमिति राद्धान्तः।

१२ ६४१ प्रत्युपाधिभेदं ब्रह्मणोऽभेदश्रवणान्न सविशेषत्वम्।

१३ ६४२ भेददर्शननिन्दापूर्वकमभेदसमाम्नानादपि प्रपञ्चस्य ब्रह्मैकस्वभावत्वम्।

१४ ६४२ सविशेषब्रह्मविषयकवाक्यानामाकारे तात्पर्याभावादनाकारत्वं ब्रह्मणः।

१५ ६४३ कल्पितद्वैते सावकाशत्वादाकारवद्विषयश्रुतीनामवैयर्थ्यम्।

१६ ६४३ श्रुत्या चैतन्यमात्रस्वरूपत्वप्रतिपादनाद्ब्रह्म निर्विशेषम्।

१७ ६४४ श्रुतिस्मृत्योः पररूपप्रतिषेधेन ब्रह्मोपदेशादपि ब्रह्मणो निर्विशेषत्वम्।

१८ ६४४ ब्रह्मणो निर्विशेषत्वादेव जलसूर्यकोपमोपादानम्।

१९ ६४५ दृष्टान्तवैषम्यम्।

२० ६४५ अवैषम्योपपादनम्।

२१ ६४५ श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वनुप्रवेशं दर्शयति।

,, ६४६ ५ केचिदत्र ११ सूत्रमारभ्य १४ सूत्रपर्यन्तमेकं १५ सूत्रमारभ्य २१ सूत्रपर्यन्तमपरमित्यधिकरणद्वयं कल्पयन्ति तन्मतस्योपन्यासपूर्वको निरासः॥

६ प्रकृतैतावत्त्वाधिकरणम्।

२२ ६५२ ब्रह्मणो रूपद्वयं तद्विशिष्टं ब्रह्म चैतदुभयं प्रतिषिध्यतेऽथवा ब्रह्मैव प्रतिषिध्यत इति पूर्वपक्षः।

,, ६५४ २ पक्षद्वयस्य निराकरणम्।

,, ६५५ ७ रूपप्रपञ्चं प्रतिषेधति, ब्रह्म परिशिनष्टीति सिद्धान्तः।

२३ ६५७ अग्राह्यत्वाद्ब्रह्मणोऽसत्त्वमाशङ्क्याथाव्यक्तत्वादग्राह्यत्वोपपादनम्।

२४ ६५८ संराधनकाले योगिभिर्ब्रह्म साक्षात्क्रियते।

२५ ६५८ उपाधिनिमित्त एवात्मनो भेदः स्वतस्त्वैकात्म्यम्।

२६ ६५८ जीवस्य ब्रह्मात्मत्वश्रुतिवशादपि नानात्वस्यौपाधिकत्वम्।

सू० पृ० पं०

२७ ६५८ भेदाभेदवादः।

२८ ६५९ प्रकाशाश्रयवद्भेदव्यपदेशो जीवपरयोः।

२९ ६५९ प्रकाशादिवदवैशेष्यस्यौचित्यम्।

३० ६५९ परमात्मनोऽन्यस्य चेतनस्य प्रतिषेधाच्च पूर्वोक्त एव सिद्धान्तः।

७ पराधिकरणम्।

३१ ६६० सेत्वादिव्यपदेशेभ्योऽस्ति ब्रह्मव्यतिरिक्तं वस्त्विति पूर्वपक्षः।

३२ ६६१ सेतुव्यपदेशो जगतस्तन्मर्यादानां च विधारकत्वेनात्मस्तुत्यर्थः।

३३ ६६२ उन्मानव्यपदेशस्योपासनार्थत्वं न ब्रह्मव्यतिरिक्तवस्तुसत्ताप्रतिपादनार्थत्वम्।

३४ ६६३ संबन्धभेदस्योपाधिभेदापेक्षित्वम्।

३५ ६६३ संबन्धभेदस्यौपाधिकत्वोपपादनम्।

३६ ६६४ श्रुतिभिरपि ब्रह्मणः परं वस्तु प्रतिषिध्यते।

३७ ३६४ सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन व्याप्तिवचनशब्दैश्चात्मनः सर्वगतत्वं सिध्यति।

८ फलाधिकरणम्।

३८ ६६५ कर्मफलं न कर्मणः संभवति नाप्यपूर्वात्।

३९ ६६६ श्रुतेरपीश्वरस्य फलहेतुत्वम्।

४० ६६६ जैमिनिस्त्वाचार्यो धर्मात्फलं मन्यते।

४१ ६६८ बादरायणस्त्वीश्वरमेव फलहेतुं मन्यते।

---

तृतीयाध्याये तृतीयः पादः॥ ३॥

१ सर्ववेदान्तप्रत्ययाधिकरणम्।

१ ६७० विज्ञैक्याद्विज्ञानाभेदाभेदचिन्तावतारा क्षेपस्तत्परिहारश्च।

,, ६७१ नामरूपविभेदादिभ्यः प्रतिवेदान्तं विद्याभेद इति पूर्वपक्षः।

,, ६७५ १ चोदनाद्यविशेषाद्यान्येकस्मिन्वेदान्ते विज्ञानानि तान्येव वेदान्तान्तरेष्विति सिद्धान्तः।

२ ६७६ गुणभेदेऽप्यैकविद्यम्।

३ ६७७ शिरोव्रतस्याध्यायधर्मत्वान्न विद्याभेदकत्वम्।

४ ६७८ श्रुतिरपि वेद्यैकत्वेन विद्यैकत्वं दर्शयति।

२ उपसंहाराधिकरणम्।

५ ६७९ अन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञान उपसंहारः सर्वविज्ञानानां सर्ववेदान्तप्रत्ययत्वसाधनफलम्।

३ अन्यथात्वाधिकरणम्।

६ ६८० छान्दोग्यबृहदारण्यकोक्तयोरुद्गीथविद्ययोरेक-

सू० पृ० पं०

त्वं बहुतरस्याविशेषस्य प्रतीयमानत्वादिति पूर्वपक्षः ।

७ ६८२ प्रक्रमभेदाद्विद्याभेद इति सिद्धान्तः ।

८ ६८५ संज्ञैकत्वरूपपूर्वपक्षबीजनिराकरणम् ।

**४ व्याप्त्यधिकरणम् ।**

९ ६८६ ओमित्येतदक्षरमुद्गीथमित्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाः प्रतिभान्ति तेषु विशेषणपक्षस्यैव सामञ्जस्यम् ।

**५ सर्वाभेदाधिकरणम् ।**

१० ६८९ प्राणविद्यायाश्छान्दोग्यकौषीतकिप्रभृतिषु श्रूयमाणाया एकत्वात्क्वचिदुक्तानामपि गुणानामन्यत्रोपसंहारः ।

**६ आनन्दाद्यधिकरणम् ।**

११ ६९१ ब्रह्मस्वरूपप्रतिपादनपराणामानन्दरूपत्वादीनां सर्वत्र प्रतिपत्तिः ।

१२ ६९२ प्रियशिरस्त्वादीनां नान्यत्र प्राप्तिः ।

१३ ६९३ आनन्दादीनां स्वरूपप्रतिपत्तिप्रयोजनतया प्रियशिरस्त्वादिभ्यो वैषम्यम् ।

**७ आध्यानाधिकरणम् ।**

१४ ६९३ इन्द्रियेभ्यः परा ह्यर्था इत्यादिवाक्यैः सर्वेषां परत्वेन प्रतिपादनमिति पूर्वपक्षः । पुरुष एव सर्वेभ्यः परः प्रतिपाद्यते इति सिद्धान्तः ।

१५ ६९४ श्रुतिरेव प्रकृतं पुरुषमात्मेत्याह आत्मनश्च दुरधिगमत्वं श्रुत्वा स्वयमेव दर्शितमिति पुरुषप्रतिपत्त्यर्थैवेन्द्रियादिप्रवाहोक्तिः ।

**८ आत्मगृहीत्यधिकरणम् ।**

१६ ६९५ आत्मा वा इदमित्यत्रात्मशब्देनापरमात्मा-(सूत्रात्मा) भिलप्यते इति पूर्वपक्षः । परमात्मैवाभिलप्यत इति सिद्धान्तः ।

१७ ६९७ वाक्यान्वयदर्शनाच्च परमात्मग्रहणमिति पूर्वपक्षयुक्तस्य परिहारः । लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्धो व्यापार इहानुगम्यते इति सूत्रात्मपरिग्रहे लिङ्गस्य पूर्वपरिदर्शितस्य विवक्षितार्थानुगुण्येन ग्रहणम् ।

„ ६९८ ७ वर्णकान्तरम्—कतम आत्मेत्यादिवाजसनेयकश्रुतेः सदेव सोम्येत्यादिछान्दोग्यश्रुतेश्चातुल्यार्थत्वमिति पूर्वपक्षः । प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धान्तः ।

**९ कार्याख्यानाधिकरणम् ।**

१८ ७०० छान्दोग्यवाजसनेयकयोश्च प्राणसंवादे आचमनमेव विधीयत इति पूर्वपक्षः । वासोविज्ञानं विधीयत इति सिद्धान्तः ।

**१० समानाधिकरणम् ।**

१९ ७०३ अग्निरहस्यबृहदारण्यकयोः पठिते शाण्डिल्यविद्ये परस्परभिन्ने इति पूर्वपक्षः । विद्यैकत्वमिति सिद्धान्तः ।

**११ संबन्धाधिकरणम् ।**

२० ७०५ बृहदारण्यके सत्यविद्यायामुपदिश्यमानयोरुपनिषदोरुभयोरविभागेनोभयत्रानुसंधानमिति पूर्वपक्षः ।

२१ ७०६ नाविभागेनानुसंधानमपि तु व्यवस्थयेति सिद्धान्तः ।

२२ ७०७ अतिदेशलिङ्गादप्युपनिषदोर्व्यवस्थितिः ।

**१२ संभृत्यधिकरणम् ।**

२३ ७०७ संभृतिद्युव्याप्तिप्रभृतीनां विभूतीनां शाण्डिल्यविद्यादिष्वनुपसंहारः ।

**१३ पुरुषविद्याधिकरणम् ।**

२४ ७०९ शाखान्तराधीतानां पुरुषविद्याधर्माणां तैत्तिरीयकेऽप्राप्तिः ।

**१४ वेधाद्यधिकरणम् ।**

२५ ७११ प्रविध्यादिमन्त्राणां प्रवर्ग्यादिकर्मणां च संनिधिपाठाद्विद्यासूपसंहार इति पूर्वपक्षः ।

„ ७१४ १ वेधाद्यर्थानामुपनिषदुदितविद्याभिरसंबद्धत्वात्तास्वनुपसंहार इति सिद्धान्तः ।

**१५ हान्यधिकरणम् ।**

२६ ७२० यत्र सुकृतदुष्कृतयोर्हानमात्रश्रवणं तत्रोपायनस्यासंनिपात इति पूर्वपक्षः ।

„ ७२१ ६ हानशब्दशेषत्वादुपायनशब्दस्यास्त्युपायनसंनिपात इति सिद्धान्तः ।

„ ७२५ १ वर्णकान्तरम्—विधूननश्रुत्या सुकृतदुष्कृतशब्दयोः स्वकार्याचालनमात्रमभिधीयत इति पूर्वपक्षः । हानमेवेति सिद्धान्तः ।

**१६ सांपरायाधिकरणम् ।**

२७ ७२६ पर्यङ्कस्थं ब्रह्म प्रस्थितः व्यध्वन्येव सुकृतदुष्कृते विधूनुते इति पूर्वपक्षः । देहादपसर्पण एव जहातीति सिद्धान्तः ।

२८ ७२८ मृतस्य छन्दतो विद्यानुष्ठानानुपपत्तेर्विद्याभ्यासस्य सुकृतदुष्कृतक्षयस्य चानुपपत्तिः ।

**१७ गतेरर्थवत्त्वाधिकरणम् ।**

२९ ७२८ हानावविशेषेण देवयानपन्थाः संबध्यत इति पूर्वपक्षः । विभागेनेति सिद्धान्तः ।

सू० पृ० पं०

३० ७२९ सगुणोपासनेषु देवयानपथापेक्षा ।

१८ अनियमाधिकरणम् ।

३१ ७३० गतिर्यासु विद्यासु श्रूयते तत्रैव नियम्यत इति पूर्वपक्षः । अभ्युदयफलानां सगुणानामेव विद्यानामविशेषेण गतिर्भवितुमर्हतीति सिद्धान्तः ।

१९ यावदधिकाराधिकरणम् ।

३२ ७३२ अपान्तरतमःप्रभृतीनां जन्मस्मरणान्निर्गुणविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति पूर्वपक्षः ।

„ ७३४ ४ प्रारब्धविपाकस्य कर्मणः प्रक्षयं यावदधिकारमवतिष्ठन्ते तत्प्रक्षयान्मोक्षं प्राप्नुवन्तीत्यैकान्तिकी विदुषः कैवल्यसिद्धिः ।

२० अक्षरध्यधिकरणम् ।

३३ ७३५ ३६ अक्षरविशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसंबन्धः ।

२१ इयदधिकरणम् ।

३४ ७३८ 'द्वासुपर्णा' 'ऋतं पिबन्तौ' इति मन्त्रद्वये विद्यानानात्वमिति पूर्वपक्षः । विद्यैकत्वमिति सिद्धान्तः ।

२२ अन्तरत्वाधिकरणम् ।

३५ ७३९ बृहदारण्यके कौषीतकेयकहोळ-वाक्यणोपस्तप्रश्नोपक्रमयोर्विद्ययोरभ्याससामर्थ्यान्नानात्वमिति पूर्वपक्षः । वेद्यैकत्वाद्विद्यैकत्वमिति सिद्धान्तः ।

३६ ७४० आम्नानभेदानुपपत्तिपरिहारः ।

२३ व्यतिहाराधिकरणम् ।

३७ ७४१ 'तद्योऽहं सोऽसौ' 'त्वं वा अहमस्मि' इत्यत्र संसारिणीश्वरदृष्टिरेव विधीयते इति पूर्वपक्षः । व्यतिहारेणोभयदृष्टिरिति सिद्धान्तः ।

२४ सत्याद्यधिकरणम् ।

३८ ७४२ 'स यो हैतं' 'तद्यत्तत्सत्यम्' इत्येते द्वे सत्यविद्ये फलसंयोगभेदादिति पूर्वपक्षः । फलान्तरश्रवणस्य तस्योपनिषदहरहमिवाङ्गान्तरोपदेशस्तावकतया विद्यैकत्वमिति सिद्धान्तः ।

„ ७४४ ४ अस्य सूत्रस्य अक्ष्यादित्यपुरुषविद्याविषयिण्येकदेशिव्याख्याया उपन्यासनिराकरणे ।

२५ कामाद्यधिकरणम् ।

३९ ७४४ दहरविद्याया हार्दविद्यायाश्चैकत्वं परस्परगुणयोगश्च ।

सू० पृ० पं०

२६ आदराधिकरणम् ।

४० ७४६ भोजनलोपेऽप्यद्भिर्वान्येन वा द्रव्येणाविरुद्धेन प्राणाग्निहोत्रस्यानुष्ठानमिति पूर्वपक्षः ।

४१ ७४८ भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति सिद्धान्तः ।

२७ तन्निर्धारणाधिकरणम् ।

४२ ७४० कर्माङ्गव्यपाश्रयाणामुद्गीथाद्युपासनानां नित्यत्वमिति पूर्वपक्षः ।

„ ७५० ११ पृथक्फलश्रुतेर्न तेषां नित्यवत्कर्मसु नियम इति सिद्धान्तः ।

२८ प्रदानाधिकरणम् ।

४३ ७५३ वायुप्राणयोस्तत्त्वाभेदात्तद्विषयकोपासनयोरेकत्वमिति पूर्वपक्षः ।

„ ७५४ ७ आध्येयांशपृथक्त्वादाध्यानपृथक्त्वमिति सिद्धान्तः ।

२९ लिङ्गभूयस्त्वाधिकरणम् ।

४४ ७५६ मनश्चिदादीनां सांपादिकाग्नीनां स्वातन्त्र्यमिति सिद्धान्तः ।

४५ ७५८ पूर्वपक्षः—मनश्चिदादीनां प्रकरणात्क्रियाशेषत्वम् ।

४६ ७५९ इष्टकाचितेनातिदेशादप्येतेषां क्रियानुप्रवेशित्वम् ।

४७ ७५९ सिद्धान्तः—विद्यात्मका एवैते ।

४८ ७६० लिङ्गदर्शनाच्च स्वातन्त्र्यम् ।

४९ ७६० श्रुतिलिङ्गादीनां बलीयस्त्वाच्च ।

५० ७६१ क्रियाङ्गानां मनआदिष्वनुबन्धादपि मनश्चिदादीनां स्वातन्त्र्यम् ।

५१ ७६३ मानसवदिति दृष्टान्तस्य विघटनम् ।

५२ ७६३ पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानान्मध्यस्थस्यापि ब्राह्मणस्य स्वतन्त्रविद्याविधिपरत्वम् ।

३० ऐकात्म्याधिकरणम् ।

५३ ७६४ देहादात्मनोऽव्यतिरेक इति लोकायतिकस्य पूर्वपक्षः ।

५४ ७६६ देहव्यतिरेक एवात्मन इति सिद्धान्तः ।

३१ अङ्गावबद्धाधिकरणम् ।

५५ ७६९ उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहितास्तत्तच्छाखागतेष्वेवोद्गीथादिषु भवेयुरिति पूर्वपक्षः । सर्वशाखागतेष्वेवोद्गीथादिष्वेवंजातीयकाः प्रत्ययाः स्युरिति सिद्धान्तः ।

सू० पृ० पं०

५६ ७७० मन्त्रादिवद्वा अविरोधोऽन्यशाखाविहितप्रत्ययानाम् ।

३२ भूमज्यायस्त्वाधिकरणम् ।

५७ ७७१ वैश्वानरविद्यायां व्यस्तस्योपासनमिति पूर्वपक्षः । समस्तोपासनमिति सिद्धान्तः ।

,, ७७३ ४ उभयथोपासनपक्षदूषणम् ।

३३ शब्दादिभेदाधिकरणम् ।

५८ ७७३ सर्वासामीश्वरगोचराणां विद्यानामभेद इति पूर्वपक्षः । वेद्याभेदेऽपि शब्दादिभेदाद्विद्याभेद इति सिद्धान्तः ।

३४ विकल्पाधिकरणम् ।

५९ ७७५ अहंग्रहोपास्तीनां समुच्चयनियमे विकल्पनियमे च कारणाभावाद्यथाकाममनुष्ठानमिति पूर्वपक्षः । अविशिष्टफलत्वाद्विकल्पनियम इति सिद्धान्तः ।

३५ काम्याधिकरणम् ।

६० ७७७ काम्यास्तु विद्या यथाकामं समुच्चीयेरन्न वा समुच्चीयेरन् ।

३६ यथाश्रयभावाधिकरणम् ।

६१ ७७७ कर्माङ्गव्यपाश्रयप्रत्ययानां समुच्चितानामनुष्ठानम् ।

६२ ७७८ उपदेशसाम्यादपि ।

६३ ७७८ क्षतसंधानलिङ्गादपि समुच्चयः ।

६४ ७७९ ओंकारस्योपास्यस्य वेदत्रयसाधारण्यादुपासनानां समुच्चयः ।

६५ ७७९ सिद्धान्तः—उपासनानां सहभावाश्रुतेर्न समुच्चयः ।

६६ ७८० श्रुतिः प्रत्ययानामसहभावं दर्शयति ।

तृतीयाऽध्याये चतुर्थः पादः ॥ ४ ॥

१ पुरुषार्थाधिकरणम् ।

१ ७८१ वेदान्तविहितात्मज्ञानस्य क्रियानुप्रवेशमन्तरेणैव पुरुषार्थहेतुत्वम् ।

२ ७८२ पूर्वपक्षः—आत्मविज्ञानस्य कर्मशेषत्वादात्मज्ञाने या फलश्रुतिस्तस्या अर्थवादत्वम् ।

३ ७८३ ब्रह्मविदां कर्माचरणदर्शनं विद्यायाः कर्मशेषत्वे लिङ्गम् ।

४ ७८४ श्रुतिर्विद्यायाः कर्मशेषत्वं दर्शयति ।

५ ७८४ विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनम् ।

६ ७८४ समस्तवेदार्थविज्ञानवतः कर्मविधानादुपनिपदर्थविज्ञानस्य कर्माङ्गत्वम् ।

७ ७८४ यावज्जीवं कर्मनियमोऽपि विज्ञानस्य कर्माङ्गत्वे लिङ्गम् ।

८ ७८५ सिद्धान्तः—शारीरादीश्वरस्याधिकोपदेशाद्बादरिमतमुपनिषदात्मविज्ञानस्य स्वातन्त्र्येण पुरुषार्थहेतुत्वमेव सम्यक् ।

९ ७८६ तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः ।

१० ७८६ विद्यायाः कर्मशेषत्वे प्रमाणतयोपन्यस्तश्रुतिरसार्वत्रिका ।

११ ७८६ समन्वारम्भवचनस्य विभागेन व्यवस्था । भाष्यकारमतेन तद्व्याख्यानं च ।

१२ ७८७ वेदार्थविज्ञानवतः कर्मविधानादित्यस्य खण्डनम् ।

१३ ७८७ यावज्जीवं कर्मनियमस्याविद्वद्विषयत्वम् ।

१४ ७८७ उक्तकर्मनियमस्य विद्यास्तुत्यर्थत्वम् ।

१५ ७८८ स्वेच्छातः कर्मसाधनप्रजादित्यागलिङ्गाद्विद्या स्वतन्त्रफला ।

१६ ७८८ कर्माधिकारोच्छेदकत्वादपि न विद्या कर्माङ्गम् ।

१७ ७८८ ऊर्ध्वरेतःसु चाश्रमेषु विद्याश्रवणान्न विद्या कर्माङ्गम् ।

२ परामर्शाधिकरणम् ।

१८ ७९८ ऊर्ध्वरेतसामाश्रमित्वे प्रमाणाभावः ।

१९ ७९१ गार्हस्थ्यवदाश्रमान्तरमपि प्रतिपत्तव्यम् ।

२० ७९२ स्कन्धश्रुतेरुपरिधारणवद्विधित्वम् ।

,, ७९३ ४ परामर्शपक्षेऽपि संस्तवसामर्थ्यात्पारिव्राज्यं विधेयम् ।

३ स्तुतिमात्राधिकरणम् ।

२१ ७९६ स एष रसानां रसतम इत्यादिश्रुतीनां स्तुत्यर्थत्वमिति पूर्वपक्षः । कल्प्यं विध्यर्थत्वमिति सिद्धान्तः ।

२२ ७९८ विधिश्रुतेर्विध्यर्थत्वमुद्गीथादिश्रुतीनाम् ।

४ पारिप्लवाधिकरणम् ।

२३ ७९९ उपनिषदाख्यानानां पारिप्लवार्थत्वमिति पूर्वपक्षः । पारिप्लवे कथानां विशिष्योक्तत्वान्नासां पारिप्लवार्थत्वम् ।

२४ ८०० आख्यानश्रुतीनां विद्याशेषत्वम् ।

५ अग्नीन्धनाद्यधिकरणम् ।

२५ ८०० विद्याया आश्रमकर्मणामनपेक्षा ।

६ सर्वापेक्षाधिकरणम् ।

२६ ८०१ आश्रमकर्मणां विद्याया उत्पत्तावपेक्षा स्वार्थसिद्धावनपेक्षा ।

२७ ८०३ यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्याश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि ।

सू० पृ० पं०

७ सर्वान्नानुमित्यधिकरणम् ।

२८ ८०४ प्राणसंवादे 'न ह वा एवंविदि' इत्यनेन सर्वान्नाभ्यनुज्ञानं विद्याङ्गतया विधीयते इति पूर्वपक्षः ।

,, ८०५ ५ प्राणान्नविज्ञानप्रशंसार्थोऽर्थवादोऽयं नहवेति सिद्धान्तः ।

२९ ८०६ एवं सति भक्ष्याभक्ष्यशास्त्रमबाधितं भविष्यति

३० ८०६ आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिः । आपद्यपि मद्यपाननिषेधः ।

३१ ८०६ उदाहृतस्मृतिमूलभूतकाठकश्रुतिप्रदर्शनम् ।

८ आश्रमकर्माधिकरणम् ।

३२ ८०७ आश्रममात्रनिष्ठेनामुमुक्षुणाप्याश्रमकर्माण्यनुष्ठेयानि ।

३३ ८०७ आश्रमकर्मणां विद्यासहकारित्वेऽपि न नित्यानित्यसंयोगविरोधः ।

३४ ८०८ आश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे चाभिन्ना एवाग्निहोत्रादयः ।

३५ ८०९ ब्रह्मचर्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योत्पत्तिहेतुत्वम् ।

९ विधुराधिकरणम् ।

३६ ८०९ अन्यतमाश्रमप्रतिपत्तिहीनानामपि विद्यायामधिकारः ।

३७ ८१० संवर्तप्रभृतीनामनपेक्षिताश्रमकर्मणामपि महायोगित्वस्मरणम् ।

३८ ८१० विधुरादीनां जपोपवासादिभिर्विद्यानुग्रहः ।

३९ ८११ अनाश्रमित्वापेक्षयाश्रमवर्तित्वं ज्यायो विद्यासाधनम् ।

१० तद्भूताधिकरणम् ।

४० ८११ ऊर्ध्वरेतसां प्रत्यवरोहाभावः ।

११ आधिकारिकाधिकरणम् ।

४१ ८१२ नैष्ठिकब्रह्मचारिणां प्रमादात्प्रच्युतब्रह्मचर्याणां प्रायश्चित्ताभावः ।

४२ ८१३ गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यविशरणमुपपातकं तस्मान्नैष्ठिकस्यापि ब्रह्मचारिणोऽस्ति प्रायश्चित्तम् ।

१२ बहिरधिकरणम् ।

४३ ८१४ कृतनिर्णेजना अपि नैष्ठिकाः शिष्टैर्बहिष्कर्तव्याः ।

१३ स्वाम्यधिकरणम् ।

४४ ८१५ फलवन्त्यप्याश्रयेपूपासनेषु यजमानस्य कर्तृत्वमित्यात्रेयः ।

सू० पृ० पं०

४५ ८१६ ऋत्विक्कर्माण्युपासनानीति औडुलोमिः ।

४६ ८१६ श्रुतिरपि ऋत्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति ।

१४ सहकार्यन्तरविध्यधिकरणम् ।

४७ ८१६ 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इति बृहदारण्यकश्रुत्यां न मौनविधिरिति पूर्वपक्षः ।

,, ८१७ ७ अपूर्वत्वादस्ति मौनविधिरिति सिद्धान्तः ।

४८ ८१८ बहुलायाससाध्यधर्मबाहुल्याद्गृहिणोपसंहारश्छान्दोग्ये ।

४९ ८१९ मौनगार्हस्थ्यवद्वानप्रस्थगुरुकुलवासयोरप्याश्रमयोः श्रुतिमत्त्वम् ।

१५ अनाविष्काराधिकरणम् ।

५० ८१९ संन्यासिनो विधीयमानं बाल्यं भावशुद्धिरूपमिहाश्रीयते ।

१६ ऐहिकाधिकरणम् ।

५१ ८२० ऐहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षया ।

१७ मुक्तिफलाधिकरणम् ।

५२ ८२२ मुक्तावुत्कर्षनिकर्षात्मकोऽतिशयो नोपपद्यते ।

---

अथचतुर्थोऽध्यायः

प्रथमः पादः ।

१ आवृत्त्यधिकरणम् ।

१ ८२३ श्रवणादीनां यावदात्मदर्शनमावर्तनम् ।

२ ८२७ निर्विशेषे ब्रह्मणि प्रमोत्पत्तावावृत्त्यानर्थक्यम् ।

,, ८२९ १ प्रतिबन्धनिरासेनावृत्तेरर्थवत्त्वम् ।

२ आत्मत्वोपासनाधिकरणम् ।

३ ८३१ ध्यात्रा ब्रह्म स्वान्यत्वेन ग्रहीतव्यमिति पूर्वपक्षः । आत्मत्वेनेति सिद्धान्तः ।

३ प्रतीकाधिकरणम् ।

४ ८३४ प्रतीकेष्वात्मदृष्टिर्न क्रियते ।

४ ब्रह्मदृष्ट्यधिकरणम् ।

५ ८३५ प्रतीकेष्वेव ब्रह्मदृष्ट्यध्यारोपणम् ।

५ आदित्यादिमत्यधिकरणम् ।

६ ८३७ उद्गीथादिष्वेवादित्यादिमतयः ।

६ आसीनाधिकरणम् ।

७ ८४१ उपासनायामासीनतानियमः ।

८ ८४२ आसीने एव ध्यायतेरुपचर्यमाणत्वम् ।

९ ८४२ पृथिव्यादिष्वप्यचलत्वमपेक्ष्यैव ध्यायतिवाद उपासनस्यासीनकर्मत्वे लिङ्गम् ।

सू॰ पृ॰ पं॰

१० ८४२ उपासनस्यासनासत्त्वे शिष्टस्मृतिः ।

७ एकाग्रताधिकरणम् ।

११ ८४३ अङ्गानाश्रितोपासनेषु नास्ति दिग्देशकालनियमः । यत्रैकाग्रता चित्तस्य तत्रैवोपासना ।

८ आप्रायणाधिकरणम् ।

१२ ८४३ अभ्युदयफलानामुपासनानामा प्रायणादभ्यासः ।

९ तदधिगमाधिकरणम् ।

१३ ८४५ ब्रह्माधिगमे उत्तरपूर्वयोर्दुरितयोः क्षयः ।

१० इतरासंश्लेषाधिकरणम् ।

१४ ८४८ विदुषोऽविशेषेण पुण्यपापयोरश्लेषविनाशौ ।

११ अनारब्धाधिकरणम् ।

१५ ८४९ अनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षयः ।

१२ अग्निहोत्राद्यधिकरणम् ।

१६ ८५१ अग्निहोत्रादीनां विद्योपयोगिनामविनाशः ।

१७ ८५२ अग्निहोत्रादिनित्यव्यतिरिक्तस्य फलाभिसंधानेन क्रियमाणस्य सुहृदः साधुकृत्यामित्यादिविनियोगः ।

१३ विद्याज्ञानसाधनत्वाधिकरणम् ।

१८ ८५३ विद्यासंयुक्तं विद्याविहीनं चोभयविधमपि कर्म ब्रह्माधिगमहेतुः ।

१४ इतरक्षपणाधिकरणम् ।

१९ ८५४ आरब्धकर्मक्षये विदुषः कैवल्यमवश्यं भावि ।

---

चतुर्थोऽध्याये द्वितीयः पादः ॥ २ ॥

१ वागधिकरणम् ।

१ ८५५ 'वाङ्मनसि संपद्यते' इत्यादौ वागादीनां वृत्त्युपशममात्रं विवक्षितम् ।

२ ८५६ वाच्युक्तन्यायस्य चक्षुरादावतिदेशः ।

२ मनोधिकरणम् ।

३ ८५७ मनसः प्राणे वृत्त्यप्ययः ।

३ अध्यक्षाधिकरणम् ।

४ ८५८ प्राणस्य विज्ञानात्मनि वृत्तिप्रलयः ।

५ ८५९ प्राणस्तेजसीति प्राणसंपृक्तस्य जीवस्य तेजःसहचरितेषु भूतेष्ववस्थानम् ।

६ ८५९ शरीरान्तरप्रेप्सावेलायां जीवो नैकस्मिन्नेव तेजस्यवतिष्ठते सूक्ष्मस्यापि शरीरस्यानेकात्मकत्वात् ।

४ आसृत्युपक्रमाधिकरणम् ।

७ ८६० विद्वदविदुषोः समानोत्क्रान्तिरर्चिरादिमार्गपर्यन्तम् ।

५ संसारव्यपदेशाधिकरणम् ।

८ ८६१ तेजःप्रभृतीनां परमात्मनि बीजभावावशेषा संपत्तिः ।

९ ८६२ अस्माच्छरीरात्प्रवसतो जीवस्याश्रयभूतं भूतान्तरसहितं तेजः स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति ।

१० ८६२ सूक्ष्मत्वादेवास्य शरीरस्य स्थूलशरीरदाहेऽप्यनुपमर्दः ।

११ ८६३ स्थूलशरीरे विज्ञायमानस्योष्मणः सूक्ष्मशरीरव्यपाश्रयत्वम् ।

६ प्रतिषेधाधिकरणम् ।

१२ ८६३ आत्यन्तिकेऽमृतत्वे यो गत्युत्क्रान्तिप्रतिषेध उक्तः स शारीरापादान इत्यस्ति ब्रह्मविदोऽपि देहादुत्क्रान्तिरिति पूर्वपक्षः ।

१३ ८६४ एकेषां समाम्नातॄणामुत्क्रान्तेर्देहापादनत्वप्रतिषेधस्य स्पष्टोपलम्भादुक्त प्रतिषेधोऽपि देहापादानः ।

१४ ८६५ महाभारतादिष्वपि परब्रह्मविदो गत्युत्क्रान्त्यभावः स्मर्यते ।

७ वागादिलयाधिकरणम् ।

१५ ८६५ ब्रह्मविद इन्द्रियादीनि परस्मिन्ब्रह्मणि प्रलीयन्ते ।

८ अविभागाधिकरणम् ।

१६ ८६६ विदुषः कलाप्रलयो निरवशेषो भवति ।

९ तदोकोधिकरणम् ।

१७ ८६७ मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्य इतरे ।

१० रश्म्यधिकरणम् ।

१८ ८६८ उपासकस्याविशेषेण रात्रावहनि च रश्म्यनुसारित्वम् ।

१९ ८६९ रात्रौ प्रेतस्य नाडीरश्मिसंबन्धविच्छेदान्न रश्म्यनुसारित्वमित्याशङ्कानिरासः ।

११ दक्षिणायनाधिकरणम् ।

२० ८७० दक्षिणायने मृतोऽपि विद्वान्प्राप्नोत्येव विद्याफलम् ।

२१ ८७० स्मृतौ श्रूयमाणस्य कालभेदविनियोगस्य स्मार्तोपासनासंबद्धत्वम् ।

सू० पृ० पं०

चतुर्थोऽध्याये तृतीयः पादः ॥ ३ ॥

१ अर्चिराद्यधिकरणम् ।

१ ८७२ अर्चिरादयः परस्परं भिन्नाः सृतय इति पूर्वपक्षः। एकैवेयं सृतिरनेकविशेषणेति सिद्धान्तः

२ वाय्वधिकरणम् ।

२ ८७४ अर्चिरादिपर्वसु संवत्सरादूर्ध्वं देवलोकस्य ततो वायोश्च निवेशः ।

३ तडिदधिकरणम् ।

३ ८७६ तडित उपरिष्टाद्वरुणलोकः ।

४ आतिवाहिकाधिकरणम् ।

४ ८७६ अर्चिरादयो मार्गचिह्नानि भोगभूमयो वेति पूर्वपक्षः। गन्तॄणां नेतारो देवतात्मान इति सिद्धान्तः ।

५ ८७७ अर्चिरादीनामचेतनत्वेऽनेतृत्वे चोभयोरपि अज्ञत्वादूर्ध्वगत्यनुपपत्तिः ।

६ ८७९ विद्युदभिसंभवादूर्ध्वं वैद्युतेनैव पुरुषेणातिवाह्यमाना ब्रह्मलोकं गच्छन्ति ।

५ कार्याधिकरणम् ।

७ ८७९ अर्चिरादिमार्गेण सगुणमपरं ब्रह्म गमयत्यमानवः पुरुष इति बादरिः ।

८ ८८० बहुवचनलोकशब्दाधिकरणाधिकर्तव्यनिर्देशैरप्यपरमेव ब्रह्म गमयतीति निर्णीयते ।

९ ८८१ परब्रह्मसामीप्यादपरस्मिन्नपि ब्रह्मणि ब्रह्मशब्दप्रयोगः ।

१० ८८१ कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने तत्रैवोत्पन्नसम्यग्दर्शना हिरण्यगर्भेण सह परं ब्रह्म प्रतिपद्यन्ते ब्रह्मलोकगताः ।

११ ८८१ स्मृतिरपि पूर्वोक्तमर्थमनुजानाति ।

१२ ८८१ पूर्वपक्षः—परमेव ब्रह्म गमयतीति जैमिनिराचार्यो मन्यते ।

१३ ८८२ श्रुतिरपि गतिपूर्वकममृतत्वं दर्शयति ।

१४ ८८२ प्रजापतिवेश्मप्रतिपत्तेः प्रकरणात्परविषयत्वम्

,, ८८३ ५ पूर्वाणि पूर्वपक्षसूत्राण्युत्तराणि सिद्धान्तसूत्राणीति मतखण्डनम् ।

६ अप्रतीकालम्बनाधिकरणम् ।

१५ ८८९ प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान् विकारालम्बनान् ब्रह्मलोकं नयति ।

१६ ८९१ प्रतीकतारतम्येन फलतारतम्यश्रुतेर्न प्रतीकध्यायिनां ब्रह्मप्राप्तिः ।

---

सू० पृ० पं०

चतुर्थोऽध्याये चतुर्थः पादः ॥ ४ ॥

१ संपद्याविर्भावाधिकरणम् ।

१ ८९२ मोक्षस्वरूपं केनचिदागन्तुकविशेषेणाभिनिष्पद्यत इति पूर्वपक्षः । केवलेनात्मनाविर्भवतीति सिद्धान्तः ।

२ ८९३ बन्धविगमपूर्वकं शुद्धेनात्मनावस्थानलक्षणः पूर्वावस्थातो मोक्षावस्थायां विशेषः ।

३ ८९३ परं ज्योतिरुपसंपद्येत्यत्र ज्योतिःशब्देनात्मा वेद्यते ।

२ अविभागेन दृष्टत्वाधिकरणम् ।

४ ८९४ मुक्तस्य ब्रह्माभिन्नत्वम् ।

३ ब्राह्माधिकरणम् ।

५ ८९४ जैमिनिः सत्यत्वादिधर्माणां सत्यत्वं मन्यते ।

६ ८९५ औडुलोमिस्तेषां धर्माणां शब्दविकल्पजत्वं मन्यते ।

७ ८९६ व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्त इति बादरायणः ।

४ संकल्पाधिकरणम् ।

८ ८९६ अपरविद्याफलं यत्संकल्पात्पित्रादिसमुत्थानं तत्रास्ति निमित्तान्तरापेक्षेति पूर्वपक्षः । संकल्पमात्रात्पित्रादिसमुत्थानमिति सिद्धान्तः।

९ ८९७ अवन्ध्यसंकल्पत्वादेव विद्वाननन्याधिपतिः ।

५ अभावाधिकरणम् ।

१० ८९८ प्राप्तैश्वर्यस्य विदुषः शरीराद्यभावो बादरिर्मन्यते ।

११ ८९८ जैमिनिर्मनोवच्छरीरादिसद्भावं मन्यते ।

१२ ८९९ बादरायण उभयविधत्वं मन्यते ।

१३ ८९९ शरीराद्यभावे संध्यस्थानवदुपलब्धिमात्रा पित्रादिकामा उपपद्यन्ते ।

१४ ८९९ शरीरादिसद्भावे जाग्रद्वदुपपत्तिस्तेषाम् ।

६ प्रदीपाधिकरणम् ।

१५ ९०० संकल्पनिर्मितशरीराणि निरात्मकानीति पूर्वपक्षः । विदुषः प्रदीपवदनेकभावापत्त्या सात्मकानीति सिद्धान्तः ।

१६ ९०१ संज्ञाभाववचनस्य सुषुप्तिकैवल्यान्यतरावस्थापेक्षत्वम् ।

७ जगद्व्यापाराधिकरणम् ।

१७ ९०२ सगुणब्रह्मोपासनादीश्वरसायुज्यं गतानां निरवग्रहमैश्वर्यं भवतीति पूर्वपक्षः । जगद्व्यापारवर्जमन्यदैश्वर्यं भवतीति सिद्धान्तः ।

| सू० | पृ० | पं० | |
|---|---|---|---|
| १८ | ९०३ | | आप्नोति स्वाराज्यमित्यादिप्रत्यक्षोपदेशाद्विदुषां निरवग्रहमैश्वर्यं भवतीत्यस्य निरासः। |
| १९ | ९०३ | | यथा द्विरूपे परमेश्वरे निर्गुणं रूपं नाप्नुवन्त्येवमेव निरवग्रहमैश्वर्यमपि नाप्नुवन्ति सगुणोपासकाः। |
| २० | ९०४ | | परमेश्वरस्य विकारावर्तित्वं श्रुतिस्मृती दर्शयतः। |
| २१ | ९०४ | | निर्गुणोपासकानामीश्वरेण भोगमात्रसाम्यश्रवणान्न निरवग्रहमैश्वर्यम्। |
| २२ | ९०५ | | देवयानेन पथा ब्रह्मलोकगतानां न पुनरावृत्तिः। |


समाप्तेयं ब्रह्मसूत्रशांकरभाष्यस्थविषयसूची।

ॐ तत्सत्।







# ब्रह्मसूत्रशांकरभाष्यम् ।



## रत्नप्रभा—भामती—न्यायनिर्णयव्याख्यात्रयोपेतम् ।

### प्रथमोध्यायः ।

### ( उपोद्घातः । )

**भाष्यरत्नप्रभाव्याख्या श्रीगोविन्दप्रणीता ।**

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत्पदम् । तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम् ॥ १ ॥

श्रीगौर्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।

वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥

यत्कृपालवमात्रेण मूको भवति पण्डितः । वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे ॥ ३ ॥

कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्यश्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः ।

श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासासितास्यश्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथालिः ॥ ४ ॥

श्रीशंकरं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि । श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥

विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् । व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥

**भामतीव्याख्या श्रीवाचस्पतिमिश्रप्रणीता ।**

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ।

यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥

निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि । स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥

मार्तण्डतिलकस्वामिमहागणपतीन्वयम् । विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे । ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥

**न्यायनिर्णयव्याख्या श्रीआनन्दगिरिप्रणीता ।**

अध्यस्तान्ध्यमपूर्वमर्थधिषणैर्ग्राह्यं पुमर्थास्पदं लक्ष्यं लक्षणभेदतः श्रुतिगतं निर्धूतसाध्यार्थकम् ।

आम्नायान्तविभातविश्वविभवं सर्वाविरुद्धं परं सत्यं ज्ञानमनर्थसार्थविधुरं ब्रह्म प्रपद्ये सदोम् ॥ १ ॥

यो लोकं सकलं पुनाति निगमा यं प्राहुरेकान्ततो व्याप्तं येन जगज्जगन्ति सततं यस्मै नमस्कुर्वते ।

यस्मादाविरभूदशेषममरा यस्य प्रसादार्थिनो यस्मिन्पर्यवसास्यति स्फुरदिदं तस्मै नमो विष्णवे ॥ २ ॥

योऽनुग्रानुग्रतेजा जनयति सकलानालयं यं लभन्ते सर्वे निर्वान्ति येन श्रुतिपथपथिका वौपडातन्वते च ।

यस्मै यस्मादकस्मात्परिभवचकिता यस्य संरोचयन्ते चिन्ता यस्मिन्प्रवृत्ता भृशविशदधियः संश्रये तं गिरीशम् ॥ ३ ॥

भिन्दानमेनांसि दुरासदानि प्रत्यूहवर्गप्रभवानि तानि । राजानमाधातपरंपराणामारादुपासे गिरिजाभिजातम् ॥ ४ ॥

श्रीमद्व्यासपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुरन्मुक्तानामनवद्यहृद्यविपुलप्रद्योतिचिन्तामणिः ।

क्षान्तिः शान्तिधृती दयेतिसरितामेकान्तविश्रान्तिभूर्भूयान्नः सततं मुनीन्द्रमकरश्रेणीश्रयः श्रेयसे ॥ ५ ॥

यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थनासार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ।

यस्मिन्मुक्तिपथो मुमुक्षुमुनिभिः संप्रार्थितः संबभौ तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ ६ ॥

यत्पादाम्बुजचञ्चरीकधिषणा निर्वाणमार्गाधिगा पङ्क्तिर्मुक्तनिसर्गदुर्गदुरिता वाचंयमानामियम् ।

यस्मिन्नित्यमिदं शमादि समभूद्बोधाङ्कुरो मे यतः शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥ ७ ॥

---

१ मूलाविद्या, तूलाविद्येति द्वितयम् । २ स्वरूपोपमर्दनं विनान्यथाभावः ।

रत्नप्रभाव्याख्या

श्रीमच्छारीरकं भाष्यं प्राप्य वाक्शुद्धिमाप्नुयात् । इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥

यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् । सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

इह खलु 'स्वाध्यायोऽध्येतव्यः' इति नित्याध्ययनविधिनाधीतसाङ्गस्वाध्याये 'तद्विजिज्ञासस्व', 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः', 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति श्रवणविधिरुपलभ्यते । तस्यार्थः—अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति । तेन काम्येन नियमविधिनार्थादेवात्मशास्त्रप्रवृत्तिः वैदिकानां, पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः । तत्र कश्चिदिह जन्मनि जन्मान्तरे वानुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः, किं फलं, कोऽधिकारी, कः संबन्ध इति जिज्ञासते । तं जिज्ञासुमुपलभमानो भगवान्बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयांचकार 'अथातो ब्रह्मजिज्ञासा' इति ॥ नन्वनुबन्धजातं विधिसंनिहितार्थवादवाक्यैरेव ज्ञातुं शक्यम् । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्या 'यत्कृतकं तदनित्यं' इति न्यायवत्या 'न जायते म्रियते वा विपश्चित्', 'यो वै भूमा तदमृतम्', 'अन्यदार्तं' इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते । कर्मणा कृष्यादिना चितः संपादितः सस्यादिर्लोकः—भोग्य इत्यर्थः । विपश्चिन्नित्यज्ञानस्वरूपः । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन', 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यादिश्रुत्यानात्ममात्रे वैराग्यं लभ्यते । परीक्ष्यानित्यत्वेन निश्चित्य, अकृतो मोक्षः कृतेन कर्मणा नास्तीति । कर्मतत्फलेभ्यो वैराग्यं प्राप्नुयादित्यर्थः । 'शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुत्या शमादिषट्कं लभ्यते । 'समाहितो भूत्वा' इति काण्वपाठः । उपरतिः संन्यासः । 'न च पुनरावर्तते' इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते । तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम् । यथा 'एता रात्रीरुपयन्ति' इति रात्रिसत्रविधौ 'प्रतितिष्ठन्ति' इत्यर्थवादस्थप्रतिष्ठाकामस्तद्वत् । तथा 'श्रोतव्यः' इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः । विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुम्, 'आत्मा द्रष्टव्यः' इत्यद्वैतात्मदर्शनमुद्दिश्य 'श्रोतव्यः' इति विचारविधानात् । न हि विचारः साक्षाद्दर्शनहेतुः, अप्रमाणत्वात्, अपि तु प्रमाणविषयत्वेन । प्रमाणं चाद्वैतात्मनि वेदान्ता एव, 'तं त्वौपनिषदं पुरुषं', 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतेः । वेदान्तानां च प्रत्यग्ब्रह्मैक्यं विषयः, 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इति श्रुतेः । एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः, 'तरति शोकमात्मवित्', 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुतेः । तथा संबन्धोऽप्यधिकारिणा विचारस्य कर्तव्यतारूपः, फलस्य प्राप्यतारूप इति यथायोगं सुबोधः । तस्मादिदं सूत्रं व्यर्थमिति चेत् । न । तासामधिकार्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी उतान्यः, किं वेदान्ताः पूर्वतन्त्रेण गतार्था अगतार्था वा, किं ब्रह्म

भामतीव्याख्या

नत्वा विशुद्धविज्ञानं शंकरं करुणाकरम् । भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

अथ यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा, तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । तथाहि, 'बृहत्त्वाद्बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते' स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम् । नहि जातु कश्चिदत्र संदिग्धेऽहं वा नाहं वेति । न च विपर्यस्यति नाहमेवेति । न चाहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद्देहालम्बनोऽयमहंकार इति सांप्रतम् । तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं

आनन्दगिरीयव्याख्या

मातर्नतोऽस्मि भवतीमथ चार्थये त्वां चेतः सरस्वति परास्य पराश्रमर्थम् । शारीरके महदनुग्रहसंप्रसन्नमेकाग्रमस्तु वचसा सह सम्यगर्थे ॥८॥

श्रद्धाभक्ती पुरोधाय विधायागमभावनाम् । श्रीमच्छारीरके भाष्ये करिष्ये न्यायनिर्णयम् ॥ ९ ॥

नित्याध्ययनविध्युपादापितवेदान्तवचोभिरापाततः प्रतिपन्नं शास्त्रारम्भौपयिकमनुबन्धजातं न्यायतो निर्णेतुं भगवान्बादरायणः सूत्रितवान् 'अथातो ब्रह्मजिज्ञासा' इति । तत्र प्रमातृत्वादिबन्धस्याध्यासत्वं, धर्ममीमांसया ब्रह्ममीमांसाया गतार्थताभावः, विशिष्टाधिकारिसंभवः, विषयादिसत्वं चेति चत्वारोऽर्थाः सूचिताः । तथाहि—सत्यत्वे बन्धस्य बद्धाबद्धयोर्जीवब्रह्मणोरैक्यानुपपत्तेः, सत्यस्य च ज्ञानादनिवृत्तेः, ज्ञानस्य चाज्ञानमात्रविरोधित्वात्, उत्तरज्ञानस्य च विरोधिगुणतया पूर्वज्ञानादिनिवर्तकत्वात्, विषयप्रयोजनसिद्धिहेतुतया बन्धस्याध्यासता सूचिता । पूर्वसिद्धत्वे वेदान्तविचारस्य विशिष्टाधिकारिणश्चाभावे तं प्रति तत्कर्तव्यतोक्तेरयोगादगतार्थत्वं विशिष्टाधिकारिसंभवश्च ध्वनितः । त्वमर्थदृष्टबन्धस्यान्यदीयज्ञानादनिवृत्तेः, तदर्थज्ञानमपि तन्निवर्त्ति त्वमर्थविषयमेवेत्यर्थात्तदैक्यं विषयः सूचितः । मुमुक्षोरथशब्दद्योतितस्य ज्ञानाय

१ यत्र जिज्ञास्यत्वं तत्रैव संदिग्धत्वं सप्रयोजनत्वं चेति जिज्ञास्यत्वव्यापके संदिग्धत्वसप्रयोजनत्वे । तयोर्विरुद्धस्य तदभावस्येहोपलब्धिर्ज्ञानम् । तथाच व्यापकाभावे तद्व्याप्यस्यसंदिग्धत्वसप्रयोजनत्वाभावोऽत्यर्थः । अत्रैवं प्रयोगः—ब्रह्म मुमुक्षुविचार्यं न भवत्यसंदिग्धत्वात्, निष्प्रयोजनत्वाच्च । तथाविधकुम्भ—काकदन्तवदिति भावः । २ बृह्धातुर्बृहद्वृद्धिधातुजं ब्रह्मनिरूपणम् । बृंहणं च देहादीनां परिणमयितृत्वरूपं बोध्यम् । ३ एकार्थप्रतिपादकत्वज्ञानादित्यर्थः ।

रत्नप्रभाव्याख्या

प्रत्यगभिन्नं न वा, किं मुक्तिः स्वर्गादिवल्लोकान्तरं, आत्मस्वरूपा वेति संशयानिवृत्तेः। तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम्। तदुक्तं प्रकाशात्मश्रीचरणैः—'अधिकार्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रं' इति। येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्यादिनिर्णयानपेक्षणात्सूत्रं व्यर्थमित्यापततीत्यलं प्रसङ्गेन॥ तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वाद्धेतुहेतुमद्भावश्रुतिसंगतिः, शास्त्रारम्भहेतुलानुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ संगतिः, अधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसंगतिः, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसंगतिः, एवं सर्वसूत्राणां श्रुत्यर्थनिर्णायकत्वाच्छ्रुतिसंगतिः, तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन संगतिरूहनीया। प्रमेयं च कृत्स्नशास्त्रस्य ब्रह्म। अध्यायानां तु समन्वयाविरोधसाधनफलानि। तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयः। द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानाम्। चतुर्थपादस्य पदमात्रसमन्वय इति भेदः। अस्याधिकरणस्य प्राथम्यान्नाधिकरणसंगतिरपेक्षिता॥ अथाधिकरणमारभ्यते— 'श्रोतव्यः' इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः। तत्किमारब्धव्यं न वेति विषयप्रयोजनसंभवासंभवाभ्यां संशयः। तत्र नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासंभवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासंभवाच्चानारम्भणीयमिति प्राप्ते सिद्धान्तः 'अथातो ब्रह्मजिज्ञासा' इति। अत्र श्रवणविधिसमानार्थत्वाय 'कर्तव्या' इति पदमध्याहर्तव्यम्। अध्याहृतं च भाष्यकृता 'ब्रह्मजिज्ञासा कर्तव्या' इति। तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात्प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते। प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया। तथा च ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतार्थः संपद्यते। तत्र ज्ञानस्य स्वतः फलत्वायोगात्प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम्। तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात्सूचितम्। तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः। तथा हि शास्त्रमारब्धव्यं, विषयप्रयोजनवत्त्वात्, भोजनादिवत्। शास्त्रं प्रयोजनवत्, बन्धनिवर्तकज्ञानहेतुत्वात्, रज्जुरियमित्यादिवाक्यवत्। बन्धो ज्ञान-

भामतीव्याख्या

स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसंधानं न भवेत्। नहि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत। तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम्। तथा च बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते। अपि च स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान्भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते। अपि च योगैर्व्याघ्रः शरीरभेदेऽप्यात्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः। अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात्। विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव। बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रत्ययानालम्बनत्वायोगः। कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यभेदे कथंचिन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका इति युक्तमुत्पश्यामः। तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः, स्फुटतराहमनु-

आनन्दगिरीयव्याख्या

विचारविधानात्तत्साध्यज्ञानान्मुक्तिः सूचिता। ब्रह्मज्ञानाय च विचारविधानाद्ब्रह्मणः शक्यप्रतिपाद्यतया वेदान्तैः संबन्धोऽपि दर्शितः। तदेतद्भाष्यकृद्यथाक्रमं व्युत्पादयिष्यति। अस्य चाधिकरणस्य प्राथम्यान्नाधिकरणसंगतिः। उत्तराधिकरणसंगतिस्तु तस्यैवानेनेति नास्योच्यते। विचारविध्यपेक्षितविषयाद्यर्पकश्रुतिभिरस्योत्थानादुत्थाप्योत्थापकत्वं श्रुतिसंगतिः। इदं च धर्मजिज्ञासासूत्रवदुपोद्घाततया 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते' इति न्यायेन शास्त्रेण संबध्यते। विचारारम्भोपयोगिनीनामधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेरस्य विशेषतः समन्वयाध्यायसंगतिः। स्पष्टब्रह्मलिङ्गानां विषयाद्यर्पकवाक्यानां स्वार्थे समन्वयोक्त्या विशेषतोऽस्याद्यपादेन संबन्धः। पूर्वपक्षे विचारानारम्भात्तदधीनज्ञानाभावादुपायान्तरसाध्या मुक्तिः। सिद्धान्ते तु तदारम्भसंभवात्तदधीनज्ञानसिद्धेस्तेनैव मुक्तिः सिध्यतीति फलभेदः। तच्चेदमर्थातिविधिवदन्तर्भूतमेव शास्त्रे तदारम्भकार्यन्तापरम्। तत्र वेदान्तमीमांसाशास्त्रं विषयस्तदारभ्यमनारभ्यं वेति विषयाद्यसंभवसंभवाभ्यां संशयः। प्रामाणिकत्वेन प्रमातृत्वादिबन्धस्य सत्यतया तत्त्वज्ञानानपोह्यत्वात्, बद्धाबद्धयोर्जीवब्रह्मणोरैक्यायोगात्, तदभावे च बन्धाध्वस्तेः, बन्धाध्वस्तौ च फलाभावात्, प्राच्या च मीमांसया वेदार्थमात्रोपाधौ प्रवृत्तया गतार्थत्वात्, फलेच्छावतोऽधिकारिणोऽपि तुच्छत्वात्, तद्विशेषणानां च दुर्वचत्वात्, ब्रह्मणः प्रसिद्धत्वे विषयप्रयोजनयोरनुपपत्तेः, अप्रसिद्धत्वे संबन्धप्रयोजनयोरसिद्धेः, तस्य च निःसामान्यविशेषत्वात्, असंभावितविषयादिकमनारभ्यं शास्त्रमिति पूर्वपक्षः। प्रमातृत्वादेर्व्यावहारिकमानसिद्धत्वेऽपि तात्त्विकमानासिद्धतया तथाविधमानजनितबोधबाधाविरोधादुक्तविषयादिप्रतिलम्भात्, धर्ममीमांसायाश्च वेदार्थैकदेशधर्ममात्रोपहिततया ब्रह्मास्पर्शितया तन्मीमांसया गतार्थतानवकाशात्,

---

१ पूर्वानुभूतस्य साक्षात्कृतत्वस्यैक्यावगाहिनी धीः। २ अणिमादिसिद्धिलाभाल्लीलार्थं योगमहिम्ना व्याघ्रशरीरं कृत्वा तदभिमानीत्यर्थः। अत्रेदं बोध्यम्—अवयवोपचयापचयात्मकं बाल्ये स्थाविरे वा न शरीरभेदः सिद्ध्यति, शरीरमिति बुद्धेरनुगतत्वादित्यरुच्या 'स्वप्नान्ते' इत्युदाहृतं। स्वप्नभ्रमवादिनां मते तदसिद्ध्या योगव्याघ्रदृष्टान्तः, जाग्रत्यपि दर्शयितुं वेति बोध्यम्। ३ मञ्चस्थानां शब्दः। करणानां कर्तृपदत्वाभ्यस्तानुपपत्तेरिति भावः। ४ आत्मा शरीरादिभ्यो भिन्न इत्यध्यासावच्छेदकत्वात्तदनुपपत्तेर्लक्षणाश्रयणीयेति भावः।

र्थान्तरपरिग्रहे । क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते—'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा० ६।८।४) इति । स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त्यते—'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इति । 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण' (मु० २।२।११) इति च । तत्र त्वायतनायतनवद्भावश्रवणात् सर्वं ब्रह्मेति च सामानाधिकरण्यात् । यथानेकात्मको वृक्षः शाखा स्कन्धो मूलं चेत्येवं नानारसो विचित्र आत्मेत्याशङ्का संभवति, तां निवर्तयितुं सावधारणमाह—'तमेवैकं जानथ आत्मानम्' इति । एतदुक्तं भवति—न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः । किंतर्हि विद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति । यथा यस्मिन्नास्ते देवदत्तस्तदानयेत्युक्त आसनमेवानयति न देवदत्तम् । तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते । विकारानृताभिसंधस्य चापवादः श्रूयते—'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (का० २।४।११) इति । सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चविलापनार्थं नानेकरसताप्रतिपादनार्थम् । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो

रत्नप्रभाव्याख्या

प्रत्येकं मुख्यं नास्तीत्यर्थः । उपक्रमस्थसाधारणायतनस्य गौणसेतुत्वलिङ्गात्प्रथमश्रुतात्मश्रुत्या ब्रह्मत्वनिश्चय इति भावः । स्वशब्दादित्यस्यार्थान्तरमाह—क्वचिच्चेति । प्रजानामुत्पत्तौ सदेव मूलं, स्थितावायतनं, लये प्रतिष्ठेति ब्रह्मवाचिसत्पदेन छान्दोग्ये ब्रह्मण आयतनत्वश्रुतेरत्रापि तथेत्यर्थः । अर्थान्तरमाह—स्वशब्देनैवेति । 'यस्मिन् द्यौः' इति वाक्यात्पूर्वोत्तरवाक्ययोः पुरुषब्रह्मादिशब्देन ब्रह्मसंकीर्तनान्मध्येऽपि ब्रह्म ग्राह्यमित्यर्थः । पुरुष इति पूर्ववाक्यं, ब्रह्मैवेत्युत्तरवाक्यं, सर्वासु दिक्षु स्थितं सर्वं ब्रह्मैवेत्यर्थः । उत्तरेणोत्तरस्यां दिशि । उदाहृतवाक्यस्य सविशेषब्रह्मपरत्वमाशङ्क्य वाक्यं व्याचष्टे—तत्रेत्यादिना । सामानाधिकरण्याद्विचित्र आत्मेति संबन्धः । यस्मिन् सर्वमोतं तमेवैकमित्येवकारैकशब्दाभ्यां निर्विशेष ज्ञेयमित्युक्त्वा हेत्वन्तरमाह—विकारानृतेति । विकारेऽनृते कल्पिते अभिसंधोऽभिमानो यस्य तस्यानर्थभाक्त्वेन निन्दाश्रुतेश्च कूटस्थसत्यं ज्ञेयमित्यर्थः । कथं तर्हि सामानाधिकरण्यं, तत्राह—सर्वं ब्रह्मेति । यश्चौरः स स्थाणुरितिवत् यत्सर्वं तद्ब्रह्मेति सर्वोद्देशेन ब्रह्मत्वविधानाद्बाधनार्थं, न तु यद्ब्रह्म तत्सर्वमिति नानारसत्वार्थमित्यर्थः । तत्र नियामकमाह—स यथेति । स्व

भामतीव्याख्या

न्धिति स्यात् । तदिदमुक्तं भाष्यकृता अमृतत्वसाधनत्वादिति । तथा चामृतस्येति च सेतुरिति च ब्रह्मणि द्युभ्वाद्यायतनत्वे उपपत्स्येते । अत्र च स्वशब्दादिति तन्त्रोच्चरितमात्मशब्दादिति च सदायतना इति सच्छब्दादिति च ब्रह्मशब्दादिति च सूचयति । सर्वे ह्येतेऽस्य स्वशब्दाः । स्यादेतत् । आयतनायतनवद्भावः सर्वं ब्रह्मेति च सामानाधिकरण्यं हिरण्यगर्भेऽप्युपपद्यते । तथा च एवात्रास्त्वमृतत्वस्य सेतुरित्याशङ्क्य श्रुतिवाक्येन सावधारणेनोत्तरमाह—तत्रायतनायतनवद्भावश्रवणादिति । विकाररूपेऽनृतेऽनिर्वाच्येऽभिसंधोऽभिसंधानं यस्य स तथोक्तः । भेदप्रपञ्चं सत्यमभिमन्यमान इति यावत् । तस्यापवादो दोषः श्रूयते—मृत्योरिति । सर्वं ब्रह्मेति त्विति । यत्सर्वमविद्यारोपितं तत्सर्वं परमार्थतो ब्रह्म । न तु यद्ब्रह्म तत्सर्वमित्यर्थः । अप

आनन्दगिरीयव्याख्या

धारणसच्छब्देनायतनत्वोक्तिरिति योजनान्तरमाह—क्वचिच्चेति । स्वस्यायतनस्यासाधारणायतनशब्दादिति योजनान्तरं मत्वा श्रुतिमाह—सदिति । सतो निमित्तत्वेनैव मूलत्वं प्रत्याह—सदायतना इति । असमवायिकारणस्यैव सतः स्थितिहेतुत्वमेवेत्याशङ्क्याह—सत्प्रतिष्ठा इति । स्वशब्देन ब्रह्मोक्त्वा तदसाधारणपुरुषशब्देन ब्रह्मशब्देन परशब्देनामृतशब्देन चोक्तिरित्यर्थान्तरमाह—स्वशब्देनेति । इहेति प्रकरणोक्तिः । 'यस्मिन्द्यौः' इत्यादिवाक्यात्पूर्वोत्तरवाक्ययोर्ब्रह्मोक्तेर्मध्येऽपि तदेव युक्तं, आदिमध्यावसानानामैकार्थ्यं वाक्यादित्यर्थः । पुरस्ताद्ब्रह्मोक्तिमाह—पुरुष इति । परस्तादपि तदुक्तिमाह—ब्रह्मैवेति । पुरस्तात्पूर्वस्यां दिशि पश्चात्पश्चिमायां दक्षिणतो दक्षिणस्यामुत्तरेणोत्तरस्यां यदिदं दृश्यते तद्ब्रह्मैवेत्यर्थः । सर्वत्र ब्रह्मोक्तावपि तदनेकरसत्वमाशङ्क्याह—तत्रेति । उक्तवाक्ये सप्तम्यर्थः । सामानाधिकरण्याद्विचित्र आत्मेत्याशङ्का संभवतीति संबन्धः । वैचित्र्यं दृष्टान्तेनाह—यथेति । कथं तर्हि तन्निरासः तदाह—तामिति । जगदायतनं ब्रह्म ज्ञेयमित्युक्ते कुतस्तदेकरस्यं, तत्राह—एतदिति । तथापि कथं प्रपञ्चायतनस्य निष्प्रपञ्चत्वं तत्राह—यथेति । एकशब्दादेवकाराच्चायतनपदलक्ष्यमेकरसं ब्रह्मात्मत्वेन ज्ञेयमित्युक्त्वा तत्रैव हेत्वन्तरमाह—विकारेति । वाचारम्भणश्रुतेर्दृश्यत्वादित्युक्तेश्च विकारो मिथ्या तस्मिन्ननृतेऽनिर्वाच्येऽभिसंधाभिमानो यस्य तस्येति यावत् । द्वैतं सत्यं पश्यतो निन्दाश्रुतेरप्येकरसं ब्रह्मेत्यर्थः । ब्रह्मैकरस्यं सामानाधिकरण्यश्रुतिविरुद्धमित्याशङ्क्य पुरुषः स्थाणुरितिवज्जाड्यादिना विरुद्धस्य द्वैतस्य ब्रह्मणा सामानाधिकरण्यं बाधार्थमित्याह—सर्वमिति । यदविद्यारोपितं तत्सर्वं वस्तुतो ब्रह्म न तु यद्ब्रह्म तत्सर्वमतो न श्रुतिविरुद्धमित्यर्थः । सैन्धवं ब्रह्मानूद्य सर्वत्वविधावप्रसिद्धानुवादेन प्रसिद्धविधिप्रसक्तिरित्यभिप्रेत्य ब्रह्मणो नानारसत्वे श्रुत्यन्तरविरोधमाह—स यथेति ।

रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३) इत्येकरसताश्रवणात् । तस्माद्द्युभ्वाद्यायतनं ब्रह्म । यत्तूक्तं, सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति । अत्रोच्यते—विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादि । न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते । सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि, षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः । अपर आह—'तमेवैकं जानथ आत्मानम्' इति यदेतत्संकीर्तितमात्मज्ञानं, यच्चैतत् 'अन्या वाचो विमुञ्चथ' इति वाग्विमोचनं, तदत्रामृतत्वसाधनत्वात् 'अमृतस्यैष सेतुः' इति सेतुश्रुत्या संकीर्त्यते न तु द्युभ्वाद्यायतनम् । तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमित्येतदयुक्तम् ॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम् । यस्मान्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते । मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागस्तत्परिभवादौ द्वेषस्तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः । तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो

### रत्नप्रभाव्याख्या

णपिण्डोऽन्तर्बहिश्च रसान्तरशून्यः सर्वो लवणैकरसो यथा, एवमरे मैत्रेयि, चिदेकरस आत्मेत्यर्थः । यद्यपि पारवत्त्वसावयवत्वादिकं मुख्यसेत्वव्यभिचारि तथापि सेतोर्जलादिबन्धनरूपं यद्विधारणं तदेव व्यभिचारित्वेऽपि सेतुपदार्थैकदेशत्वाद्गुणत्वेन ग्राह्यं नतु पदार्थबहिर्भूतं पारवत्त्वादिकमित्याह—अत्रोच्यत इति । दृष्टत्वात्तद्ग्रहेऽतिप्रसङ्गमाह—न हीति । अत्र श्रुतौ परेणेति शेषः । विधारणस्य शब्दार्थत्वं स्फुटयति—षिञ् इति । सिनोति बध्नातीति सेतुपदार्थैकदेशो विधारणमित्यर्थः । तथा चामृतपदस्य भावप्रधानत्वादमृतत्वस्य सेतुर्विधारकं ब्रह्म । अस्यैवामृतत्वं नान्यस्येत्यर्थः । यद्वा द्युभ्वाद्याधारो ब्रह्म न सेतुशब्दार्थः किंत्वव्यवहितं ज्ञानमित्याह—अपर इति । फलितमाह—तत्र यदुक्तमिति । ज्ञाने सेतौ गृहीते सतीत्यर्थः ॥ १ ॥ मुक्तैरुपसृप्यं प्रत्यक्त्वेन प्राप्यं यद्ब्रह्म तस्यात्रोक्तेरिति सूत्रार्थः । मुक्तिप्रतियोगिनं बन्धं दर्शयति—देहादिष्विति । तद्विपर्ययेणेति । उक्तपञ्चक्लेशात्मकबन्धनिवृत्त्यात्मना स्थितमित्यर्थः । यथा नद्यो गङ्गाद्या नामरूपे विहाय समुद्रात्मना तिष्ठन्ति

### भामतीव्याख्या

आहेति । नात्र द्युभ्वाद्यायतनस्य सेतुता येन पारवत्ता स्यात् । किंतु 'जानथ' इति यज्ज्ञानं कीर्तितं, यश्च 'वाचो विमुञ्चथ' इति वाग्विमोकः, तस्यामृतत्वसाधनत्वेन सेतुतोच्यते । तच्चोभयमपि पारवदेव । नच प्राधान्यादेष इति सर्वनाम्ना द्युभ्वाद्यायतनमात्मैव परामृश्यते, न तु तज्ज्ञानवाग्विमोचने इति सांप्रतम् । वाग्विमोचनात्मज्ञानभावनयोरेव विधेयत्वेन प्राधान्यात् । आत्मनस्तु द्रव्यस्याव्यापारतयाऽविधेयत्वात् । विधेयस्य व्यापारस्यैव व्यापारवतोऽमृतत्वसाधनत्वात् । न चेदमैकान्तिकं यत्प्रधानमेव सर्वनाम्ना परामृश्यते । क्वचिदयोग्यतया प्रधानमुत्सृज्य योग्यतया गुणोऽपि परामृश्यते ॥ १ ॥ मुक्तोपसृप्यं व्यपदेशात् द्युभ्वाद्यायतनं प्रकृत्याविद्यादिदोषमुक्तैरुपसृप्यं व्यपदिश्यते—'भिद्यते हृदयग्रन्थिः' इत्यादिना । तेन तत् द्युभ्वाद्यायतनविषयमेव । ब्रह्मणश्च मुक्तोपसृप्यत्वं 'यदा सर्वे प्रमुच्यन्ते' इत्यादौ श्रुत्यन्तरे प्रसिद्धम् । तस्मान्मुक्तोपसृप्यत्वात् द्युभ्वाद्यायतनं ब्रह्मेति

### आनन्दगिरीयव्याख्या

खिल्योऽन्तर्बहिर्विभागहीनः सर्वात्मना लवणैकरसो यथा तथात्मापि सर्वथा चिदेकरसमूर्तिरिति श्रुत्यर्थः । ब्रह्मणश्चिदेकरसस्य प्रतिपाद्यत्वे फलितमाह—तस्मादिति । तस्यैकरस्यात्प्रधानादेस्तद्विरहादित्यर्थः । सेतुश्रुतेर्गतिं वक्तुं मुक्तमनुवदति—यत्त्विति । तस्याविवक्षितां गतिमाह—अत्रेति । अत्रेति सप्तम्या भावप्रधानममृतं वाक्यं चोक्तम् । सावयवत्वाचेतनत्वादि वक्तुमादिपदम् । ननु सेतुनाऽविनाभूतत्वात्पारवत्त्वादेस्तत्र तच्छब्दाद्धीरिति चेन्नेत्याह—न हीति । अत्रापीति प्रकृतवाक्योक्तिः । अभ्युपगम्यते, परेणापीति शेषः । विधरणत्वस्यागन्तुकत्वात्पारवत्त्वादेः स्वाभाव्यात्तदेव सेतुश्रुत्या ग्राह्यमिति चेत्, तत्राह—सेत्विति । गुणवृत्त्यापि शब्दैकदेशार्थविधरणगुणस्वीकरणमेव युक्तं न त्वत्यन्तबहिरर्थपारवत्त्वाद्यङ्गीकरणं मुख्यार्थैकदेशलाभेन विधरणस्य बुद्धिस्थत्वात्, अमृतस्येति षष्ठी च ब्रह्मपक्षे भावार्थस्वीकारादिति भावः । सेतुशब्दं ब्रह्मोत्युपेत्य सेतुश्रुतेर्गतिमुक्त्वा विषयान्तरोचयापि तद्गतिमाह—अपर इति । सेतुशब्दस्य वाग्विमोकपूर्वकमात्मज्ञानमर्थो न ब्रह्मेति स्थिते फलितमाह—तत्रेति ॥ १ ॥ द्युभ्वाद्यायतनं ब्रह्मेत्यत्र हेत्वन्तरमाह—मुक्तेति । तद्व्याख्यातुं प्रतिज्ञां पूरयति—इतश्चेति । इतःशब्दार्थं स्पष्टयति—यस्मादिति । मुक्तेन ब्रह्मणा कुतस्तदेवोपसृप्यमित्याशङ्क्याह—मुक्तैरिति । बन्धविरुद्धं मुक्तिशब्दार्थं वक्तुं बन्धमनुवदति—देहादिष्विति । अविद्याफलमाह—तत इति । अनर्थसमुदायस्य सम्यग्ज्ञानादृते विच्छेदाभावं सूचयति—संतत इति । तत्र स्वानुभवं प्रमाणयति—सर्वेषामिति । बन्धनमनूद्य तद्विरुद्धं मोक्षमा-

भवति । कथम्, 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मु० २।२।८) इत्युक्त्वा ब्रवीति—'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु० ३।२।८) इति । ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (बृ० ४।४।७) इत्येवमादौ । प्रधानादीनां तु न क्वचिन्मुक्तोपसृप्यत्वमस्ति प्रसिद्धम् । अपि च 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति वाग्विमोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते । तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' (बृ० ४।४।२१) इति । तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म ॥ २ ॥

## नानुमानमतच्छब्दात् ॥ ३ ॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह । नानुमानं सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम् । कस्मात्, अतच्छब्दात् । तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दः, न तच्छब्दोऽतच्छब्दः । न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वावगम्येत । तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति—'यः सर्वज्ञः सर्ववित्'

### रत्नप्रभाव्याख्या

तथा ब्रह्मात्मविदपि संसारं विहाय परात्कारणादव्यक्तात्परं पूर्णं स्वयं ज्योतिरानन्दं प्रत्यक्त्वेन प्राप्य तिष्ठतीत्याह—तथा विद्वानिति । इदं प्रधानादेः किं न स्यादत आह—ब्रह्मणश्चेति । अस्य मुमुक्षोः, हृदीति पदेनात्मधर्मत्वं कामानां निरस्तम् । यदा कामनिवृत्तिरथ तदामृतो भवति, मरणहेत्वभावात् । न केवलमनर्थनिवृत्तिः किंत्वत्र देहे तिष्ठन्नेव ब्रह्मानन्दमश्नुत इत्यर्थः । लिङ्गान्तरमाह—अपि चेति । धीरो विवेकी तमेवात्मानं विज्ञाय विशुद्धं लक्ष्यपदार्थं ज्ञात्वा वाक्यार्थज्ञानं कुर्यात् । ज्ञानार्थिनो ज्ञानप्रतिबन्धककर्मकाण्डादेवमुख्यमाह—नेति । बहूनित्युक्त्वा अल्पान्वेदान्तशब्दानङ्गीकरोति । 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥' इत्येतानि वागिन्द्रियस्थानत्वाद्वाक्शब्देनोच्यन्ते । तेषां शोषणमात्रमनात्मशब्दोच्चारणफलं तद्ध्यानान्मनसो ग्लानिमात्रमित्यर्थः ॥ २ ॥ वैशेषिक इति असाधारण आत्मशब्दादिरित्यर्थः । अतच्छब्दादित्यस्यार्थान्तरमाह—तद्विपरीतस्येति । अतएवातच्छब्दादेव ॥ ३ ॥

### भामतीव्याख्या

निक्षीयते । हृदयग्रन्थिश्चाविद्यारागद्वेषभयमोहाः । मोहश्च विषादः, शोकः । परं हिरण्यगर्भाद्यवरं यस्य तद्ब्रह्म तथोक्तम् । तस्मिन्दृष्टे इति यद्दृष्टं दर्शनं तस्मिंस्तदर्थमिति यावत् । यथा 'चर्मणि द्वीपिनं हन्ति' इति चर्मार्थमिति गम्यते । नामरूपादित्यविद्यामभिप्रायम् । कामा येऽस्य हृदि श्रिता इति । कामा इत्यविद्यामुपलक्षयति ॥ २ ॥ नानुमानमतच्छब्दात् । नानुमानिकं

### आनन्दगिरीयव्याख्या

चक्षाणः सूत्रं योजयति—तदिति । उक्तमुक्त्यनन्तरं प्राप्यं ब्रह्मेति श्रुतिरसिद्धेति शङ्कते—कथमिति । मुक्तौ श्रुतिमाह—भिद्यत इति । तथापि कथं द्युभ्वाद्यायतनस्य मुक्तोपसृप्यत्वं, तत्रापि श्रुतिमाह—इत्युक्त्वेति । यथा नद्यो गङ्गाद्या नामरूपाभ्यां निर्मुक्ताः समुद्रं प्राप्य तदात्मनावतिष्ठन्ते, तथा विद्वानपि साक्षात्कृतब्रह्मा तद्बलादेव नामरूपादविद्यातत्कार्यात्मनो विमुक्तः परमव्याकृतात्परमस्पृष्टानर्थं पुरुषं पूर्णमात्मानं दिव्यमखण्डं चिद्धातुमुपेत्यात्मत्वेनाप्नोतीत्यर्थः । प्रधानादीनामन्यतमस्यापि मुक्तोपसृप्यत्वसिद्धेरन्यथासिद्धिरित्याशङ्क्याह—ब्रह्मणश्चेति । ज्ञानावस्था यदेत्युक्ता । मुमुक्षुरस्येत्युक्तः । हृदीत्युक्त्या कामानामात्मनिष्ठता निरस्ता । प्रतिबन्धाभावावस्थां वक्तुमथेत्युक्तम् । अत्रेति जीवदवस्थोक्तिः । 'स यो ह वै तत्परमं ब्रह्म वेद' इत्यादिसंग्रहार्थमादिपदम् । उक्तं व्याप्तिं स्फोरयति—प्रधानादीनां त्विति । क्वचिदिति श्रुतिस्मृतिलोकोक्तिः । वाग्विमुक्तेर्ज्ञेयत्वव्यपदेशादपि द्युभ्वाद्यायतनं ब्रह्मेति व्याख्यान्तरमाह—अपि चेति । इहेत्युदाहरणोक्तिः । वाग्विमोकद्वारा द्युभ्वाद्यायतनस्य ज्ञेयत्वोक्तावपि कुतस्तद्ब्रह्मैव, तत्राह—तच्चेति । धीरो विवेकज्ञानी, विज्ञानं पदार्थज्ञानं, प्रज्ञा वाक्यार्थधीः, ज्ञातपदार्थस्यैव हि वाक्यार्थधीः । ब्राह्मणपदमनुक्तद्विजोपलक्षणम् । वाक्यार्थधीहेतुत्वेन कर्मकाण्डवैमुख्यमनधिकारिणा कार्यमित्याह—नेति । बहूनिति विशेषणादात्मार्थोपनिषदनुचिन्तनमनुज्ञातम् । अनात्मशब्दानामननुसंधेयत्वे हेतुः—वाच इति । अष्टावपि स्थानानि वाक्शब्देनोक्तानि । ताल्वादिशोषणमेव बहुशब्दानुचिन्तनं न कर्तव्यमिदित्यर्थः । मुक्तोपसृप्यत्वोक्तिफलमाह—तस्मादिति ॥ २ ॥ सिद्धान्तमुक्त्वा प्रधानपक्षं निषेधति—नेति । सूत्रतात्पर्यमाह—यथेति । वैशेषिकत्वमसाधारणत्वम् । तदाक्षराणि व्याचष्टे—नेत्यादिना । इहेति वाक्योक्तिः । प्रश्नपूर्वकं हेतुमुक्त्वा व्याचष्टे—कस्मादित्यादिना । प्रकरणमत्रेत्युक्तम् । प्रधानसाधकशब्दाभावे फलमाह—येनेति । प्रधानवाचिशब्दस्य सत्त्वेनेति यावत् । न तथा तद्वि

(मु० १।१।९) इत्यादिः । अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥ ३ ॥

## प्राणभृच्च ॥ ४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च संभवति तथाप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सत्यस्मादेवातच्छब्दात्प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः । न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक्संभवति । पृथग्योगकरणमुत्तरार्थम् ॥ ४ ॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## भेदव्यपदेशात् ॥ ५ ॥

भेदव्यपदेशश्चेह भवति—'तमेवैकं जानथ आत्मानम्' इति ज्ञेयज्ञातृभावेन । तत्र प्राणभृत्तावन्मुमुक्षुत्वाज्ज्ञाता, परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत् ॥५॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## प्रकरणात् ॥ ६ ॥

प्रकरणं चेदं परमात्मनः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु० १।१।३) इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यान्न केवले प्राणभृति ॥ ६ ॥ कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## स्थित्यदनाभ्यां च ॥ ७ ॥

द्युभ्वाद्यायतनं च प्रकृत्य 'द्वा सुपर्णा सयुजा सखाया' (मु० ३।१।१) इत्यत्र स्थित्यदने निर्दि-

---

रत्नप्रभाव्याख्या

**प्राणभृच्चेति** । सूत्रे चकारः पूर्वसूत्रस्थनञोऽनुषङ्गार्थः । सर्वज्ञपदसामानाधिकरण्यादात्मशब्दो न जीववाचीत्यतच्छब्दस्तस्मादित्यर्थः । ननु 'नानुमानप्राणभृतावतच्छब्दात्' इत्येकमेव सूत्रं किमर्थं न कृतं, उभयनिरासहेतोरेकत्वादित्यत आह—**पृथगिति** । योगः सूत्रम् । उत्तरसूत्रस्थहेतूनां जीवमात्रनिरासेनान्वयेऽपि सुबोधार्थं प्राणभृच्चेति पृथक्सूत्रकरणमित्यर्थः ॥ ४ ॥ तानेव हेतूनाकाङ्क्षाद्वारा व्याचष्टे—**कुतश्चेत्यादिना** । यद्यपि विशुद्धः प्रत्यगात्मैवात्र ज्ञेयः तथापि जीवत्वाकारेण ज्ञातुर्ज्ञेयाद्भेदान्न ज्ञेयरूपत्वमित्यर्थः । एवं च जीवत्वलिङ्गविशिष्टत्वेन जीवस्य द्युभ्वादिवाक्यार्थत्वं निरस्यते न शुद्धरूपेणेति मन्तव्यम् ॥ ५ ॥ ॥ ६ ॥ ननु स्थित्यैश्वरस्यादनाज्जीवस्य 'द्वा सुपर्णा' इत्यत्रोक्तावपि ईश्वर आयतनवाक्येन किमर्थं प्राह्य इत्यत आह—

भामतीव्याख्या

पलक्षणम् । नाव्याकृतमित्यपि द्रष्टव्यं, हेतोरुभयत्रापि साम्यात् ॥ ३ ॥ **प्राणभृच्च** । चेनातच्छब्दत्वं हेतुरनुकृष्यते । स्वयं च भाष्यकृदत्र हेतुमाह—**न चोपाधिपरिच्छिन्नस्येति** । न सम्यक् संभवति । नाञ्जसमित्यर्थः । भोग्यत्वेन हि आयतनत्वमिति क्लिष्टम् । स्यादेतत् । यद्यतच्छब्दत्वादित्यत्रापि हेतुरनुकष्टव्यः, हन्त कस्मात्पृथग्योगकरणं, यावता 'न प्राणभृदनुमाने' इत्येक एव योगः कस्मान्न कृत इत्यत आह—**पृथगिति** । 'भेदव्यपदेशात्' इत्यादिना हि प्राणभृदेव निषिध्यते, न प्रधानं, तदेकयोगकरणे दुर्विज्ञानं स्यादिति ॥ ४ ॥ ५ ॥ **प्रकरणात्** । न खलु हिरण्यगर्भादिषु ज्ञातेषु सर्वं ज्ञातं भवति किंतु ब्रह्मण्येवेति ॥ ६ ॥ **स्थित्यदनाभ्यां च** ।

आनन्दगिरीयव्याख्या

शब्दोऽस्तीति शेषः । अतच्छब्दादित्यर्थान्तरमाह—**तदिति** । सप्तमी पूर्ववत् । प्रधानस्य द्युभ्वाद्यायतनत्वाभावेऽपि सूत्रात्मनः स्यादित्याशङ्क्याह—**अत इति** । अतच्छब्दादित्यतःशब्दार्थः ॥ ३ ॥ अस्तु तर्हि शारीरो द्युभ्वाद्यायतनं, तस्मिन्नात्मत्वादियोगात्, तत्राह—**प्राणभृच्चेति** । तद्व्याचष्टे—**यद्यपीति** । भोग्यस्य भोक्तृशेषत्वात्तस्यायतनत्वमुक्तमाशङ्क्याह—**नचेति** । जीवस्यादृष्टद्वारा द्युभ्वादिनिमित्तत्वेऽपि न साक्षात्तदायतनत्वमौपाधिकत्वेनाविभुत्वादित्यर्थः । नन्वतच्छब्दादिति हेतुरिहापि चेदनुकृष्यते तर्हि 'न प्राणभृदनुमाने अतच्छब्दात्' इत्येकमेव सूत्रमस्तु, तत्राह—**पृथगिति** । उत्तरसूत्रैः प्राणभृदेव निरस्यते न प्रधानं तदेकसूत्रकरणे दुर्ज्ञानं, तेनोत्तरसूत्रेषु जीवमात्रनिराससूचनार्थं पृथक्करणं सूत्रयोरित्यर्थः ॥ ४ ॥ परिच्छेदस्याभासत्वाद्ब्रह्मैक्याभिप्रायेण सर्वज्ञत्वमायतनत्वं च जीवेऽपि स्यादिति मत्वा पृच्छति—**कुतश्चेति** । सूत्रमुत्तरम्—**भेदेति** । विभजते—**भेदेत्यादिना** । इहेत्युदाहरणोक्तिः । तथापि ध्येयमायतनं प्राणभृदस्तु, नेत्याह—**तत्रेति** । निर्धारणार्था सप्तमी ॥ ५ ॥ भिन्नस्य ब्रह्मणो ध्येयत्वनिरासेन स्वात्मानमेव जानथेति वचनपर्यवसानाज्जीवस्यायतनत्वध्येयत्वनिरासे हेत्वन्तरं वाच्यमित्याह—**कुतश्चेति** । सूत्रमुत्तरमादाय व्याचष्टे—**प्रकरणं चेति** । तस्य परमात्मविषयत्वे हेतुमाह—**कस्मिन्निति** । प्राणभृति ज्ञातेऽपि तच्छेषत्वेन सर्वविज्ञानात्तद्विषयत्वं प्रकरणस्येत्याशङ्क्याह—**परमात्मनीति** ॥ ६ ॥ जीवस्योपाध्यैक्येनाविवक्षितत्वात्तज्ज्ञानेऽपि सर्वज्ञानसिद्धेस्तस्यायतनत्वाद्यभावे हेत्वन्तरं वाच्यमित्याशङ्क्य सूत्रेण परिहरति—**कुतश्चेत्यादिना** । व्याचष्टे—**द्युभ्वादीति** । निर्देश-

श्येते । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति कर्मफलाशनं, 'अनश्नन्नन्योऽभिचाकशीति' इत्यौदासीन्येनावस्थानं च । ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात् । ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत । न । तस्याविवक्षितत्वात् । क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते । ईश्वरस्तु लोकतोऽप्रसिद्धत्वाच्छ्रुत्या तात्पर्येण विवक्ष्यत इति न तस्याकस्मिकं वचनं युक्तम् । 'गुहां प्रविष्टावात्मानौ हि' इत्यत्राप्येतद्दर्शितम्—'द्वा सुपर्णा' इत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति । यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदापि न विरोधः कश्चित् । कथम् । प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति निषिध्यते । यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति । यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति । तद्वत्प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते । तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः । तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवाक्यस्य मध्य इदं पठितम्—'यस्मिन्द्यौः पृथिवी चान्तरिक्षम्' इति । प्रपञ्चार्थं तु पुनरुपन्यस्तम् ॥ ७ ॥

---

रत्नप्रभाव्याख्या

**यदि चेश्वर इति** । अत्र चेश्वरः शुद्धचिन्मात्रो ग्राह्यः, न सर्वज्ञत्वादिविशिष्टः, तस्यात्राप्रतिपाद्यत्वात् । तथा चाप्रतिपाद्यस्याकस्मान्मध्ये वचनासंभवादाद्यवाक्येन ग्रहणं कार्यमित्यभिसंधिः । तमज्ञात्वा शङ्कते—**ननु तवापीति** । ब्रह्मस्वरूपप्रतिपादनार्थमकस्मादप्रकृतस्यापि लोकप्रसिद्धस्य जीवस्यानुवादसंभव इति परिहरति—**नेति** । ननु 'द्वा सुपर्णा' इत्यत्र बुद्धिजीवयोरुक्तेः कथमिदं सूत्रमित्यत आह—**गुहामिति** । स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञयोरनुवादेनैक्यं दर्शितमित्यर्थः । नन्वत्र जीवेशौ नाद्यौ, पैङ्गिव्याख्याविरोधादतः सूत्रासंगतिरित्यत आह—**यदापीति** । तदापि सूत्रस्यासंगतिर्नास्तीत्यर्थः । अदनवाक्ये बुद्धिमनूद्य स्थितिवाक्येन बुद्ध्यादिविलक्षणशुद्धप्रत्यग्ब्रह्मणो ज्ञेयस्योक्तेर्द्युभ्वादिवाक्ये तदेव ग्राह्यं, न बुद्ध्युपहितो जीव इति सूत्रसंगतिमाह—**कथमित्यादिना** । नन्वत्रानुपहितो जीव उक्तो न परं ब्रह्मेत्यत आह—**यस्त्विति** । पौनरुक्त्यं शङ्कते—**तदेतदिति** । द्युभ्वादिवाक्यस्य ब्रह्मपरत्वमित्यर्थः । समाधत्ते—**प्रपञ्चार्थमिति** । सेतुशब्दव्याख्यानेन भूतयोनेः प्रपञ्च...

भामतीव्याख्या

यदि जीवो हिरण्यगर्भो वा द्युभ्वाद्यायतनं भवेत्, ततस्तत्प्रकृत्या 'अनश्नन्नन्योऽभिचाकशीति' इति परमात्माभिधानमाकस्मिकं प्रसज्येत । नच हिरण्यगर्भ उदासीनः, तस्यापि भोक्तृत्वात् । नच जीवात्मैव द्युभ्वाद्यायतनं, तथा सति स एवात्र कथ्यते, तत्स्वरूपं च ब्रह्मापि कथ्यते, अन्यथा सिद्धान्तेऽपि जीवात्मकथनमाकस्मिकं स्यादिति वाच्यम् । यतोऽनधिगतार्थावबोधनस्वरसेनाम्नायेन प्राणभृन्मात्रप्रसिद्धजीवात्माधिगमायात्यन्तानवगतमलौकिकं ब्रह्मावबोध्यत इति सुभाषितम् । **यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनेति** । तत्र हि 'अनश्नन्नन्योऽभिचाकशीति' इति जीव उपाधिरहितेन रूपेण ब्रह्मस्वभाव उदासीनोऽभोक्ता दर्शितः, तदर्थमेवाचेतनस्य बुद्धिसत्त्वस्यापारमार्थिकं भोक्तृत्वमुक्तम् । तथा चेत्थंभूतं जीवं कथयतानेन मन्त्रवर्णेन द्युभ्वाद्यायतनं ब्रह्मैव दर्शितं भवति, उपाध्यवच्छिन्नश्च जीवः प्रतिषिद्धो भवतीति न पैङ्गिब्राह्मणविरोध इत्यर्थः । **प्रपञ्चार्थमिति** । तन्मध्ये न पठितं...

आनन्दगिरीयव्याख्या

मेव दर्शयति—**तयोरिति** । विभक्त्यर्थमाह—**ताभ्यां चेति** । स्थितेरीश्वरस्यादनाज्जीवस्य संग्रहेऽपि कथमीश्वरस्यैव विश्वायतनत्वं, तत्राह—**यदीति** । ईश्वरस्यायतनत्वेनाप्रकृतत्वे जीवात्पृथक्कथनानुपपत्तिरित्युक्तमेव व्यतिरेकद्वाराह—**अन्यथेति** । जीवस्याप्यायतनत्वेनाप्रकृतत्वे तुल्यानुपपत्तिरिति शङ्कते—**नन्विति** । तदैक्यार्थं लोकसिद्धस्यानुवादत्वान्नैवमित्याह—**नेति** । जीवस्यापूर्वत्वाभावेनाप्रतिपाद्यत्वमेव प्रकटयति—**क्षेत्रज्ञो हीति** । ईश्वरस्यापि लोकवादिसिद्धत्वादप्रतिपाद्यतेत्याशङ्क्याह—**ईश्वरस्त्विति** । तयोरित्यादौ बुद्धिजीवयोरुक्तत्वात्कथमिदं सूत्रं, तत्राह—**गुहामिति** । गुहाधिकरणे नेदमुदाहरणं, 'ऋतं पिबन्तौ' इत्युदाहृतत्वात्, तत्राह—यदीति । तर्हीह परानुक्तेर्बुद्धिजीवयोरेवोक्तत्वात्कथं परस्याभिगतिरित्याह—**कथमिति** । जीवस्यापि परात्मत्वेनाविष्टत्वादुपाध्यनादरादनुपहितस्य...तदस्पृष्टस्य परस्यायतनत्वमित्याह—**प्राणेति** । कथमेकस्यैवोपाधिविशिष्टत्वाविशिष्टत्वेन भेदाभेदौ, तत्राह—**यथेति** । प्राणभृदुपहितस्यायतनत्वस्येति शेषः । तस्य चेदायतनत्वं न निषिध्यते किंविषयस्तर्हि निषेधः, तत्राह—**तस्मादिति** । पक्षान्तरायोगे...गुपसंहरति—**तस्मादिति** । स्वधाम्नत्वनयं शेयब्रह्मपरमित्याह—**तदिति** । नैनेन सिद्धत्वे हेतुमाह—**तस्येति** । तर्हि...

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥




भूमा प्राणः परेशो वा प्रश्नप्रत्युक्तिवर्जनात् ॥ अनुवर्त्यातिवादित्वं भूमोक्तेर्वायुरेव सः ॥ १ ॥
विच्छिद्यैष त्विति प्राणं सत्यस्योपक्रमात्तथा ॥ महोपक्रम आत्मोक्तेरीशोऽयं द्वैतवारणात् ॥ २ ॥

**इदं समामनन्ति—'भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' ( छा० ७।२३,२४ ) इत्यादि । तत्र संशयः—किं प्राणो भूमा स्यादाहोस्वित्परमात्मेति । कुतः संशयः । भूमेति तावद्बहुत्वमभिधीयते, 'बहोर्लोपो भू च बहोः' ( पा० ६।४।१५८ ) इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् । किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायां 'प्राणो वा आशाया भूयान्' ( छा० ७।१५।१ ) इति संनिधानात्प्राणो भूमेति प्रति-**

रत्नप्रभाव्याख्या

त्मत्वस्फुटीकरणार्थमित्यर्थः । तस्मान्मुण्डकोपनिषद् ब्रह्मणि समन्वितेति सिद्धम् ॥ ७ ॥ **भूमा** । छान्दोग्यमुदाहरति—**इदमिति** । नाल्पे सुखमस्ति भूमैव सुखम्, तस्मान्निरतिशयसुखार्थिना भूमैव विचार्य इति नारदं प्रति सनत्कुमारेणोक्ते सति नारदो ब्रूते—**भूमानमिति** । भूम्नो लक्षणमद्वितीयत्वमाह—**यत्रेति** । भूमलक्षणं परिच्छिन्नलक्षणोक्त्या स्फुटयति—**अथेति** । अत्र संशयबीजं प्रश्नपूर्वकमाह—**कुत इत्यादिना** । बहोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिच्' इतीमन्प्रत्यये कृते 'बहोर्लोपो भू च बहोः' इति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्यात्, बहोः स्थाने भूरित्यादेशश्च स्यादित्युक्तेर्भूमन्निति शब्दो निष्पन्नः । तस्य भावार्थकेमन्प्रत्ययान्तत्वाद्बहुत्वं वाच्यम् । तत्किंधर्मिकमित्याकाङ्क्षायां संनिहितप्रकरणस्थः प्राणो धर्मी भाति । वाक्योपक्रमस्थ आत्मापि स्वप्रतिपादनापेक्षो धर्मित्वेन भातीति संनिहितव्यवहितप्रकरणाभ्यां सं-

भामतीव्याख्या

कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमित्यर्थः ॥ ७ ॥ **भूमा संप्रसादादध्युपदेशात्** । नारदः खलु देवर्षिः कर्मविदनात्मवित्तया शोच्यमात्मानं मन्यमानो भगवन्तमात्मज्ञमाजानसिद्धं महायोगिनं सनत्कुमारमुपससाद । उपसद्य चोवाच, भगवन्, अनात्मज्ञताजनितशोकसागरपारमुत्तारयतु मां भगवानिति । तदुपश्रुत्य सनत्कुमारेण 'नाम ब्रह्मेत्युपास्व' इत्युक्ते नारदेन पृष्टं किं नाम्नोऽस्ति भूय इति । तत्र सनत्कुमारस्य प्रतिवचनम्—'वाग्वाव नाम्नो भूयसी' इति । तदेवं नारदसनत्कुमारयोर्भूयसी प्रश्नोत्तरे वागिन्द्रियमुपक्रम्य मनःसंकल्पचित्तध्यानविज्ञानबलान्नतोयवायुसहिततेजोनभःस्मराशाप्राणेषु पर्यवसिते । कर्तव्याकर्तव्यविवेकः संकल्पः, तस्य कारणं पूर्वापरविषयनिमित्तप्रयोजननिरूपणं चित्तम् । स्मरः स्मरणम् । प्राणस्य च समस्तक्रियाकारकफलभेदेन पित्राद्यात्मत्वेन च रथारनाभिदृष्टान्तेन सर्वप्रतिष्ठत्वेन च प्राणभूयस्त्वदर्शिनोऽतिवादित्वेन च नामादिप्रपञ्चादाशान्ताद्भूयस्त्वमुक्त्वाऽपृष्ट एव नारदेन सनत्कुमार एकग्रन्थेन 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यादीन्कृतिपर्यन्तानुक्त्वोपदिदेश—'सुखं त्वेव विजिज्ञासितव्यम्' इति । तदुपश्रुत्य नारदेन 'सुखं त्वेव भगवो विजिज्ञासे' इत्युक्ते सनत्कुमारः 'यो वै भूमा तत्सुखम्' इत्युपक्रम्य भूमानं व्युत्पादयांबभूव—'यत्र नान्यत्पश्यति' इत्यादिना । तदीदृशे विषये विचार आरभ्यते । तत्र संशयः—किं प्राणो भूमा स्यादाहो परमात्मेति । भावभवित्रोस्तादात्म्यविवक्षया सामानाधिकरण्यं संशयस्य बीजमुक्तं भाष्यकृता । तत्र 'एतस्मिन् ग्रन्थसंदर्भे यदुक्ताद्भूयसोऽन्यतः । उच्यमानं तु तद्भूय उच्यते प्रश्नपूर्वकम् ॥' नच प्राणात् किं भूय इति पृष्टम् । नापि भूमा वाऽस्माद्भूयानिति प्रत्युक्तम् । तस्मात्प्राणभूयस्त्वाभिधानानन्तरमपृष्टेन भू-

आनन्दगिरीयव्याख्या

मधिकरणमनर्थकमित्याशङ्क्य भूतयोनिवाक्यमध्यस्थं नैनदिति कृत्वाचिन्तयेदमधिकरणमित्याह—**प्रपञ्चार्थमिति** ॥ ७ ॥ आत्मशब्दाद्युन्वाचाननं ब्रह्मेत्युक्तं, तत्रात्मशब्दः 'तरति शोकमात्मवित्' इत्यत्र ब्रह्मणि प्राणे प्रयोगादनैकान्तिकः स्यादित्याशङ्क्याह—**भूमेति** । पूर्णसुखात्मनि निर्विशेषे ब्रह्मणि भूमविद्याश्रुतेरन्वयोक्तेः संगतिरिति मत्वा छान्दोग्यवाक्यं पठति—**इदमिति** । नाल्पे सुखमस्ति भूमैव सुखं, तस्मान्निरतिशयं सुखमिच्छता भूमैव विशेषेण ज्ञातुमेष्टव्यो न परिच्छिन्नमिति सनत्कुमारोक्तिमादत्ते—**भूमा त्विति** । तदुपश्रुत्य नारदो भगवन्, भूमानमेव विशेषेण ज्ञातुमिच्छामीति पृच्छति सनत्कुमारम्—**भूमानमिति** । भूम्नो लक्षणमाह—**यत्रेति** । व्यवहारातीतं पूर्णं वस्तु भूमेत्यर्थः । लक्षणं व्यतिरेकेण स्फोरयितुं परिच्छिन्नस्य लक्षणमाह—**अथेति** । अन्वयव्यतिरेकस्यापीष्टसिद्धौ हेतुत्वद्योतकोऽथशब्दः । आदिपदं 'यो वै भूमा तदमृतम्' इत्यादिसंग्रहार्थम् । उक्ते वाक्ये भूम्नि संशयमाह—**तत्रेति** । निर्बीजे संशयेऽतिप्रसङ्गात्पृच्छति—**कुत इति** । तत्र हेतुं वक्तुं भूमशब्दार्थमाह—**भूमेतीति** । बहोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिज्वा' इतीमन्प्रत्यये कृते 'बहोर्लोपो भू च बहोः' इति सूत्रेण बहोरुत्तरस्येमन्प्रत्ययस्येकारलोपे बहोः स्थाने भूशब्दादेशे च भूमन्निति प्रातिपदिकं सिध्यति । तस्य च भावार्थे विहितेमन्प्रत्ययान्तत्वाद्बहुत्ववाचित्वमित्यर्थः । तथापि संशये को हेतुरित्याशङ्क्यावान्तरप्रकरणं महाप्रकरणं चेत्याह—**किमित्यादिना** । तथा संनिधानात्प्राणभानवदित्यर्थः । भावभवित्रोस्तादात्म्य-

भाति। तथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु' ( छा० ७।१।३ ) इति प्रकरणोत्थानात्परमात्मा भूमेत्यपि प्रतिभाति। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः। किं तावत्प्राप्तम्। प्राणो भूमेति। कस्मात्, भूयःप्रश्नप्रतिवचनपरंपरादर्शनात्। यथा हि 'अस्ति भगवो नाम्नो भूयः' इति, 'वाग्वाव नाम्नो भूयसी' इति। तथा 'अस्ति भगवो वाचो भूयः' इति, 'मनो वाव वाचो भूयः' इति च नामादिभ्यो ह्या प्राणाद्भूयःप्रश्नप्रतिवचनप्रवाहः प्रवृत्तः। नैवं प्राणात्परं भूयःप्रश्नप्रतिवचनं दृश्यतेऽस्ति भगवः प्राणाद्भूय इत्यदो वाव प्राणाद्भूय इति। प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं 'प्राणो वा आशाया भूयान्' इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वम्—'अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इत्यभ्यनुज्ञाय 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणव्रतमतिवादित्वमननुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानमवतारयन्प्राणमेव भूमानं मन्यत इति गम्यते। कथं पुनः प्राणे भूमनि व्याख्यायमाने 'यत्र नान्यत्पश्यति' इत्येतद्भूम्नो लक्षणपरं वचनं व्याख्यायेतेति। उच्यते—सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात्संभवति प्राणस्यापि 'यत्र नान्यत्पश्यति' इत्येतल्लक्षणम्। तथाच

---

रत्नप्रभाव्याख्या

शय इत्यर्थः। पूर्वमात्मशब्दात् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं, तदयुक्तं, 'तरति शोकमात्मवित्' इत्यत्रब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसंगत्या पूर्वपक्षयति—**प्राणो भूमेति**। धर्मधर्मिणोरभेदात्सामानाधिकरण्यं द्रष्टव्यम्। पूर्वोत्तरपक्षयोः प्राणोपास्तिर्ब्रह्मज्ञानं च फलं क्रमेण मन्तव्यम्। अत्राध्याये भूयःप्रश्नोत्तरभेदादर्थभेदो दृश्यते। भूमा तु प्राणात्परं भूयःप्रश्नं विनोक्तलिङ्गेन प्राणादभिन्न इत्याह—**कस्मादित्यादिना**। प्राणाद्भूय इति न दृश्यत इति पूर्वेण संबन्धः। ननु 'एष तु वा अतिवदति' इति तुशब्देन प्राणप्रकरणविच्छेदान्न प्राणो भूमेत्यत आह—**प्राणमेवेति**। नामाद्याशान्तानुपास्यानतीत्य प्राणं श्रेष्ठं वदतीत्यतिवादी प्राणवित्, तं प्रति अतिवाद्यसीति केनचित्प्रश्ने कृते अस्मीति ब्रूयात्, नाहमतिवादीत्यपह्नवं न कुर्यादित्युक्तम्। प्राणविदमेष इति परामृश्य सत्यवचनध्यानमननश्रद्धादिधर्मपरम्परां विधाय भूमोपदेशान्न प्रकरणविच्छेदः। तुशब्दो नामाद्युपासकस्यातिवादित्वनिरासार्थ इत्यर्थः। भूम्नो लक्षणवचनं सुखत्वममृतत्वं च प्राणे प्रश्नपूर्वकं योजयति—**कथं पुनरित्यादिना**। प्राणग्रस्तेषु प्राणे लीनेषु न शृणोति सुषुप्तपुरुष इति शेषः। 'गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्य-

भामतीव्याख्या

मोच्यमानः प्राणस्यैव भवितुमर्हति। अपिच भूमेति भावो न भवितारमन्तरेण शक्यो निरूपयितुमिति भवितारमपेक्षमाणः प्राणानन्तर्येण बुद्धिसंनिधानात्तमेव भवितारं प्राप्य निर्वृणोति। 'यस्योभयं हविरार्तिमार्छेत्' इत्यत्रार्तिरिवार्तं हविः। यथाहुः—'भूत्वानन्तर्येण ... हविषा विशेषणम्' इति। न चात्मनः प्रकरणादात्मैव बुद्धिस्थ इति तस्यैव भूमा स्यादिति युक्तम्। सनत्कुमारस्य 'नाम ब्रह्मेत्युपास्स्व' इति प्रतीकोपदेशरूपेणोत्तरेण नारदप्रश्नस्यापि तद्विषयत्वेन परमात्मोपदेशप्रकरणस्यानुत्थानात्। अतद्विषयत्वे चोत्तरस्य प्रश्नोत्तरयोर्वैयधिकरण्येन विप्रतिपत्तेरप्रामाण्यप्रसङ्गात्। तस्मादसति प्रकरणे प्राणस्यानन्तर्यात्तस्यैव भूमेति युक्तम्। तदेतत्संशयबीजं दर्शयता भाष्यकारेण सूचितं पूर्वपक्षसाधनमिति न पुनरुक्तम्। नच भूयोभूयः प्रश्नात्परमात्मैव नारदेन जिज्ञासित इति युक्तम्। प्राणोपदेशानन्तरं तस्योपरमात्। तदेवं प्राण एव भूमेति स्थिते यद्यत्तद्विरोधितया वचः प्रतिभाति तत्तदनुगुणतया नेयम्। नीतं च ... कृता। स्यादेतत्। 'एष तु वा अतिवदति' इति तुशब्देन प्राणदर्शिनोऽतिवादिनो व्यवच्छिद्य सत्येनातिवादित्वं वदन् ... णस्य भूमानमभिदधीतेत्यत आह—**प्राणमेव त्विति**। **प्राणदर्शिनश्चातिवादित्वमिति**। नामाद्याशान्तमतीत्य वदनशी-

आनन्दगिरीयव्याख्या

विवक्षया प्राणो भूमा परमात्मा भूमेति सामानाधिकरण्यम्। सत्यां सामग्र्यां कार्यसिद्धिः फलमाह—**तत्रेति**। आकाङ्क्षापूर्वकं पूर्वपक्षं गृह्णाति—**किमिति**। पूर्वपक्षे प्राणोपास्तिरुत्तरपक्षे परमात्मधीरिति फलम्। अवान्तरप्रकरणस्य संनिहितत्वेऽपि महाप्रकरणतो दुर्बलत्वान्न प्राणस्य प्रमेयतेत्याह—**कस्मादिति**। महाप्रकरणादवान्तरप्रकरणस्य प्राबल्यार्थं लिङ्गमाह—**भूय इति**। प्राणादूर्ध्वं महदर्थविषयत्वेन प्रश्नस्य प्रतिवचनस्य वाऽदृष्टेरित्यर्थः। अन्यत्र तदभावेऽपि मेयभेदधीवदत्रापि स्यादित्याशङ्क्यास्मिन्प्रकरणे तयोः सतोरदर्शनाद्भानान्मैवमित्याह—**यथेति**। दृष्टिविषयत्वेन निषेध्यं प्रश्नादिकमभिनयति—**अस्तीति**। ननु 'एष तु वा अतिवदति' इति तुशब्देन प्राणविदोऽतिवादित्वं व्यावर्त्य, 'यः सत्येनातिवदति' इति सत्येनातिवदनं वदन्प्राणं भूमानं न गृह्यते, तत्राह—**प्राणमिति**। अतिवादिलिङ्गेन प्राणस्य प्रत्यभिज्ञानात्, एष इति प्रकृताकर्षणात्प्रकरणाविच्छेदात्, अतिवादित्वे सत्यशब्दस्य सत्यवदनगुणविधायकत्वात्, तुशब्दस्यापि नामाद्याशान्तवादिनोऽतिवादित्वव्यावर्तकत्वात्प्राणं गृहीत्वैव सत्यादिद्वारा भूम्नोऽवतारात्तस्यैव भूमतेत्यर्थः। प्राणपक्षे लक्षणाशङ्कते—**कथमिति**। अवस्थाविशेषमाश्रित्याह—**उच्यत इति**। लोकप्रसिद्ध्या संभावितं श्रुत्या स्पष्टयति—**तथाचेति**। 'गार्ह-

श्रुतिः, 'न शृणोति न पश्यति' इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' (प्र० ४।२।३) इति तस्यामेवावस्थायां पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति। यच्चैतद्भूम्नः सुखत्वं श्रुतम्—'यो वै भूमा तत्सुखम्' (छा० ७।२३) इति, तदप्यविरुद्धम्। 'अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्शरीरे सुखं भवति' (प्र० ४।६) इति सुषुप्त्यवस्थायामेव सुखश्रवणात्। यच्च 'यो वै भूमा तदमृतम्' (छा० ७।२४।१) इति तदपि प्राणस्याविरुद्धं, 'प्राणो वा अमृतम्' (कौ० ३।२) इति श्रुतेः। कथं पुनः प्राणं भूमानं मन्यमानस्य 'तरति शोकमात्मवित्' इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते। प्राण एवेहात्मा विवक्षित इति ब्रूमः। तथाहि—'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः' (छा० ७।१५।१) इति प्राणमेव सर्वात्मानं करोति। 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितम्' इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य। तस्मात्प्राणो भूमेत्येवं प्राप्तम्। तत इदमुच्यते—परमात्मैवेह भूमा भवितुमर्हति न प्राणः। कस्मात्। संप्रसादादध्युपदेशात्। संप्रसाद इति सुषुप्तं स्थानमुच्यते, सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात्। बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात् तस्यां च संप्रसादावस्थायां प्राणो जागर्तीति

रत्नप्रभाव्याख्या

एचन आहवनीयः प्राणः' इति श्रुतेः प्राणा अग्नय इह पुरे शरीरे जाग्रति सव्यापारा एव तिष्ठन्तीत्यर्थः। देवो जीवः। अथ तदा स्वप्नादर्शनकाले सुखश्रवणात्प्राणस्य सुखत्वमविरुद्धमित्यन्वयः। आत्मपदेनोपक्रमविरोधं परिहरति—**प्राण एवेति**। प्राणस्यात्मत्वं कथमित्याशङ्क्य श्रुतत्वादित्याह—**तथा हीति**। सर्वं समर्पितमिति च सर्वाधिष्ठानं प्राणं स्वीकरोति श्रुतिरित्यन्वयः। अत आत्मत्वं प्राणेऽपि मुख्यमिति भावः। भूमरूपत्वं योजयति—**सर्वात्मत्वेति**। संप्रसादशब्देन प्राणं लक्षयितुं मुख्यार्थं दर्शयति—**संप्रसाद इति**। स वा एष एतस्मिन्संप्रसादे स्थित्वा पुनराद्रवतीति प्रयोगाच्च। तत्पदं सुषुप्तिवाचकमित्याह—**बृहदिति**। वाच्यार्थसंबन्धात्प्राणो लक्ष्य इत्याह—**तस्यां चेति**। अत्र सूत्र इत्यर्थः। भूमा प्राणाद्भिन्नो-

भामतीव्याख्या

त्वमित्यर्थः। एतदुक्तं भवति—नायं तुशब्दः प्राणातिवादित्वाद्व्यवच्छिनत्ति, अपितु तदतिवादित्वमपरित्यज्य प्रत्युत तदनुकृष्य तस्यैव प्राणस्य सत्यस्य श्रवणमननश्रद्धानिष्ठाकृतिभिर्विज्ञानाय निश्चयाय सत्येनातिवदतीति प्राणव्रतमेवातिवादित्वमुच्यते। तुशब्दो नामाद्यतिवादित्वाद्व्यवच्छिनत्ति। न नामाद्याशान्तवाद्यतिवादी, अपितु सत्यप्राणवाद्यतिवादीत्यर्थः। अत्र चागमाचार्योपदेशाभ्यां सत्यस्य श्रवणम्। अथागमाविरोधिन्यायनिवेशनं मननं, मत्वा च गुरुशिष्यसब्रह्मचारिभिरनुसूयुभिः सह संवाद्य तत्त्वं श्रद्धत्ते। श्रद्धानन्तरं च विषयान्तरदर्शी विरक्तस्ततो व्यावृत्तस्तत्त्वज्ञानाभ्यासं करोति, सेयमस्य कृतिः प्रयत्नः। अथ तत्त्वज्ञानाभ्यासनिष्ठा भवति, यदनन्तरमेव तत्त्वविज्ञानमनुभवः प्रादुर्भवति। तदेतदाह्या अप्याहुः—'भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्' इति भावनाप्रकर्षपर्यन्तो निष्ठा तस्माज्जायते तत्त्वानुभव इति। तस्मात्प्राण एव भूमेति प्राप्तेऽभिधीयते—'एष तु वा अतिवदति यः

आनन्दगिरीयव्याख्या

वा एषोऽपानः' इत्यादिनाऽग्नित्वेन निरूपितत्वात्प्राणा एवाग्नयः। ते च पुरे शरीरेऽभिमानतो गृहीते स्वापेऽपि व्यापारवन्तो भवन्तीत्यर्थः। यद्वा तत्राप्यात्मन्येव लक्षणं तस्यास्तत्प्राधान्यादित्याशङ्क्य तथापीत्यादि योज्यम्। 'यो वै भूमा तत्सुखम्' इति प्राणपक्षे कथं निर्वक्ष्यते, तत्राह—**यच्चेति**। यस्यामवस्थायामेष देवो बुद्ध्याद्युपाधिको जीवः स्वप्नानुचावचान्नोपलभते, तदा यत्सुखं तदस्मिञ्शरीरे भवति, नोपायान्तरसाध्यमिति श्रुत्यर्थः। सुषुप्तेश्च प्राणप्राधान्यात्तस्यैव तत्सुखमिति शेषः। भूम्नोऽमृतत्वश्रुत्या प्राणादर्थान्तरत्वं, प्राणस्याल्पत्वेन मर्त्यत्वादित्याशङ्क्याह—**यच्चेति**। प्राणे भूम्नि प्रकरणविरोधं शङ्कते—**कथमिति**। प्राणस्यैवात्रात्मत्वान्न तद्विरोधोऽस्तीत्याह—**प्राण एवेति**। संभवति मुख्येऽर्थे किमित्यात्मशब्देन गौणार्थग्रहणमित्याशङ्क्य सार्वात्म्यादात्मशब्दस्तत्र मुख्य एवेत्याह—**तथाहीति**। प्राणस्य सर्वकल्पनाधिष्ठानत्वाच्च मुख्यात्मत्वमित्याह—**यथेति**। तथापि परमात्मैव सर्वकारणत्वान्मुख्यो भूमा, प्राणस्तु नैवमित्याशङ्क्याह—**सर्वेति**। प्राणस्य सिद्धे भूमत्वे तदुपास्तिपरं भूमवाक्यमित्युपसंहरति—**तस्मादिति**। पूर्वपक्षमनूद्य सिद्धान्तयति—**एवमिति**। तत्र प्रतिज्ञां व्याकरोति। **परमात्मेति**। प्राणो भूमेत्युक्तत्वान्नेयं प्रतिज्ञेति शङ्कते—**कस्मादिति**। सौत्रं हेतुमादत्ते—**संप्रसादादिति**। 'एष संप्रसादः' इति संप्रसादशब्दस्य जीवार्थत्वादत्रापि तस्मात्परत्वोक्त्या न प्राणप्रत्युक्तिरित्याशङ्क्य संप्रसादशब्दस्य विवक्षितं वक्तुं प्रसिद्धमर्थमाह—**संप्रसाद इति**। जीवे सुप्तौ च शक्तिकल्पनायां गौरवं शङ्कित्वोक्तम्—**सम्यगिति**। न केवलं निरुक्त्या संप्रसादशब्दः स्वापविषयः, किंतु 'स एष एतस्मिन्संप्रसादे रत्वा' इत्यादिप्रयोगादपीत्याह—**बृहदिति**। तर्हि स्वापादुपर्युपदेशस्ततोऽन्यस्य प्राणस्यापि स्यादित्याशङ्क्यावस्थावाचिशब्दस्य लक्षणया प्राणविषयत्वमाह—**तस्यां चेति**। संप्रसादशब्दस्य लाक्षणिकार्थत्वेऽपि सिद्धं हेत्वर्थमाह—

**प्राणोऽत्र संप्रसादोऽभिप्रेयते । प्राणादूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः । प्राण एव चेद्भूमा स्यात्स एव तस्मादूर्ध्वमुपदिश्येतेत्यश्लिष्टमेवैतत्स्यात् । न हि नामैव नाम्नो भूय इति नाम्न ऊर्ध्वमुपदिष्टम् । किं तर्हि नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यम्—'वाग्वाव नाम्नो भूयसी' इति । तथा वागादिभ्योऽप्या प्राणादर्थान्तरमेव तत्र तत्रोर्ध्वमुपदिष्टम् । तद्वत्प्राणादूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति । नन्विह नास्ति प्रश्नोऽस्ति भगवः प्राणाद्भूय इति, नापि प्रतिवचनमस्ति प्राणाद्वाव भूयोऽस्तीति, कथं प्राणादधि भूमोपदिश्यत इत्युच्यते । प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः—'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तस्मान्नास्ति प्राणादध्युपदेश इति । अत्रोच्यते—न तावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं, विशेषवादात् 'यः सत्येनातिवदति' इति । ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति । कथम् । यथैषोऽग्निहोत्री यः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वं, केन तर्ह्यग्निहोत्रेणैव । सत्यवदनं त्वग्निहोत्रिणो विशेष उच्यते । तथा 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्ते न सत्यवदनेनातिवादित्वम् । केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव । सत्यवदनं तु प्राणविदो विशेषो विवक्ष्यत इति । नेति ब्रूमः । श्रुत्यर्थपरित्यागप्रसङ्गात् । श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते—'यः सत्येनातिवदति सोऽतिवदति' इति । नात्र प्राणविज्ञानस्य संकीर्तनमस्ति । प्रकरणात्तु प्राणविज्ञानं संबध्येत । तत्र प्रकरणानु-**

रत्नप्रभाव्याख्या

ऽन्राध्याये, तस्मादूर्ध्वमुपदिष्टत्वात्, नामादेरूर्ध्वमुपदिष्टवागादिवदित्यर्थः । विपक्षहेतूच्छेदं बाधकमाह—**प्राण एव चेदिति** । स्वस्यैव स्वस्मादूर्ध्वमुपदिष्टत्वमयुक्तं, नामादिष्वदृष्टं चेत्यर्थः । हेत्वसिद्धिं शङ्कते—**नन्विहेति** । प्रकृतप्राणवित्परामर्शक एष-शब्दो न भवति, तस्य यच्छब्दपरतन्त्रत्वेन सत्यवादिवाचित्वात् । अतः प्राणप्रकरणं विच्छिन्नमिति हेतुसिद्धिरित्याह—**अत्रोच्यत इति** । सत्येनातिवादित्वं विशेषः, तद्वतो य एष इत्युक्तेर्न पूर्वानुकर्ष इत्यर्थः । य एष प्राणविदतिवदतीत्यनूद्य स सत्यं वदेदिति विधानान्न प्राणप्रकरणविच्छेद इति दृष्टान्तेन शङ्कते—**नन्विति** । सत्यशब्दो ह्यबाधिते रूढो ब्रह्म-वाचकः, तदन्यस्य मिथ्यात्वात् । सत्यवचने त्वबाधितार्थसंबन्धाल्लाक्षणिक इति नात्र लक्ष्यवचनविधिरित्याह—**नेति ब्रूम इति** । किंच सत्येन ब्रह्मणातिवदतीति तृतीयाश्रुत्या ब्रह्मकरणकमतिवादित्वं श्रुतं, तस्य प्रकरणाद्बाधो न युक्त इत्याह—**श्रुत्या हीत्यादिना** । **अत्रेति** । सत्यवाक्य इत्यर्थः । एवं सत्येनेति श्रुत्या प्रकरणं बाध्यमित्युक्त्वा तुशब्देनापि बाध-

भामतीव्याख्या

सत्येनातिवदति' इत्युक्त्वा भूमोच्यते । तत्र सत्यशब्दः परमार्थे निरूढवृत्तिः श्रुत्या परमार्थमाह । परमार्थश्च परमात्मैव । ततो ह्यन्यद्विकारजातमनृतं कयाचिदपेक्षया कथंचित्सत्यमुच्यते । तथाच 'एष तु वा अतिवदति यः सत्येनातिवदति' इति ब्रह्मणोऽतिवादित्वं श्रुत्याऽन्यनिरपेक्षया लिङ्गादिभ्यो बलीयस्यावगमितं कथमिव संनिधानमात्रात् श्रुत्याद्यपेक्षादतिदुर्बलात्कथंचित्प्राणविषयत्वेन शक्यं व्याख्यातुम् । एवं च प्राणादूर्ध्वं ब्रह्मणि भूमावगम्यमानो न प्राणविषयो भवितुमर्हति, किंतु सत्यस्य परमात्मन एव । एवं चानात्मविद आत्मानं विविदिषोर्नारदस्य प्रश्ने परमात्मानमेवास्मै व्याख्यास्यामीत्यभिसंधिमान्सनत्कुमारः सोपानारोहणन्यायेन स्थूलादारभ्य तत्तत्सूक्ष्मव्युत्पादनक्रमेण भूमानमतिदुर्ज्ञानतया परमसूक्ष्मं व्युत्पादयामास । नच प्रश्नपूर्वताप्रवाहपतितेनोत्तरेण सर्वेण प्रश्नपूर्वेणैव भवितव्यमिति नियमोऽस्तीत्यादिसुगमेन भाष्येण व्युत्पादितम् । विज्ञानादिसाधनपरम्परा मननश्रद्धादिः, प्राणान्ते

आनन्दगिरीयव्याख्या

**प्राणादिति** । भूम्नो धर्म्याकाङ्क्षायां ब्रह्मणः सत्यस्याधिकारात्तदेव संबध्यत इति भावः । प्राणे हेतोरयोगमाह—**प्राण इति** । दृष्टान्तद्वारोक्तं व्यनक्ति—**न हीति** । अस्मिन्प्रकरणे यस्मादूर्ध्वं यो निर्दिश्यते स ततोऽतिरिच्यते, प्राणाच्चोपरिष्टादुपदिष्टो भूमेति सोऽपि ततोऽन्यः स्यादिति भावः । तत्र तत्रेति पर्यायभेदोक्तिः । हेत्वसिद्धिं शङ्कते—**नन्विति** । प्रतिवचनद्वारा प्रश्नकल्पनामाशङ्क्योक्तम्—**नापीति** । स्वपक्षे पूर्वपक्षी हेतोः सत्त्वमाह—**प्राणेति** । सिद्धान्ते हेत्वसिद्धिं निगमयति—**तस्मादिति** । सिद्धान्ती हेतुसमर्थनमाह—**अत्रेति** । तत्र परकीयहेतुं निरस्यति—**न तावदिति** । एषशब्दस्य यच्छब्दपारतन्त्र्यान्न प्रकृतप्राणपरामर्शित्वमतोऽवान्तरप्रकरणं विच्छिन्नमित्युक्ते शङ्कते—**नन्विति** । सत्यस्य प्रधानत्वाद्विशेषवादस्य तद्विषयत्वमेव न प्राणविषयतेत्याह—**कथमिति** । सत्यशब्दो यथार्थोक्तिवाचीत्यङ्गीकृत्य दृष्टान्तेन प्रत्याह—**यथेति** । तृतीयाश्रुत्या साधकतमार्थया सत्यज्ञानेनातिवादित्वान्तरविधानात्प्रकरणेन श्रुत्यर्थपरित्यागासिद्धिरित्याह—**नेतीति** । श्रुत्यर्थमेव स्फुटयति—**श्रुत्येति** । वाक्यमत्रेत्युक्तम् । अतिवादित्वलिङ्गप्रत्यभिज्ञातप्राणस्यैव प्रतिपाद्यत्वे सत्यशब्दस्तदीयगुणविधायकः स्यादित्युक्तमित्याशङ्क्याह—**नेति** । अतिवादित्ववाक्यं सप्तम्यर्थः । का तर्हि प्राणविज्ञानस्य प्रसक्तिः, तत्राह—**प्रकरणात्त्विति** । संबध्येत अतिवादित्वे हेतुत्वेनेति शेषः । प्रकरणस्य प्रमाणत्वात्तत्कृतोऽपि संबन्धोऽस्त्वि-

रोधेन श्रुतिः परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छते 'एष तु वा अतिवदति' इति । 'सत्यं त्वेव विजिज्ञासितव्यम्' (छा० ७।१६) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्माद्यथैकवेदप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद्द्रष्टव्यम् । नच प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति । प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः । तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति । यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तत्र सत्यमिति परं ब्रह्मोच्यते, परमार्थरूपत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१) इति च श्रुत्यन्तरात् । तथा व्युत्पादिताय नारदाय 'सोऽहं भगवः सत्येनातिवदानि' इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति । तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते । तस्मादस्ति प्राणादधि भूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति । एवं चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति । प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । न हि प्राणस्य मुख्यया वृत्त्यात्मत्वमस्ति । नचान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, 'नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६।१५) इति श्रुत्यन्तरात् । 'तं मा भगवाञ्शोकस्य पारं तारयतु' (छा० ७।१।३) इति चोपक्रम्योपसंह-

---

रत्नप्रभाव्याख्या

माह—**प्रकृतेति** । विजिज्ञास्यत्वलिङ्गाच्च पूर्वोक्ताद्भिन्नमित्याह—**सत्यं त्वेवेति** । प्रकरणविच्छेदे दृष्टान्तमाह—**तस्मादिति** । श्रुतिलिङ्गबलादेतत्सत्यं प्रकृतात्प्राणात्प्राधान्येन भिन्नं द्रष्टव्यमित्यर्थः । एवमतिवादित्वस्य ब्रह्मसंबन्धोक्त्या प्राणलिङ्गत्वं निरस्तम् । यत्तु प्रश्नं विनोक्तत्वलिङ्गाद्भूमा प्राण इति, तत्र, तस्याप्रयोजकत्वादित्याह—**न चेति** । प्रश्नभेदादर्थभेद इति न नियमः, एकस्यात्मनो मैत्रेय्या बहुशः पृष्टत्वात् । प्रश्नं विनोक्तचातुर्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः । तत्र यथा चतुर्वेदत्वस्य प्रकृतासंबन्धादर्थभेदः, एवमिहापीति स्फुटयति—**तत्रेत्यादिना** । सत्यपदेन प्राणोक्तिरित्यत आह—**तत्र सत्यमिति** । विज्ञानं निदिध्यासनम् । आदिपदान्मननश्रद्धाश्रवणमनःशुद्धिनिष्ठातद्धेतुकर्माणि गृह्यन्ते । इमान्यपि श्रवणादीनि ज्ञेयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि । एवं श्रुतिलिङ्गैः प्राणस्यावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तबहुत्वधर्मात्याह—**तत्र यदिति** । किंच 'संनिहितादपि व्यवहितं साकाङ्क्षं बलीयः' इति न्यायेन संनिहितं निराकाङ्क्षं प्राणं दृष्ट्वा वाक्योपक्रमस्थ आत्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह—**एवं चेति** । किंच शोकस्य पारमित्युपक्रम्य तमसः पारमित्युपसंहारात्, शोकस्य मूलोच्छेदं विना तरणायोगाच्च, शोकपदेन मूलतमो गृह्यते । तन्निवर्तकज्ञानगम्यत्वलिङ्गादात्मा ब्रह्मेत्याह—**न चान्यत्रेति** । ब्राह्मणमात्मायत्तत्वं प्राणस्य वदतीति संबन्धः । नन्विदं चरमं ब्राह्मणं ब्रह्मपरमस्तु,

भामतीव्याख्या

चानुशासने तावन्मात्रेणैव प्रकरणसमाप्तेर्न प्राणस्यान्यायत्तताेच्येत । तदभिधाने हि सापेक्षत्वेन न प्रकरणं समाप्येत । तस्माद्भेदं

आनन्दगिरीयव्याख्या

द्भव्य इत्याशङ्क्याह—**तत्रेति** । न परं प्रकरणानुरोधेन तृतीयाश्रुतिर्विरुध्येत किंतु तुशब्दश्चेत्याह—**प्रकृतेति** । नच लिङ्गोपेतप्रकरणं श्रुतिमात्राद्बलीयः, लिङ्गस्यातद्विषयोक्तेरिति भावः । यत्तु सत्यशब्दस्य गुणविधिपरत्वं, तन्न, वाक्यान्तरविरोधादित्याह—**सत्यं त्विति** । तुशब्देनाङ्गविशेषविधिः सूच्यते किंवा प्रकृतव्यावृत्तिरिति संदेहापोहार्थमाह—**तस्मादिति** । अवान्तराधिकारविच्छेदादिति हेत्वर्थः । प्राणादेरर्थान्तरं सत्यं प्रशंसितुं सत्यज्ञानेनातिवादित्वमुक्तमित्याह—**तादृगिति** । यत्तूक्तं प्राणादधि भूयःप्रश्नप्रत्युक्ती नेति, तत्राह—**नचेति** । किं तर्हि कारणमर्थान्तरविवक्षायामित्याशङ्क्याह—**प्रकृतेति** । असति प्रकृतिसंबन्धायोगे सतोरपि प्रश्नप्रतिवचनयोरर्थैनयस्य मैत्रेय्यादौ दृष्टत्वात्, तदभावेऽपि प्रकृतसंबन्धायोगे तद्भेदस्य दर्शनात्, प्रश्नादिसत्त्वमर्थान्तरत्वानिमित्तमिति भावः । 'नापृष्टः कस्यचिद्ब्रूयात्' इति स्मृतेरप्रश्ने प्रत्युक्तिरयुक्तेत्याशङ्क्यापृष्टेनापि बोधनीयः शिष्यो जिज्ञासुरिति मत्वाह—**तत्रेति** । सत्यामर्थान्तरविवक्षायामिति यावत् । तदेवाभिनयति—**यदिति** । सत्यशब्दार्थो भूमापि परस्मादर्थान्तरमित्याशङ्क्याह—**तत्रेति** । वाक्यं सप्तम्यर्थः । परस्मिन्ब्रह्मणि सत्यशब्दस्य प्रयुक्तपूर्वकत्वाच्च तद्विषयतेत्याह—**सत्यमिति** । तथापि विज्ञानमननश्रद्धानिष्ठाकृतीनामन्यतमो भूमा, न सत्यं ब्रह्मेत्याशङ्क्याह—**तथेति** । तेषां साधनत्वादेव फलभूतभूमतासिद्धिरित्यर्थः । तथापि कथं सत्यस्यैव तथात्वमत आह—**तत्रेति** । हेतूक्तिद्वारा भूमोपदेशे प्रस्तुते सतीत्यर्थः । इहेति वाक्योक्तिः । हेत्वसिद्धिमुद्धृत्य फलितमाह—**तस्मादिति** । परात्मा भूमेत्यत्र महाप्रकरणमनुगृहीतमिति हेत्वन्तरमाह—**एवं चेति** । यत्तु प्राणविषयत्वमात्मशब्दस्योक्तं तदनूद्य दूषयति—**प्राण इति** । शोकनिवृत्तिवाक्यमिहेत्युक्तम् । विशिष्टफलदृष्टेरपि परात्मैवात्मशब्दार्थो न प्राण इत्याह—**नचेति** । नात्र मुख्यं शोकतरणं किंत्वौपचारिकमित्याशङ्क्योपक्रमोपसंहारैक्य-

रति—'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' (छा० ७।२६।२) इति। तम इति शोकादिकारणमविद्योच्यते। प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्येत। 'आत्मतः प्राणः' (छा० ७।२६।१) इति च ब्राह्मणम्। प्रकरणान्ते परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेत्, न। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' (छा० ७।२४।१) इत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षणात्। वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥ ८ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते। 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति दर्शनादिव्यवहाराभावं भूमन्यवगमयति। परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिश्रुत्यन्तरात्। योऽप्यसौ सुषुप्तावस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षयोक्तो न प्राणस्वभावविवक्षया, परमात्मप्रकरणात्। यदपि तस्यामवस्थायां सुखमुक्तं, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम्। यत आह—'एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ० ४।३।३२) इति। इहापि 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति। 'यो वै भूमा तदमृतम्' इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति। विकाराणाममृतत्वस्यापेक्षिकत्वात्, 'अतोऽन्यदार्तम्' (बृ० ३।४।२) इति च श्रुत्यन्तरात्। तथा च सत्यत्वं

---

रत्नप्रभाव्याख्या

ततः प्रागुक्तो भूमा प्राण इति शङ्कते—**प्रकरणान्त इति**। तच्छब्देन भूमानुकर्षान्मैवमित्याह—**नेति** ॥ ८ ॥ भूम्नो ब्रह्मत्वे लिङ्गान्तरमाह—**धर्मेति सूत्रम्**। यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वं च प्राणेषु योज्यमिति तदनूद्य विघटयति—**योऽप्यसावित्यादिना**। सति बुद्ध्याद्युपाधावात्मनो द्रष्टृत्वादिः, तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं प्रश्नोपनिषदि 'न शृणोति न पश्यति' इति परमात्मानं प्रकृत्योक्तम्। तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य। यतः श्रुत्यन्तरमात्मन एव सुखत्वमाह तस्मादित्यर्थः। आमयो नाशादिदोषः तत्सहितं सामयम्। आर्तं नश्वरम्। 'स एवाधस्तात् स उपरिष्टात्' इति

भामतीव्याख्या

प्राणस्य प्रकरणमपि तु यदायत्तः प्राणस्तस्य, स चात्मेत्यात्मन एव प्रकरणम्। शङ्कते—**प्रकरणान्त इति**। प्राणप्रकरणसमाप्तावित्यर्थः। निराकरोति—**न। स भगव इति**। संदंशन्यायेन हि भूम्न एतत्प्रकरणं, स चेद्भूमा प्राणः, प्राणस्यैतत्प्रकरणं भवेत्। तच्चायुक्तमित्युक्तम् ॥ ८ ॥ न केवलं श्रुतेर्भूमात्मता परमात्मनः, लिङ्गादपीत्याह सूत्रकारः—**धर्मोपपत्तेश्च**। यदपि पूर्वपक्षिणा कथंचिन्नीतं तदनुभाष्य भाष्यकारो दूषयति—**योऽप्यसौ सुषुप्तावस्थायामिति**। सुषुप्तावस्थायामि

आनन्दगिरीयव्याख्या

स्यान्मैवमित्याह—**तमिति**। उपक्रमे शोकस्योपसंहारे तमसो निवृत्तिवचनाद्विप्रतिपत्तिमाशङ्क्याह—**तम इतीति**। कारणनिवृत्त्या कार्यनिवृत्तिरुपसंहारे कार्यनिवृत्त्या कारणनिवृत्तिरुपक्रमे विवक्षितेत्यविप्रतिपत्तिरित्यर्थः। किंच प्राणो यदायत्तस्तस्येदं प्रकरणमित्यात्मैव प्रकरणी भूमेत्याह—**प्राणान्ते चेति**। प्राणस्यान्यायत्ततैव कुतोऽत्रोच्यते, तत्राह—**आत्मत इति**। प्राणाधिकारसमाप्तौ परात्मवचनात्पूर्वोक्तस्य भूम्नो न परमात्मतेति शङ्कते—**प्रकरणेति**। भूम्न एव सर्वनाम्नानुकर्षणाद्वाक्यशेषस्यापि तदर्थत्वात्तस्यैवेदं प्रकरणमिति न प्राणस्य भूमतेत्याह—**नेत्यादिना**। किंच भूमरूपतापि प्राणे न मुख्येत्याह—**वैपुल्येति**। प्राणस्य स्वविकारापेक्षया भूमत्वेऽपि न मुख्यमिति वक्तुं सुतरामित्युक्तम् ॥ ८ ॥ परो भूमेत्यत्र लिङ्गान्तरमाह—**धर्मेति**। सूत्रं व्याकरोति—**अपि चेति**। उपपत्तिं दर्शयितुं भूम्नि दर्शनाद्यभावं दर्शयति—**यत्रेति**। कथमेतावता परात्मधीः, तत्राह—**परमात्मनीति**। प्राणेऽपि तदुपपत्तिरुक्तेत्याशङ्क्याह—**योऽपीति**। उक्तो 'न शृणोति' इत्यादिनेति शेषः। प्राणस्वभावविवक्षया तस्यानुक्तत्वे हेतुमाह—**परमात्मेति**। तत्प्रकरणे 'न शृणोति' इत्यादेरुक्तेरित्यर्थः। स्वप्नजागरितयोः सति मनसि दर्शनादिव्यवहारात्तदभावे स्वापे तदभावादन्वयव्यतिरेकाभ्यां मनोधीनो दर्शनादिर्नात्मकृतः। स तु स्वतोऽलिङ्ग इति मत्वा 'न शृणोति' इत्यादिना सर्वव्यवहाराभावः सुषुप्तावुक्तो न प्राणविवक्षया परप्रकरणविरोधादित्यर्थः। भूम्नः श्रुतं सुखत्वं प्राणेऽपि स्यादित्युक्तं प्रत्याह—**यदपीति**। तस्य सुखत्वे मानमाह—**यत इति**। इतश्चात्मन एव सुखत्वमित्याह—**इहापीति**। तस्यैव सुखत्वं प्रतियोगिप्रत्युक्त्या स्फुटयति—**नेति**। उक्तश्रुतेरर्थमाह—**सामयेति**। आमयेन दुःखेन सहितं सामयम्। धर्मद्वयमुक्त्वा धर्मान्तरमाह—**यो वा इति**। प्राणस्यापि दर्शितममृतत्वमित्याशङ्क्याह—**विकाराणामिति**। तस्य न

देववत्' (ब्र० १।१।३०) इत्यादिना । वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः—'अथ य एष संप्रसादः' (छा० ८।३।४) इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीति । अत आह—अन्यार्थोऽयं जीवपरामर्शो न जीवस्वरूपपर्यवसायी किं तर्हि परमेश्वरस्वरूपपर्यवसायी। कथम्। संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसंपद्य विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते। यदस्योपसंपत्तव्यं परं ज्योतिर्येन स्वेन रूपेणायमभिनिष्पद्यते स एष आत्माऽपहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

यदप्युक्तम्, 'दहरोऽस्मिन्नन्तराकाशः' इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति, तस्य परिहारो वक्तव्यः। उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इति 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' (ब्र० १।२।७) इत्यत्र। स एवेह परिहारोऽनुसंधातव्य इति सूचयति। श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति ॥ २१ ॥

---

### रत्नप्रभाव्याख्या

सूत्राण्यादिपदार्थः। नन्वद्वैतस्य शास्त्रार्थत्वे द्वैतापेक्षविधिविरोधः, तत्राह—**वर्णितश्चेति**। अद्वैतमजानतः कल्पितद्वैताश्रया विधयो न विदुष इति सर्वमुपपन्नमित्यर्थः ॥१९॥ एवं प्रजापतिवाक्ये जीवानुवादेन ब्रह्मण एवापहतपाप्मत्वाद्युक्तेर्जीवे तदसंभवान्न जीवो दहर इत्युक्तम्। तर्हि जीवपरामर्शस्य का गतिरित्यत आह—**अन्यार्थश्चेति**। सूत्रं व्याचष्टे—**अथेत्यादिना**। प्रकृते दहरे विशेषो गुणस्तदुपदेशोऽपि नेत्यर्थः। तत्र दहरवाक्यशेषरूपं संप्रसादवाक्यमाशङ्कापूर्वकं दहरब्रह्मपरत्वेन व्याचष्टे—**कथमित्यादिना** ॥२०॥ उपास्यत्वादल्पत्वमुक्तमिति व्याख्याय श्रुत्या निरस्तमित्यर्थान्तरमाह—**श्रुत्यैव चेदमिति**।

### भामतीव्याख्या

जीवपरामर्शेनेत्युक्तमित्यत आह—**अन्यार्थश्च परामर्शः**। जीवस्योपाधिकल्पितस्य ब्रह्मभाव उपदेष्टव्यः, न चासौ जीवमपरामृश्य शक्य उपदेष्टुमिति तिसृष्ववस्थासु जीवः परामृष्टः। तद्भावप्रविलयनं तस्य पारमार्थिकं ब्रह्मभावं दर्शयितुमित्यर्थः ॥ २० ॥

### आनन्दगिरीयव्याख्या

जीवस्य ब्रह्मैक्यं, तदैक्ये वा कुतो विधिविरोधो नेत्याशङ्क्य विशिष्टस्यामुख्यात्मत्वात्तद्विदश्च कर्माधिकारान्मुख्यात्मविद्यावतस्तस्यागाधिकाराच्च काण्डयोर्विरोधोऽस्तीत्युक्तं स्मारयति—**वर्णितश्चेति** ॥ १९ ॥ जीवानुवादेन ब्रह्मताविधाने विरोधाभावात्प्राजापत्ये वाक्ये जीवस्याप्रतिपाद्यत्वान्न तदवष्टम्भेन दहरवाक्ये जीवाशङ्केत्युक्तम्। इदानीं दहरवाक्यशेषस्य गतिमाह—**अन्यार्थश्चेति**। सूत्रव्यावर्त्यां शङ्कामाह—**अथेति**। वाक्यभेदप्रसङ्गं हेतूकृत्योक्तम्—**न जीवेति**। प्रकृतो विशेषो दहराकाशस्तस्यापि नायमुपदेशस्तस्याजीवत्वादित्याह—**नेति**। उत्तरत्वेन सूत्रमवतार्य व्याकरोति—**अत इति**। अन्यार्थत्वमेवाकाङ्क्षाद्वारा स्फोरयति—**किं तर्हीति**। संप्रसादपदे जीववादिनि श्रुते नेश्वरपरत्वं वाक्यस्येत्याक्षिपति—**कथमिति**। व्याख्यया वाक्यस्य परस्मिन्नेव तात्पर्यमाह—**संप्रसादेति**। यत्तु जीवस्य नापहतपाप्मत्वादीति, तत्राह—**यदीति**। जीवतादात्म्यविषयत्वं संबन्धविषयत्वं चोभयरूपत्वं देहद्वयविषयत्वं वा। जीवपरामर्शस्य गतिमुक्त्वा दहरश्रुतेः शङ्काद्वारा गतिमाह—**अल्पेति** ॥ २० ॥ शङ्काभागं विभजते—**यदपीति**। तस्य परममहत्त्वादित्यर्थः। जीवेऽपि कथमल्पा श्रुतिर्महत्त्वाविशेषात्, तत्राह—**जीवस्येति**। तदुक्तमित्येतद्व्याचष्टे—**उक्तो हीति**। तमेव स्मारयति—**परमेति**। कुत्रेदं समाधानमुक्तं, तत्राह—**अर्भकेति**। तथापि परस्य परममहतो नास्ति दहरत्वमित्यत्र किमायातं, तत्राह—**स एवेति**। तदुक्तमित्यस्य व्याख्यान्तरमाह—**श्रुत्येति**। तदेवं श्रुतिलिङ्गाभ्यां दहरवाक्यं ध्येये परस्मिन्नन्वितं, प्राजापत्यवाक्यं तु

## अनुकृतेस्तस्य च ॥ २२ ॥




न तत्र सूर्यो भातीति तेजोऽन्तरमुतापि चित् ॥ तेजोऽभिभावकत्वेन तेजोऽन्तरमिदं महत् ॥ १ ॥
चित्स्यात्सूर्यादिभास्यत्वात्तादृक्तेजोऽप्रसिद्धितः ॥ सर्वस्मात्पुरतो भानात्तद्भासा चान्यभासनात् ॥ २ ॥

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु० २।२।१०) इति समामनन्ति । तत्र यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम् । कुतः, तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात् । तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावक एव सूर्ये भासमानेऽहनि न भासत इति प्रसिद्धम् । तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभाव एव कश्चिदित्यवगम्यते । अनुभानमपि तेजःस्वभावक एवोपपद्यते, समानस्वभावकेष्वनुकारदर्शनात् । गच्छन्त-

---

#### रत्नप्रभाव्याख्या

एवं दहरवाक्यं प्रजापतिवाक्यं च सगुणे निर्गुणे च समन्वितमिति सिद्धम् ॥ २१ ॥ **अनुकृतेस्तस्य च** । मुण्डकवाक्यमुदाहरति—**न तत्रेति** । तस्मिन् ब्रह्मणि विषये न भाति, तं न भासयतीति यावत् । यदा चन्द्रभास्करादिर्न भासयति तदा अल्पदीप्तेरग्नेः का कथेत्याह—**कुत इति** । किंच सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकत्वमित्याह—**तमेवेति** । अनुगमनवदनुभानं स्वगतमिति शङ्कां निरस्यति—**तस्येति** । तत्रेति सप्तम्याः सति विषये च साधारण्यात्संशयमाह—**तत्रेति** । पूर्वत्रात्मश्रुत्यादिबलादाकाशशब्दस्य रूढित्यागादीश्वरे वृत्तिराश्रिता । तथेहापि सतिसप्तमीबलाद्वर्तमानार्थत्यागेन यस्मिन्सति सूर्यादयो न भासन्ति स तेजोविशेष उपास्य इति भविष्यदर्थे वृत्तिराश्रयणीया । अधुना भासमाने सूर्यादौ न भातीति विरोधादिति दृष्टान्तेन पूर्वपक्षयति—**तेजोधातुरिति** । तेजोध्यानं, निर्गुणस्वयंज्योतिरात्मज्ञानमित्युभयत्र फलम् । तेजोधातुत्वे लिङ्गमाह—**तेजोधातूनामिति** । यत्तेजसोऽभिभावकं तत्तेज इति व्याप्तिमाह—**तेजःस्वभावकमिति** । यस्मिन्सति यन्न भाति तदनु तद्भातीति विरुद्धमित्यत आह—**अनुभानमिति** । ततो निकृष्टभानं विवक्षितमिति भावः । मुख्यसंभवे विवक्षा-

#### भामतीव्याख्या

**अल्पश्रुतेरिति चेत्तदुक्तम्** । निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ २१ ॥ **अनुकृतेस्तस्य च** । 'अभानं तेजसां दृष्टं सति तेजोऽन्तरे यतः । तेजोधात्वन्तरं तस्मादनुकाराच्च गम्यते ॥' बलीयसा हि सौर्येण तेजसा मन्दं तेजश्चन्द्रतारकादि भूयमानं दृष्टं, न तु तेजसाऽन्येन । येऽपि पिधायकाः प्रदीपस्य गृहघटादयो न ते स्वभासा प्रदीपं भासयितुमीशते । श्रूयते च—'तस्य भासा सर्वमिदं विभाति' इति । सर्वशब्दः प्रकृतसूर्याद्यपेक्षः । न चातुल्यरूपेऽनुभानमित्यनुकारः संभवति । नहि धावन्तं वराहमनुधावन्तीति कृष्णविहङ्गानुधावनमुपपद्यते गवाम्, अपि तु तादृशसूकरानुधावनम् । तस्माद्यद्यपि 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' इति ब्रह्म प्रकृतं, तथाप्यभिभवानुकारसामर्थ्यलक्षणेन लिङ्गेन प्रकरणबाधया तेजोधातुरवगम्यते, न तु ब्रह्म लिङ्गानुपपत्तेः । तत्र तं तस्येति च सर्वनामपदानि प्रदर्शनीयमेवावश्यन्ति । नच तच्छब्दः पूर्वोक्तपरामर्शीति नियमः समस्ति नहि 'तेन रक्तं रागात्' 'तस्यापत्यम्' इत्यादौ पूर्वोक्तं किंचिदस्ति । तस्मात्प्रमाणान्तराप्रतीतमपि तेजोऽन्तरमलौकिकं शब्दादुक्तत्वेन गम्यत इति प्राप्ते उच्यते—'ब्रह्मण्येव हि तल्लिङ्गं न तु तेजस्यलौकिके । तस्माच्च तदुपास्यत्वं ब्रह्म ज्ञेयं तु गम्यते ॥' पूर्वो-

#### आनन्दगिरीयव्याख्या

ज्ञेये परस्मिन्नन्वितमिति स्थितम् ॥ २१ ॥ 'परं ज्योतिरुपसंपद्य'इत्यादिवाक्यार्थविचारप्रसङ्गात् 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रुतपरंज्योतिष्ट्वसाधकं न तत्रेत्यादिवाक्यं विमृशति—**अनुकृतेरिति** । आथर्वणवाक्यमादत्ते—**न तत्रेति** । सूर्यस्यानाभासकत्वे रात्राविव चन्द्रादेर्भासकत्वं, नेत्याह—**नेति** । विद्युतामपि फल्गुत्वमनुभवसिद्धमिति मत्वोक्तम्—**नेमा इति** । कैमुतिकन्यायमाह—**कुत इति** । इतश्च सूर्यादेर्न ब्रह्मणि भासकत्वमित्याह—**तमेवेति** । अनुगमनवदनुभानं स्वगतभानकृतमित्याशङ्क्याह—**तस्येति** । उक्ते वाक्ये विषयं निष्कृष्य सप्तम्याः सति विषये च साधारण्यहेतोः संशयमाह—**तत्रेति** । पूर्वत्रात्मश्रुत्यादिविरोधादाकाशशब्दस्य रूढित्यागेनेश्वरे वृत्तिरुक्ता, तथेहापि सतिसप्तम्यां योग्यानुपलब्धिविरोधान्न भातीत्यस्य वर्तमानार्थतात्यागाद्यस्मिन्सति सूर्यो न भाति स तेजोधातुरुपास्यत्वेनोच्यत इति पूर्वपक्षमाह—**तेज इति** । उक्ताथर्वणश्रुतेर्निर्विशेषे ज्ञेये ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे तेजोधातोर्ध्यानं, सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः । सप्तम्या विषयेऽपि संभवादध्याहारस्यायुक्तत्वान्न तेजोधातुरिति शङ्कते—**कुत इति** । विषयसप्तम्या णिजध्याहारादितरत्र लिङ्गानुग्रहात्तेजोधातुरेवायमित्याह—**तेजोधातूनामिति** । कुतोऽस्य तेजोधातोर्लिङ्गतेत्याशङ्क्याह—**तेजःस्वभावकमिति** । प्रसिद्धिमनुरुध्य दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**तथेति** । यस्मिन्सति यन्न भाति तत्तमनुभातीति विरुद्धमिति कुतः सतिसप्तमीत्याशङ्क्याह—**अनुभानमिति** । तमनुभातीति तदपेक्षया निकृष्टप्रकाशत्वं

मनुगच्छतीतिवत् । तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः—प्राज्ञ एवात्मा भवितुमर्हति । कस्मात्, अनुकृतेः । अनुकरणमनुकृतिः । यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं, तत्प्राज्ञपरिग्रहेऽवकल्पते । 'भारूपः सत्यसंकल्पः' ( छा० ३।१४।२ ) इति हि प्राज्ञमात्मानमामनन्ति । न तु तेजोधातुं कंचित्सूर्यादयोऽनुभान्तीति प्रसिद्धम् । समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति यं भान्तमनुभायुः । न हि प्रदीपः प्रदीपान्तरमनुभाति । यदप्युक्तं, समानस्वभावकेष्वनुकारो दृश्यत इति । नायमेकान्तो नियमः । भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते । यथा सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति । अनुकृतेरित्यनुभानमसूसुचत् । तस्य चेति चतुर्थं पादमस्य श्लोकस्य सूचयति । 'तस्य भासा सर्वमिदं विभाति' इति तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति । 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ( बृ० ४।४।१६ ) इति हि प्राज्ञमात्मानमामनन्ति । तेजोन्तरेण सूर्यादितेजो विभातीत्यप्रसिद्धं, विरुद्धं च तेजोन्तरेण तेजोन्तरस्य प्रति-

रत्नप्रभाव्याख्या

पपत्तेः मुख्यानुभानलिङ्गात्सर्वभासकः परमात्मा स्वप्रकाशकोऽत्र ग्राह्य इति सिद्धान्तमाह—**प्राज्ञ इति** । प्राज्ञत्वं स्वप्रकाशकत्वं भासकत्वार्थमुक्तम् । तत्र श्रुतिमाह—**भारूप इति** । मानाभावाच्च तेजोधातुर्न ग्राह्य इत्याह—**न त्विति** । किंच सूर्यादयस्तेजोऽन्तरभानमनु न भान्ति, तेजस्त्वात्, प्रदीपवदित्याह—**समत्वाच्चेति** । योऽयमनुकरोति स तज्जातीय इति नियमो नास्तीत्याह—**नायमेकान्त इति** । पौनरुक्त्यमाशङ्क्योक्तानुवादपूर्वकं सूत्रोक्तं हेत्वन्तरं व्याचष्टे—**अनुकृतेरिति** । 'तमेव भान्तम्' इत्येवकारोक्तं तद्भानं विना सर्वस्य पृथग्भानाभावरूपमनुभानमनुकृतेरित्यनेनोक्तम्—**तस्य चेति** । सर्वभासकत्वमुक्तमित्यपौनरुक्त्यमित्यर्थः । आत्मनः सूर्यादिभासकत्वं श्रुत्यन्तरप्रसिद्धमविरुद्धं चेत्याह—**तद्देवा इति** । सर्वशब्दः प्रकृतसूर्यादिवाच-

भामतीव्याख्या

भान्तम्' इत्यत्र किमलौकिकं तेजः कल्पयित्वा सूर्यादीनामनुभानमुपपाद्यताम्, किंवा 'भारूपः सत्यसंकल्पः' इति श्रुत्यन्तरप्रसिद्धेन ब्रह्मणो भानेन सूर्यादीनां भानमुपपाद्यतामिति विषये न श्रुतसंभवेऽश्रुतस्य कल्पना युज्यत इत्यप्रसिद्धं नालौकिकमुपास्यं तेजो युज्यते, अपि तु श्रुतिप्रसिद्धं ब्रह्मैव ज्ञेयमिति । तदेतदाह—**प्राज्ञ एवात्मा भवितुमर्हति** । विरोधमाह—**समत्वाच्चेति** । ननु स्वप्रतिभाने सूर्यादयश्चाक्षुषं तेजोऽपेक्षन्ते । न ह्यन्धेनैते दृश्यन्ते । तथा तदेव चाक्षुषं तेजो बाह्यसौर्यादितेजआप्यायितं रूपादि प्रकाशयति नानाप्यायितम्, अन्धकारेऽपि रूपदर्शनप्रसङ्गादित्यत आह—**यं भान्तमनुभायुरिति** । नहि तेजोऽन्तरस्य तेजोऽन्तरापेक्षां व्यासेधामः, किंतु तद्भानमनुभानम् । नच लोचनभानमनुभान्ति सूर्यादयः । तदिदमुक्तम्—**नहि प्रदीप इति** । पूर्वपक्षमनुभाष्य व्यभिचारमाह—**यदप्युक्तमिति** । एतदुक्तं भवति—यदि स्वरूपसाम्याभावमभिप्रेत्यानुकारो निराक्रियते, तदा व्यभिचारः । अथ क्रियासाम्याभावं, सोऽसिद्धः । अस्ति हि वायुरजसोः स्वरूपविसदृशयोरपि नियतदिग्देशवहनक्रियासाम्यम् । यन्त्वयःपिण्डयोस्तु यद्यपि दहनक्रिया न भिद्यते तथापि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासादृश्यं व्याख्येयम् । तदेवमनुकृतेरिति विभज्य तस्य चेति सूत्रावयवं विभजते—**तस्य चेति चतुर्थमिति** । ज्योतिषां सूर्यादीनां

आनन्दगिरीयव्याख्या

कस्यचित्तेजोधातोरुपास्यतात्राभीष्टेत्युपसंहरति—**तस्मादिति** । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञामध्याहरति—**एवमिति** । लिङ्गसिद्धं तेजोधातुं त्यक्त्वा कुतोऽयं नियमः स्यादिति शङ्कते—**कस्मादिति** । हेतुमादाय व्याकरोति—**अनुकृतेरिति** । किं तदनुकरणं, तदाह—**यदेतदिति** । तेजसामनुभानं कथं प्राज्ञं ज्ञापयतीत्याशङ्क्य श्रुत्यन्तरे तस्य भारूपत्वावधारणादित्याह—**भारूप इति** । तेजोन्तरे मानाभावाच्च न तदिह ग्राह्यमित्यनुभानस्यान्यथासिद्धिं निराह—**न त्विति** । न चेदमेव वाक्यं तत्र मानमन्यपरस्य मानान्तरविरोधे देवताधिकरणन्यायानवतारादिति भावः । विरोधाच्चानुभानं परपक्षे न स्यादित्याह—**समत्वाच्चेति** । ननु सूर्यादयश्चाक्षुषं तेजोऽपेक्ष्य भासन्ते, चक्षुष्मतस्तद्भानात्, तत्राह—**यमिति** । चक्षुषोऽनुद्भूतप्रकाशत्वात्तज्जन्यज्ञानविषयत्वे सूर्यादेर्न सजातीयापेक्षेति भावः । तदेव दृष्टान्तेन स्पष्टयति—**न हीति** । पूर्ववादिनोक्तमनुभाषते—**यदपीति** । गच्छन्तमनुगच्छतीति समानस्वभावकेष्वनुकारादनुभानात्तैजसानां सूर्यादीनां सति यस्मिन्भानं निषिध्यते सोऽपि कश्चित्तेजोधातुरित्यनुवादार्थः । अनुकारः स्वभावसाम्यमपेक्षते, क्रियासाम्यं वा । नाद्य इत्याह—**नायमिति** । द्वितीयमङ्गीकुर्वन्नाह—**भौमं वेति** । अग्न्ययःपिण्डयोर्दहनक्रियाभेदाभावेऽपि द्रव्यभेदेन क्रियाभेदं कल्पयित्वा क्रियासाम्यम् । वायुरजसोस्तु नियतदिग्देशगमनमस्त्येव । हेतोरसूत्रानुसारित्वमाशङ्क्योक्तम्—**अनुकृतेरितीति** । सूत्रस्य द्वितीयं पदं हेत्वन्तरत्वेनावतारयति—**तस्य चेति** । चतुर्थपादोपात्तं हेत्वन्तरं स्फोरयति—**तस्येति** । कथमेतावता तस्य प्राज्ञत्वं, तत्राह—**तदिति** । स्वपक्षे मानमुक्त्वा परपक्षे तदभावमाह—**तेजोन्तरेणेति** । न केवलं मानाभावः, तद्विरोधश्चेत्याह—**विरुद्धं चेति** । प्रकृतसूर्यादि-

घातात्। अथवा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते। किं तर्हि 'सर्वमिदम्' इत्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः सा ब्रह्मज्योतिःसत्तानिमित्ता। यथा सूर्यज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत्। 'न तत्र सूर्यो भाति' इति च तत्रशब्दमाहरन्प्रकृतग्रहणं दर्शयति। प्रकृतं च ब्रह्म 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्' (मु० २।२।५) इत्यादिना। अनन्तरं च 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः' इति। कथं तज्ज्योतिषां ज्योतिरित्यत इदमुत्थितम्—'न तत्र सूर्यो भाति' इति। यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधस्तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य इवेतरेषामिति। तत्र तु स एव तेजोधातुरन्यो न संभवतीत्युपपादितम्। ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते। यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते, ब्रह्म तु नान्येन ज्योतिषोपलभ्यते स्वयंज्योतिःस्वरूपत्वात्, येन सूर्यादयस्तस्मिन्भायुः।

रत्नप्रभाव्याख्या

कत्वेन व्याख्यातः। संप्रति तस्यासंकुचद्वृत्तितां मत्वार्थान्तरमाह—**अथवेति**। तत्रेति सर्वनामश्रुत्या प्रकृतं ब्रह्म ग्राह्यमित्याह—न **तत्र सूर्य इति**। किंच स्पष्टब्रह्मपरपूर्वमन्त्राकाङ्क्षापूरकत्वादयं मन्त्रो ब्रह्मपर इत्याह—**अनन्तरं चेति**। हिरण्मये ज्योतिर्मये अन्नाद्यपेक्षया परे कोशे आनन्दमयाख्ये पुच्छशब्दितं ब्रह्म विरजं आगन्तुकमलशून्यं, निष्कलं निरवयवं, शुभ्रं नैसर्गिकमलशून्यं, सूर्यादिसाक्षिभूतं ब्रह्मवित्प्रसिद्धमित्यर्थः। सतिसप्तमीपक्षमनुवदति—**यदपीति**। सूर्याद्यभिभावकतेजोधातौ प्रामाणिके तस्येह ग्रहः शङ्का स्यात्, न तत्र प्रमाणमस्तीत्याह—**तत्रेति**। सिद्धान्ते तत्रेति वाक्यार्थः कथमित्याशङ्क्याह—**ब्रह्मण्यपीति**। सतिसप्तम्यां तु न भातीति श्रुतं वर्तमानत्वं त्यक्त्वा तस्मिन्सति न भास्यन्तीत्यश्रुतभविष्यत्वं कल्पनीयं प्रत्यक्षविरोधनिरासाय। विषयसप्तमीपक्षे तु भासयतीत्यश्रुतणिजध्याहारमात्रमवकल्प्य न श्रुतत्याग इति लाघवं, अतो ब्रह्मणि विषये सूर्यादेर्भासकत्वनिषेधेन ब्रह्मभास्यत्वमुक्तम् इत्यर्थः। येनान्याभास्यत्वेन हेतुना सूर्यादयस्तस्मिन्ब्रह्मणि विषये भासकाः स्युः तथा तु ब्रह्मान्येन नोपलभ्यते स्वप्रकाशत्वादिति योजना। उक्तमेव श्रुत्यन्तरेण द्रढयति—**ब्रह्मेति**। स्वप्रकाशत्वेऽन्याभास्यत्वे च श्रुतिद्वयम्। ग्रहणायोग्यत्वादग्राह्य इत्यर्थः॥२२॥

भामतीव्याख्या

ब्रह्म ज्योतिः प्रकाशकमित्यर्थः। तेजोऽन्तरेणानिन्द्रियभावमापन्नेन सूर्यादितेजो विभातीत्यप्रसिद्धम्। सर्वशब्दस्य हि स्वार्थे निःशेषाभिधानं वृत्तिः। सा तेजोधातावलौकिके रूपमात्रप्रकाशके संकुचेत्। ब्रह्मणि तु निःशेषजगदवभासके न सर्वशब्दस्य वृत्तिः संकुचतीति। **तत्रशब्दमाहरन्निति**। सर्वत्र खल्वयं तत्रशब्दः पूर्वोक्तपरामर्शी। 'तेन रक्तं रागात्' इत्यादावपि प्रकृतेः ... स्मिन्प्रत्ययेऽर्थभेदेऽन्वाख्यायमाने प्रातिपदिकप्रकृत्यर्थस्य पूर्ववृत्तत्वमस्तीति तेनेति तत्परामर्शान्न व्यभिचारः। तथाच सर्वनाम्नी श्रुतिरेव ब्रह्मोपस्थापयति। तेन भवतु नाम प्रकरणाल्लिङ्गं बलीयः, श्रुतिस्तु लिङ्गाद्बलीयसीति श्रौतमिह ब्रह्मैव गम्यत इति। अपि च ... चापेक्षितानपेक्षिताभिधानयोरपेक्षिताभिधानं युक्तं, दृष्टार्थत्वादित्याह—**अनन्तरं च हिरण्मये परे कोश इति**। अस्मिन्मन्त्रे ज्योतिषां ज्योतिरित्युक्तं, तत्र कथं तज्ज्योतिषां ज्योतिरित्यपेक्षायामिदमुपतिष्ठते—**न तत्र सूर्य इति**। स्वातन्त्र्येण तु ... ऽनपेक्षितं स्याददृष्टार्थमिति। **ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पत इति**। अयमभिप्रायः—'न तत्र सूर्यो भाति'

आनन्दगिरीयव्याख्या

विषयतया सर्वशब्दो व्याख्यातः। संप्रति तस्याः संकुचद्वृत्तित्वं मत्वा व्याख्यान्तरमाह—**अथवेति**। कुतो ब्रह्मज्योतिर्व्यतिरेकेण ... रातिरेकेण तत्सत्तामात्रायत्तं सर्वभानं, तत्राह—**यथेति**। प्रकरणादपि ब्रह्मैवात्र ग्राह्यमित्याह—**नेति**। सर्वनाम्ना प्रकृतपरामर्शे कुतो ब्रह्म गृह्यते, तत्राह—**प्रकृतं चेति**। प्रकृतमपि ब्रह्म व्यवहितत्वान्नेह संबन्धार्हमित्याशङ्क्याह—**अनन्तरं चेति**। हिरण्मये ज्योतिर्मयेऽन्नमयाद्यपेक्षया परश्चायं कोशो यमानन्दमयमाचक्षते, तत्र 'ब्रह्म पुच्छं प्रतिष्ठा' इति यत्प्रतिष्ठाभूतं ब्रह्म तत्... तच्च विरजमागन्तुकमलविकलं, निष्कलं निरवयवं, शुभ्रं नैसर्गिकदोषरहितम्। ज्योतिषां सूर्यादीनां ज्योतिरवभासकम्। तच्च विद्वदनुभवसिद्धमित्यर्थः। उदाहरणमपेक्ष्याव्यवहितं ब्रह्मेत्युक्तम्। संप्रत्यपेक्षितानपेक्षिताभिधानयोरपेक्षिताभिधानं न्याय्यमाकाङ्क्षापूरकत्वेन दृष्टार्थत्वादिति विवक्षित्वोक्तम्—**कथमिति**। स्पष्टब्रह्मवादिपूर्वमन्त्राकाङ्क्षापूरकत्वादुत्तरोऽपि मन्त्रो ब्रह्मपर इत्यर्थः। सतिसप्तमीं ... कमनुभाषते—**यदपीति**। सूर्याद्यभिभावके तेजोधातौ प्रामाणिके तस्येह ग्रहो न वेति चिन्ता। तद्भावे मानाभावान्न सोऽस्तीत्याह—**तत्रेति**। ननु ब्रह्मणि प्रामाणिकेऽपि तस्मिन्सति सूर्यादयो न भान्ति तस्य सदाभावात्तेषां सदाभानाभावप्रसङ्गात्, तत्राह—**ब्रह्मण्यपीति**। तत्रेति न सतिसप्तमी किंतु विषयसप्तमी। ततो ब्रह्मणि विषये सूर्यादयो न भान्ति ब्रह्मैव तेषु प्रकाशकत्वेन भातीत्यर्थः। यद्वा सतिसप्तमीं गृहीत्वा तेजोन्तरोक्तौ न भातीति वर्तमानापदेशे मानान्तरविरोधान्न भास्यतीति लक्षणायां श्रुतत्यागेनाश्रुतस्वीकारे गौरवात् ... लाघवाच्च भासयतीति णिजर्थमध्याहृत्य सूर्याद्यभास्यं ब्रह्मैव तद्भासकमिहाभीष्टमिति भावः। यस्माद्घटादिरुपलभ्यते तदपि ब्रह्मणोपलभ्यते चेद्ब्रह्मापि केनचिदन्येनोपलभ्येताविशेषादित्याशङ्क्याह—**ब्रह्म त्विति**। येनोपलभ्यत्वेन सूर्यादयस्तस्मिन्ब्रह्मणि विषये भासकाः

ब्रह्म ह्यन्यद्व्यनक्ति न तु ब्रह्मान्येन व्यज्यते । 'आत्मनैवायं ज्योतिषास्ते' (बृ० ४।३।६) 'अगृह्यो नहि गृह्यते' (बृ० ४।२।४) इत्यादिश्रुतिभ्यः ॥ २२ ॥

## अपि च स्मर्यते ॥ २३ ॥

अपिचेदृग्रूपत्वं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु—'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' इति, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' (१५।६।१२) इति च ॥ २३ ॥

## शब्दादेव प्रमितः ॥ २४ ॥

७ अधिकरणम्

अङ्गुष्ठमात्रो जीवः स्यादीशो वाल्पप्रमाणतः ॥ देहमध्ये स्थितेश्चैव जीवो भवितुमर्हति ॥ १ ॥
भूतभव्येशता जीवे नास्त्यतोऽसाविहेश्वरः ॥ स्थितिप्रमाणे ईशेऽपि स्तो हृदयस्योपलब्धितः ॥ २ ॥

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति श्रूयते । तथा 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्' (का० २।४।१३) इति च । तत्र योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते स किं विज्ञानात्मा किंवा परमात्मेति संशयः । तत्र परिमाणो-

---

रत्नप्रभाव्याख्या

णिजध्याहारपक्षे स्मृतिबलमप्यस्तीत्याह—**अपिचेति** । सूत्रं व्याचष्टे—**अपिचेति** । अभास्यत्वे सर्वभासकत्वे च श्लोकद्वयं द्रष्टव्यम् । तस्मादनुभानमन्त्रो ब्रह्मणि समन्वित इति सिद्धम् ॥२३॥ **शब्दादेव प्रमितः** । काठकवाक्यं पठति—**अङ्गुष्ठेति** । पुरुषः पूर्णोऽप्यात्मनि देहमध्ये अङ्गुष्ठमात्रे हृदये तिष्ठतीत्यङ्गुष्ठमात्र इत्युच्यते, तस्यैव परमात्मत्ववादिवाक्यान्तरमाह—**तथेति** । अधूमकमिति पठनीयम् । योऽङ्गुष्ठमात्रो जीवः स वस्तुतो निर्धूमज्योतिर्वन्निर्मलप्रकाशरूप इति तमर्थं संशोध्य तस्य ब्रह्मत्वमाह—**ईशान इति** । तस्याद्वितीयत्वमाह—**स एवेति** । कालत्रयेऽपि स एवास्ति नान्यत्किंचित् । यन्नचिकेतसा पृष्टं ब्रह्म तदेतदेवेत्यर्थः । परिमाणेशानशब्दाभ्यां संशयमाह—**तत्रेति** । यथानुभानादिलिङ्गात् णिजध्याहारेण सूर्याद्यगोचरो ब्रह्मेत्युक्तं तथा प्रथमश्रुतपरिमाणलिङ्गाज्जीवप्रतीतावीशानोऽस्मीति ध्यायेदिति विध्यध्याहारेण ध्यानपरं वाक्यमिति पूर्वपक्षयति—**तत्र**

भामतीव्याख्या

इति नेयं सतिसप्तमी, यतः सूर्यादीनां तस्मिन् सत्यभिभवः प्रतीयेत । अपि तु विषयसप्तमी । तेन न तत्र ब्रह्मणि प्रकाशयितव्ये सूर्यादयः प्रकाशकतया भान्ति, किंतु ब्रह्मैव सूर्यादिषु प्रकाशयितव्येषु प्रकाशकत्वेन भाति । तच्च स्वयंप्रकाशम्, **अगृह्यो नहि गृह्यत इत्यादिश्रुतिभ्य इति** ॥ २२ ॥ **अपि च स्मर्यते** । **न तद्भासयत इति** ब्रह्मणोऽग्राह्यत्वमुक्तम् । **यदादित्यगतम्** इत्यनेन तस्यैव ग्राहकत्वमुक्तमिति ॥ २३ ॥ **शब्दादेव प्रमितः** । 'नाञ्जसा मानभेदोऽस्ति परस्मिन्मानवर्जिते ।

आनन्दगिरीयव्याख्या

ब्रह्म नान्येनोपलभ्यते स्वयंज्योतिःस्वरूपत्वादन्यकृतोपलम्भानपेक्षणादित्यक्षरयोजना । तदुपपादयति—**ब्रह्म हीति** । स्वप्रकाशस्याप्रकाश्यत्वादर्शनादशेषप्रकाशकं ब्रह्म नान्यप्रकाश्यमित्यर्थः । ब्रह्मणः स्वयंज्योतिष्ट्वेन सर्वभासकत्वे मानमाह—**आत्मनेति** । तस्यान्यानवभास्यत्वेऽपि श्रुतिमाह—**अगृह्य इति** ॥ २२ ॥ णिजध्याहारेण ब्रह्मणः सूर्याद्यविषयत्वे श्रुत्युक्ते स्मृतिमाह—**अपीति** । सूत्रं व्याकरोति—**अपि चेति** । तत्राग्राह्यत्वे स्मृतिमाह—**न तद्दिति** । ग्राहकत्वेऽपि तामाह—**यदादित्येति** । तदेवं 'न तत्र' इत्यादिवाक्यं ज्योतिषां ज्योतिषि ध्येये परस्मिन्नन्वितमिति ॥ २३ ॥ परस्य ज्योतिष्ट्वोक्ते ज्योतिरिवेत्युपमीयमानपुरुषस्य ततोऽर्थान्तरत्वमाशङ्क्योक्तम्—**शब्दादिति** । काठकवाक्यं पठति—**अङ्गुष्ठेति** । स्वाभाविकं परिच्छेदं वारयति—**पुरुष इति** । पूर्णत्वात्सर्वत्रोपलब्धेर्नाङ्गुष्ठमात्रतेत्याशङ्क्य विशेषव्यक्तिस्थानद्वारा तद्योगमाह—**मध्य इति** । आत्मनि देहे मध्ये हृदयसद्मनीत्यर्थः । तस्यैव परात्मत्ववादिवाक्यान्तरमाह—**तथेति** । अधूमकं ज्योतिरकलुषितमेकरूपं प्रकाशमात्रं यथा दृष्टं तथायमपि कूटस्थप्रकाशधातुरित्याह—**ज्योतिरिति** । ज्योतिःपरत्वादधूमकमिति लिङ्गव्यत्ययः । शोधितत्वमर्थस्य तदर्थतामाह—**ईशान इति** । भूतभव्यग्रहणं भवतोऽपि प्रदर्शनार्थम् । कालत्रयपरिच्छेद्यस्य नियन्तेति यावत् । अद्वितीयत्वमाह—**स एवेति** । वर्तमाने काले स एवास्ति, श्वो भविष्यत्यपि काले स एव भविता, अतीतेऽपि काले स एवासीत् । यन्नचिकेतसा पृष्टम् 'अन्यत्र धर्मात्' इत्यादिना, तदेतदेवेत्याह—**एतदिति** । विषयमनूद्य परिमाणोक्तेरीशानशब्दाच्च संशयमाह—**तत्रेति** । पूर्वत्रानुभानादिना विषयसप्तम्या णिजध्याहारेण सूर्यादेरगोचरो ब्रह्मेत्युक्तं, तथेहापि परिमाणलिङ्गाज्जीवमादायेशानोऽस्मीति चेतो धारयेदिति विध्यध्याहारेणोपास्तिपरं वाक्यमिति पूर्वपक्षयति—**तत्रेति** । पठितकाठकश्रुतेर्निर्विशेषप्रत्यग्ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे जीवस्योपास्तिः, सिद्धान्ते तस्यैव परात्मतया धीरिति फलभेदः । परस्योपासनार्थे क्वचित्परिमाणोक्तावपि वस्तुपरत्वेन स्वदिष्टे वाक्ये तदयोगाज्जीवग्रहोऽत्रेति मत्वोक्तम्—**परिमाणेति** । श्रुतेरेव लिङ्गाद्बलीयस्त्वादीशानश्रुत्या

पदेशात्तावद्विज्ञानात्मेति प्राप्तम् । न ह्यनन्तायामविस्तारस्य परमात्मनोऽङ्गुष्ठपरिमाणमुपपद्यते । विज्ञानात्मनस्तूपाधिमत्त्वात्संभवति कयाचित्कल्पनयाङ्गुष्ठमात्रत्वम् । स्मृतेश्च—'अथ सत्यवतः कायात्पाशबद्धं वशं गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥' (म० भा० ३।२९७।१७) इति । न हि परमेश्वरो बलाद्यमेन निष्क्रष्टुं शक्यस्तेन तत्र संसार्यङ्गुष्ठमात्रो निश्चितः स एवेहापीत्येवं प्राप्ते ब्रूमः—परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति । कस्मात्, शब्दात्, 'ईशानो भूतभव्यस्य' इति । न ह्यन्यः परमेश्वराद्भूतभव्यस्य निरङ्कुशमीशिता । 'एतद्वै तत्' इति च प्रकृतं पृष्टमिहानुसंदधाति । एतद्वै तद्यत्पृष्टं ब्रह्मेत्यर्थः । पृष्टं चेह ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (का० १।२।१४) इति । शब्दादेवेत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽयं गम्यत इत्यर्थः ॥ २४ ॥ कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत्र ब्रूमः—

रत्नप्रभाव्याख्या

**परिमाणेति** । पूर्वपक्षे ब्रह्मदृष्ट्या जीवोपास्तिः, सिद्धान्ते तु प्रत्यग्ब्रह्मैक्यज्ञानं फलमिति मन्तव्यम् । आयामो दैर्घ्यं, विस्तारो महत्त्वमिति भेदः । **कयाचिदिति** । अङ्गुष्ठमात्रहृदयस्य विज्ञानशब्दितबुद्ध्यभेदाध्यासकल्पनयेत्यर्थः । स्मृतिसंवादादप्यङ्गुष्ठमात्रो जीव इत्याह—**स्मृतेश्चेति** । अथ मरणानन्तरं यमपाशैर्बद्धं कर्मवशं प्राप्तमित्यर्थः । तत्रापीश्वरः किं न स्यादित्यत आह—**न हीति** । 'प्रभवति संयमने ममापि विष्णुः' इति यमस्येश्वरनियम्यत्वस्मरणादिति भावः । भूतभव्यस्येत्युपपदाद्बाधकाभावाच्च ईशान इतीशत्वशब्दान्निरङ्कुशमीशिता भातीति श्रुत्या लिङ्गं बाध्यमिति सिद्धान्तयति —**परमात्मैवेति** । प्रकरणाद्ब्रह्मपरमिदं वाक्यमित्याह—**एतदिति** । शब्दो वाक्यं लिङ्गाद्दुर्बलमित्याशङ्क्याह—**शब्दादिति** ॥ २४ ॥ करः सकनिष्ठोऽरत्निः

भामतीव्याख्या

भूतभव्येशिता जीवे नाञ्जसी तेन संशयः ॥' किमङ्गुष्ठमात्रश्रुत्यनुग्रहाय जीवोपासनापरमेतद्वाक्यमस्तु, तदनुरोधेन चेशानश्रुतिः कथंचिद्व्याख्यायताम्, आहोस्विदीशानश्रुत्यनुग्रहाय ब्रह्मपरमेतदस्तु, तदनुरोधेनाङ्गुष्ठमात्रश्रुतिः कथंचिन्नीयताम् । तत्रान्यतरस्यानुरोधविषये प्रथमानुरोधो न्याय्य इत्यङ्गुष्ठश्रुत्यनुरोधेनेशानश्रुतिर्नेतव्या । अपिच युक्तं हृत्पुण्डरीकदहरस्थानत्वं परमात्मनः, स्थानभेदनिर्देशात् । तद्धि तस्योपलब्धिस्थानं, शालग्राम इव कमलनाभस्य भगवतः । नच तथेहाङ्गुष्ठमात्रश्रुत्या स्थानभेदो निर्दिष्टः, परिमाणमात्रनिर्देशात् । नच 'मध्य आत्मनि' इत्यत्र स्थानभेदोऽवगम्यते । आत्मशब्दो ह्ययं स्वभाववचनो वा जीववचनो वा ब्रह्मवचनो वा स्यात् । तत्र स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्देशान्न ज्ञायते कस्य मध्य इति । नच जीवपरयोरस्ति मध्यमङ्गेति नैष स्थाननिर्देशो विस्पष्टः । स्पष्टस्तु परिमाणनिर्देशः । परिमाणभेदश्च परस्मिन्न संभवतीति जीवात्मैवाङ्गुष्ठमात्रः । स खल्वन्तःकरणाद्युपाधिकल्पितो भागः परमात्मनः । अन्तःकरणं च प्रायेण हृत्कमलकोशस्थानं, हृत्कमलकोशश्च मनुष्याणामङ्गुष्ठमात्र इति तदवच्छिन्नो जीवात्माप्यङ्गुष्ठमात्रः, नभ इव वंशपर्वावच्छिन्नमरत्निमात्रम् । अपि च जीवात्मनः स्पष्टमङ्गुष्ठमात्रत्वं स्मर्यते—'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति । नहि सर्वेशस्य ब्रह्मणो यमेन बलान्निष्कर्षः कल्पते । यमो हि जगौ—'हरिवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः' इति । तेनाङ्गुष्ठमात्रत्वस्य जीवे निश्चयादापेक्षिकं किंचिद्भूतभव्यं प्रति जीवस्येशानत्वं व्याख्येयम् । '**एतद्वै तत्**' इति च प्रत्यक्षजीवरूपं परामृशति । तस्माज्जीवात्मैवात्रोपास्य इति प्राप्तम् । एवं प्राप्तेऽभिधीयते

आनन्दगिरीयव्याख्या

परमात्मावगतौ कुतो जीवशङ्केत्याशङ्क्य परमात्मनि परिमाणोक्तेरत्यन्तबाधाज्जीवे कतिपयेशितृत्वादीशानत्वसिद्धेर्गौणी श्रुतिरित्यभिसंधानेनाह—**न हीति** । जीवस्यापि विभुत्वादुक्तपरिमाणासिद्धिरित्याशङ्क्याह—**विज्ञानेति** । कयाचिदिति हृदयकमलकोशस्य जीवोपलब्धिस्थानस्याङ्गुष्ठमात्रतयेत्यर्थः । किंच यथा सति विषये च साधारणी सप्तमी 'न तद्भासयते' इति स्मृत्या विषये व्यवस्थापिता, तथा परिमाणमपि जैवमैश्वरं वेति संशये सति 'अङ्गुष्ठमात्रं निश्चकर्ष' इति स्मृत्या निश्चयसिद्धिरित्याह—**स्मृतेश्चेति** । मरणानन्तर्यमथशब्दार्थः । तत्रापि परमात्मैव प्रतिपाद्योऽस्तु, नेत्याह—**न हीति** । 'प्रभवति संयमने ममापि विष्णुः' इति यमस्य तदधीनत्वस्मृतेरित्यर्थः । स्मृतेः संसारिविषयत्वं निगमयति—**तेनेति** । निश्चितार्थस्मृत्या संदिग्धार्थश्रुतेरपि जीवार्थतैवेत्याह—**स इति** । वाक्यस्य जीवगामित्वे स्थिते तस्येशानोऽस्मीति ध्यानं फलतीत्युपसंहर्तुमितिशब्दः । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां व्याकरोति—**एवमिति** । जीवे लिङ्गसिद्धे नियमासिद्धिरित्याह—**कस्मादिति** । श्रुतिलिङ्गयोः श्रुतिर्बलीयसीति मत्वा हेतुमाह—**शब्दादिति** । जीवेऽपि कतिपयेशितृत्वादविरुद्धा श्रुतिरित्युक्तं, तत्र, भूतभव्यस्येत्यविशेषश्रुतेरित्याह—**न हीति** । प्रकरणमपीश्वरविषयमित्याह—**एतदिति** । उक्तमर्थं वाक्ययोजनया स्पष्टयति—**एतद्धा इति** । जीवस्यैव पृष्टत्वेन प्रकृतत्वमाशङ्क्योक्तम्—**पृष्टं चेति** । उपहिते तु जीवे कालापरिच्छेद्यत्वं कार्यकारणास्पृष्टत्वं च दुर्योजमिति भावः । सूत्रे शब्दादिति वाक्योक्तस्तस्य लिङ्गाद्दुर्बलत्वाद्बलवतो लिङ्गाज्जीवोक्तिः स्यादित्याशङ्क्याह—**शब्दादिति** । श्रुतिलिङ्गविरोधे श्रुतिरेव बाधिका न लिङ्गमिति मर्यादां वक्तुं सूत्रभाष्ययोरेवकारः ॥ २४ ॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते । आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम् । न ह्यञ्जसातिमात्रस्य परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते । न चान्यः परमात्मन इह ग्रहणमर्हतीशानशब्दादिभ्य इत्युक्तम् । ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यत इत्यत उत्तरमुच्यते—मनुष्याधिकारत्वादिति । शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्चेति वर्णितमेतदधिकारलक्षणे । (जै० ६।१) मनुष्याणां च नियतपरिमाणः कायः । औचित्येन नियत-

---

रत्नप्रभाव्याख्या

मुख्याङ्गुष्ठमात्रो जीवो गृह्यतां किं गौणग्रहणेनेत्यत आह—**न चान्य इति** । सति संभवे मुख्यग्रहो न्याय्यः । अत्र तु श्रुतिविरोधादसंभव इति गौणग्रह इत्यर्थः । **मनुष्यानेवेति** । त्रैवर्णिकानेवेत्यर्थः । शक्तत्वादित्यनेन पश्वादीनां देवानामृषीणां चाधिकारो वारितः । तत्र पश्वादीनां शास्त्रार्थज्ञानादिसामर्थ्याभावात्कर्मण्यशक्तिः । इन्द्रादेः स्वदेवताके कर्मणि स्वोद्देशेन द्रव्यत्यागायोगादशक्तिः । ऋषीणामार्षेयवरणे ऋष्यन्तराभावादशक्तिः । अर्थित्वादित्यनेन निष्कामानां मुमुक्षूणां स्थावराणां चाधिकारो वारितः । तत्र मुमुक्षूणां शुद्ध्यर्थित्वे नित्यादिष्वधिकारो न काम्येषु । शुद्धचित्तानां मोक्षार्थित्वे श्रवणादिषु व्यञ्जकेष्वधिकारो न कर्मस्विति मन्तव्यम् । शूद्रस्याधिकारं निरस्यति—**अपर्युदस्तत्वादिति** । 'शूद्रो यज्ञेऽनवक्लृप्तः' इति पर्युदासात्, 'उपनयीत तमध्यापयीत' इति शास्त्राच्च न शूद्रस्य वैदिके कर्मण्यधिकारः । तस्यैकजातित्वस्मृतेरुपनयनप्रयुक्तद्विजातित्वाभावेन वेदाध्ययनाभावात् । अत्रापेक्षितो न्यायः षष्ठाध्याये वर्णित इत्याह—**वर्णितमिति** । 'स्वर्गकामो यजेत' इत्यादिशास्त्रस्याविशेषेण सर्वान्फलार्थिनः प्रति प्रवृत्तत्वात्, प्राणिमात्रस्य सुखार्थित्वाच्च फलार्थे कर्मणि पश्वादीनामप्यधिकार इत्याशङ्क्योक्तरीत्या तेषां शक्तत्वाद्यभावात्स्वर्गकामपदं मनुष्यपरतया संकोच्य मनुष्याधिकारत्वे स्थापिते चातुर्वर्ण्याधिकारित्वमाशङ्क्य 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इति त्रयाणामेवाग्निसंबन्धश्रवणात्तेषामेवाधिकार इति वर्णितमित्यर्थः । अस्तु, प्रस्तुते किमायातं, तत्राह—**मनुष्याणां**

भामतीव्याख्या

यते—'प्रश्नोत्तरत्वादीशानश्रवणस्याविशेषतः । जीवस्य ब्रह्मरूपत्वप्रत्यायनपरं वचः ॥' इह हि भूतभव्यमात्रं प्रति निरङ्कुशमीशानत्वं प्रतीयते । प्राक् पृष्टं चात्र ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादिना । तदनन्तरस्य संदर्भस्य तत्प्रतिवचनतोचितेति 'एतद्वै तत्' इति ब्रह्माभिधानं युक्तम् । तथा चाङ्गुष्ठमात्रतया यद्यपि जीवोऽवगम्यते तथापि न तत्परमेतद्वाक्यं, किंत्वङ्गुष्ठमात्रस्य जीवस्य ब्रह्मरूपताप्रतिपादनपरम् । एवं निरङ्कुशमीशानत्वं न संकोचयितव्यम् । नच ब्रह्मप्रश्नोत्तरता हातव्या । तेन यथा 'तत्त्वमसि' इति विज्ञानात्मनस्त्वंपदार्थस्य तदिति परमात्मनैकत्वं प्रतिपाद्यते, तथेहाप्यङ्गुष्ठपरिमितस्य विज्ञानात्मन ईशानश्रुत्या ब्रह्मभावः प्रतिपाद्य इति युक्तम् ॥ २४ ॥ **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** । **सर्वगतस्यापि परब्रह्मणो हृदयेऽवस्थानमपेक्ष्येति** जीवाभिप्रायम् । न चान्यः परमात्मन इह ग्रहणमर्हतीति न जीवपरमेतद्वाक्यमित्यर्थः । **मनुष्यानेवेति** । त्रैवर्णिकानेव । **अर्थित्वादिति** अन्तःसंज्ञानां मोक्षमाणानां च काम्येषु कर्मस्वधिकारं निषेधति । **शक्तत्वादिति** तिर्यग्देवर्षीणामशक्तानामधिकारं निवर्तयति । **उपनयनादिशास्त्राच्चेति** शूद्राणामनधिकारितां दर्शयति ।

आनन्दगिरीयव्याख्या

परस्य विभुत्वादङ्गुष्ठमात्रत्वमयुक्तमित्युत्तरसूत्रव्यावर्त्यमाह—**कथमिति** । सूत्रमवतारयति—**अत्रेति** । तदवयवं व्याचष्टे—**सर्वेति** । तुशब्दसूचितं दृष्टान्तमाह—**आकाशस्येति** । करः सकनिष्ठिकोऽरत्निः । किमिति हृदवस्थानादङ्गुष्ठमात्रत्वं परस्य गौणमिष्टं, तत्राह—**न हीति** । तर्हि परिमाणमुख्यत्वाय जीव एव गृह्यतां, नेत्याह—**नचेति** । मुख्यसंभवे गौणमुख्ययोर्मुख्ये संप्रत्ययो मुख्यासंभवश्चात्रोक्तस्तेन गौणं परिमाणमित्यर्थः । सूत्रावयवव्यावर्त्यां शङ्कामाह—**नन्विति** । तदुत्तरत्वेन तं पातयति—**अत इति** । स्वर्गकामादिवाक्ये स्वर्गादिकामिन एवाविशेषेणाधिकारित्वं न मनुष्यस्येत्याशङ्क्याह—**शास्त्रमिति** । मनुष्यशब्दस्त्रैवर्णिकविषयः । तेषां शास्त्राधिकारे हेतुमाह—**शक्तत्वादिति** । तेन तिरश्चां देवतानामृषीणां चाधिकारो वारितः । तिर्यञ्चो वेदार्थज्ञानादिसामर्थ्याभावाद्यत्नमशक्ताः । देवानां स्वदेवत्ये कर्मण्यात्मोद्देशेन द्रव्यत्यागायोगादशक्तिः । ऋषीणामार्षेयवरणादौ तदभावात् । स्थावराणां मुमुक्षूणां च कर्मण्यधिकारं निवर्तयति—**अर्थित्वादिति** । मुमुक्षोः शुद्ध्यर्थं नित्येष्वधिकारेऽपि काम्येषु तदभावः । शूद्राधिकारं वारयति—**अपर्युदस्तत्वादिति** । ते हि 'शूद्रो यज्ञेऽनवक्लृप्तः' इति पर्युदासान्न वैदिके कर्मण्यधिकारिणः । तत्रैव हेत्वन्तरमाह—**उपनयनादिति** । न हि शूद्राणामेकजातित्वस्मृतेरुपनयनं, तदभावे कुतोऽध्ययनं तस्य तदङ्गत्वात्, अध्ययनाभावे कुतस्तदर्थेऽधिकारः । अत्र चापेक्षितन्यायस्य षष्ठेऽध्याये सिद्धत्वान्नेह तदर्थं यत्यत इत्याह—**इति वर्णितमिति** । फलार्थे कर्मणि तिर्यगादेरपि सुखकामस्याधिकारः स्वर्गकामश्रुतेरविशेषादित्याशङ्क्याग्निश्रुत्यर्थवत्त्वाय समर्थविषयतया तिर्यगादेस्तदभावेन स्वर्गकामपदं संकोच्य मनुष्याधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्यस्य 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इति त्रयाणामेवाग्निसंबन्धश्रवणात्तेषामेवाधिकार इति प्रतिष्ठापितमित्यर्थः । मनुष्याणामपि कथमुच्चावचानवयवानां नियतपरिमाणं हृदयं, तत्राह—**मनुष्याणां चेति** । अस्मदादिदेहस्यापि परिमाणमनियतं दृष्टं,

परिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः । यदप्युक्तं, परिमाणोपदेशात्स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति, तत्प्रत्युच्यते—'स आत्मा तत्त्वमसि' इत्यादिवत्संसारिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति । द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः, क्वचित्परमात्मस्वरूपनिरूपणपरा क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा । तदत्र विज्ञानात्मनः परमात्मैकत्वमुपदिश्यते नाङ्गुष्ठमात्रत्वं कस्यचित् । एतमेवार्थं परेण स्फुटीकरिष्यति—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषिकां धैर्येण । तं विद्याच्छुक्रममृतम्' (का० २।६।१७) इति ॥ २५ ॥

## तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥




नाधिक्रियन्ते विद्यायां देवाः किंवाधिकारिणः ॥ विदेहत्वेन सामर्थ्यहानेर्नैषामधिक्रिया ॥ १ ॥
अविरुद्धार्थवादादिमन्त्रादेर्देहसत्त्वतः ॥ अर्थित्वादेश्च सौलभ्याद्देवाद्या अधिकारिणः ॥ २ ॥

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षा मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तं, तत्प्रसङ्गेनेदमुच्यते ।

---

रत्नप्रभाव्याख्या

चेति । प्रायेण सप्तवितस्तिपरिमितो मनुष्यदेह इत्यर्थः । एवमङ्गुष्ठशब्दो हृत्परिमाणवाचकस्तत्रस्थं ब्रह्म लक्षयतीत्युक्तम् । संप्रति तच्छब्देनाङ्गुष्ठमात्रं जीवमनूद्यायमीशान इति ब्रह्माभेदो बोध्य इति वक्तुमनुवदति—यदपीति । प्रतिपाद्याभेदविरोधानुवाद्याङ्गुष्ठमात्रत्वं बाध्यं, तात्पर्यार्थस्य बलवत्त्वादित्याह—तदिति । क्वचित् 'अस्थूलम्' इत्यादौ । क्वचित् 'तत्त्वमसि' इत्यादौ । ननु परमात्मनोऽङ्गुष्ठपरिमाणत्वं न संभवतीति सूत्रकारेण हृदयापेक्षमङ्गुष्ठमात्रत्वमुक्तं, द्विविधेत्यादिभाष्यात्तु जीवानुवादेन ब्रह्मत्वबोधनमिति प्रतीयत इति सूत्रार्थास्पर्शित्वाद्भाष्यमनुपपन्नमिति चेत्, न, भाष्यतात्पर्यानभिज्ञानात् । कठवल्लीवाक्यस्यावान्तरतात्पर्यमेकं, महातात्पर्यं चैकम् । तत्रावान्तरतात्पर्यमुपास्ये ब्रह्मणि, महातात्पर्यं च ज्ञेये ब्रह्मणि । अतएव भाष्यकारैर्वाक्यद्वयोपन्यासः कृतः । अत एवोपासनाफलं कठवल्ल्यामेव—'शतं चैका च हृदयस्य नाड्यः' इत्यादिना बोधितम् । अतएव चतुर्थाध्याये द्वितीयचरणे तदेके इति सूत्रेऽर्द्धविद्यां प्रकृत्य समामनन्ति इति भाष्यकारैः प्रथमवाक्यस्य उपास्ये ब्रह्मणि तात्पर्यमिति प्रकटीकृतम् । इत्थं चात्रत्यभाष्यं महातात्पर्याभिप्रायकमिति द्रष्टव्यम् । रामानुजभाष्यकृता तु पूर्वपक्षोऽसद्भाष्यतात्पर्यज्ञानेनैव कृत इत्यवधेयम् । एकत्वार्थं वाक्यशेषमनुकूलयति—एतमिति । श्रुतिर्यमो वा कर्ता द्रष्टव्यः । तं जीवं प्रवृहेत्पृथक्कुर्यात्, धैर्येण बलवदिन्द्रियनिग्रहादिना, तं विविक्तमात्मानं शुक्रं स्वप्रकाशममृतं कूटस्थं ब्रह्म जानीयादित्यर्थः । तस्मात्कठवाक्यं प्रत्यग्ब्रह्मणि ज्ञेये समन्वितमिति सिद्धम् ॥ २५ ॥ शास्त्रस्य मनुष्याधिकारत्वे देवादीनां ब्रह्मविद्यायामप्यनधिकारः स्यादित्याशङ्क्याह—तदुपर्यपि बादरायणः संभवात् । ननु समन्वयाध्यायेऽधिकारचिन्ता न संगतेत्यत आह—अङ्गुष्ठेति । स्मृतस्योपेक्षानर्हत्वं

भामतीव्याख्या

यदप्युक्तं परिमाणोपदेशात्स्मृतेश्चेति । यद्येतत्परमात्मपरं किमिति तर्हि जीव इहोच्यते । ननु परमात्मैवोच्यताम् । उक्तं च जीवः, तस्माज्जीवपरमेवेति भावः । परिहरति—तत्प्रत्युच्यत इति । जीवस्य हि तत्त्वं परमात्मभावः, तद्वक्तव्यम्, न च जीवमनभिधाय शक्यं वक्तुमिति जीव उच्यत इत्यर्थः ॥२५॥ तदुपर्यपि बादरायणः संभवात् । देवर्षीणां ब्रह्मविज्ञानाधिकारचिन्ता समन्वयलक्षणेऽसंगतेत्यस्याः प्रासङ्गिकीं संगतिं दर्शयितुं प्रसङ्गमाह—अङ्गुष्ठमात्रश्रुतिरिति । स्यादेतत् । देवादीनां विविधविविध

आनन्दगिरीयव्याख्या

तत्राह—औचित्येनेति । देहस्य नियतपरिमाणत्वेऽपि हृदयस्य किमायातं, तदाह—नियतेति । परस्मिन्परिमाणोक्तेर्योगमुपसंहरति—अत इति । अङ्गुष्ठमात्रपुरुषस्य जीवत्वेऽपि वाक्यस्य परार्थतेति वक्तुमुक्तमनुवदति—यदपीति । परमात्मपरे वाक्येऽनूद्यमानमङ्गुष्ठमात्रत्वं प्रतिपाद्यमानपरात्मधर्मविरोधाद्बाध्यं, प्रतिपाद्यस्य तात्पर्यविषयत्वादित्याह—तदिति । परमात्मपरे वाक्ये तस्यैव वक्तव्यत्वे कुतो जीवोक्तिरित्याशङ्क्य वाक्यप्रवृत्तेर्द्वैरूप्यमाह—द्विरूपेति । कथं प्रकृते वाक्यप्रवृत्तिः, तत्राह—तदत्रेति । न हि ऐक्यं जीवस्योक्तिं विना शक्यं वक्तुमिति तदुक्तिरित्यर्थः । प्रत्यक्षादिविरोधे किमुत्तरं, तत्राह—एतमिति । विरुद्धांशत्यागेनाविरुद्धांशलक्षणयैक्ये वाक्यार्थे न विरोधधीरित्यर्थः । यतोऽन्तरात्मा पुरुषत्वात्पूर्णोऽपि जनानां हृदये सदा संनिविष्टस्ततोऽङ्गुष्ठमात्रत्वमर्थानुवादः । तस्यान्वयव्यतिरेकाभ्यां तदनुसारिश्रुत्या च शोध्यत्वमाह—तमिति । शरीरं स्थूलं सूक्ष्मं च । प्रवृहेत् कुर्यात् । धैर्येण शमादिनेति यावत् । तं च विविक्तमात्मानं विशुद्धममृतं ब्रह्मैव जानीयादित्याह—तमिति । तदेवं काठकवाक्यं प्रत्यग्ब्रह्मणि ज्ञातव्ये समन्वितमिति ॥ २५ ॥ मनुष्याधिकारत्वादित्युक्तेरमनुष्याणां देवादीनामनधिकारमाशङ्क्योक्तम्—तदुपर्यपीति । निर्गुणविद्याहेतुवेदान्तविचारादिषु देवादीनामधिकारोऽस्ति न वेति सामर्थ्यासंभवसंभवाभ्यां संदेहे शास्त्रसांदेहि

बाढं मनुष्यानधिकरोति शास्त्रम् । न तु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति । तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कस्मात् । संभवात् । संभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात् । नच तेषां कश्चित्प्रतिषेधोऽस्ति । नचोपनयनशास्त्रेणैषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात् । तेषां च स्वयंप्रतिभातवेदत्वात् । अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति—'एकशतं ह

रत्नप्रभाव्याख्या

प्रसङ्गः। अत्र मनुष्याधिकारलोक्त्या स्मृतानां देवादीनां वेदान्तश्रवणादावधिकारोऽस्ति न वेति संदेहे भोगासक्तानां वैराग्याद्यसंभवान्नेति प्राप्ते सिद्धान्तमाह—**बाढमिति**। एवमधिकारविचारात्मकाधिकरणद्वयस्य प्रासङ्गिकी संगतिः। अत्र पूर्वपक्षे देवादीनां ज्ञानाधिकाराद्देवत्वप्राप्तिद्वारा क्रममुक्तिफलासु दहराद्युपासनासु क्रममुक्त्यर्थिनां मनुष्याणामप्रवृत्तिः फलं, सिद्धान्ते तु प्रवृत्तिः। उपासनाभिर्देवत्वं प्राप्तानां श्रवणादिना ज्ञानान्मुक्तिसंभवादिति सफलोऽयं विचारः। ननु भोगासक्तानां तेषां मोक्षार्थित्वाभावान्नाधिकार इत्यत आह—**अर्थित्वं तावदिति**। विकारत्वेनानृतविषयसुखस्य क्षयासूयादिदोषदृष्ट्या निरतिशयसुखमोक्षार्थित्वं सत्त्वप्रकृतीनां देवानां संभवतीत्यर्थः। नन्विन्द्राय स्वाहेत्यादौ चतुर्थ्यन्तशब्दातिरिक्ता विग्रहवती देवता नास्ति, शब्दस्य चासामर्थ्यान्नाधिकार इत्यत आह—**तथेति**। अर्थित्ववदित्यर्थः। अपर्युदस्तत्वमाह—**नच तेषामिति**। 'शूद्रो यज्ञेऽनवक्लृप्तः' इतिवद्देवादीनां विद्याधिकारनिषेधो नास्तीत्यर्थः। ननु विग्रहवत्त्वेन दृष्टसामर्थ्ये सत्यप्युपनयनाभावाच्छास्त्रीयं सामर्थ्यं नास्तीत्यत आह—**न चेति**। जन्मान्तराध्ययनबलात्स्वयमेव प्रतिभाताः स्मृता वेदा येषां ते तथा तद्भावादित्यर्थः। बालादिषु प्रविष्टपिशाचादीनां वेदोद्घोषदर्शनाद्देवयोनीनां जन्मान्तरस्मरणमस्तीति स्मृतवेदान्तानामर्थविचारो युक्त इत्यर्थः। देवानामृषीणां च विद्याधिकारे कारणमर्थित्वादिकमुक्त्वा श्रौतं गुरुकुलवासादिलिङ्गमाह—**अपिचेति**। ननु ब्रह्मविद्या देवादीनाधिक-

भामतीव्याख्या

नन्दभोगभोगिनां वैराग्याभावान्नार्थित्वं ब्रह्मविद्यायामित्यत आह—**तत्रार्थित्वं तावन्मोक्षविषयमिति**। क्षयातिशययोगस्य स्वर्गाद्युपभोगेऽपि भावादस्ति वैराग्यमित्यर्थः। ननु देवादीनां विग्रहाद्यभावेनेन्द्रियार्थसंनिकर्षजायाः प्रमाणादिवृत्तेरनुपपत्तेरविद्वत्तया सामर्थ्याभावेन नाधिकार इत्यत आह—**तथा सामर्थ्यमपि तेषामिति**। यथा च मन्त्रादिभ्यस्तदवगमस्तथोपरिष्टादुपपादयिष्यते। ननु शूद्रवदुपनयनासंभवेनाध्ययनाभावात्तेषामनधिकार इत्यत आह—**न चोपनयनशास्त्रेणेति**। न खलु विधिवद्गुरुमुखाद्गृह्यमाणो वेदः फलवत्कर्मब्रह्मावबोधहेतुः, अपि त्वध्ययनोत्तरकालं निगमनिरुक्तव्याकरणादिविदितपदतदर्थसंगतेरधिगतशब्द-

आनन्दगिरीयव्याख्या

लक्षणासंगतेयं चिन्तेत्याशङ्क्य प्रासङ्गिकीं संगतिमाह—**अङ्गुष्ठेति**। अत्र चाधिकारनिरूपणद्वारा मन्त्रार्थवादादीनां प्राप्तिविरोधयोरसतोर्देवताविग्रहादावन्वयोक्तेरध्यायसंगतिः। मन्त्रादिप्रामाण्ये न्यायसाम्यादुपसदनादिगिरामधिकार्यादिसमर्पकाणां श्रुतेऽर्थे प्रामाण्यात्तत्त्वमादिवचसोऽपि ब्रह्मैक्ये पर्यवसानमिति श्रुतिशास्त्राध्यायपादसंगतयः। पूर्वपक्षे मन्त्राद्यप्रामाण्यादुपगमनादिगिरामपि स्वार्थे तदयोगात्तत्त्वमादेरपि नैक्यनिष्ठतेति फलम्। सिद्धान्ते तत्तत्प्रामाण्यस्य तत्तदर्थे संभवात्तत्त्वमस्यादेरपि संभवत्यैक्यनिष्ठतेति फलम्। यद्वा देवतादीनामनधिकारन्यायेन क्रममुक्तिफलोपास्तिषु भोगद्वारा मोक्षकाममनुष्यप्रवृत्तिरप्यनियतेति पूर्वपक्षे फलम्। सिद्धान्ते देवाद्यधिकारविचारस्य देवादिप्रवृत्त्यङ्गत्वाभावेऽपि यथोक्तोपास्तिषु मनुष्यप्रवृत्त्यर्थं साक्षान्मोक्षफलनिर्गुणविद्यायां तेषामपि प्रवृत्तिरिति प्रयोजनम्। तत्रादौ सिद्धान्तमेव दर्शयन्मनुष्याधिकारत्वं शास्त्रस्यायोगव्यवच्छेदादन्ययोगव्यवच्छेदाद्वेति विकल्प्याद्यमङ्गीकरोति—**बाढमिति**। द्वितीयं दूषयति—**न त्विति**। नियमाभावं गूढाक्षरव्याख्यया विशदयति—**तेषामिति**। ब्रह्मविद्यातदङ्गविषयो देवादीनाधिकुर्वन्ति, वैदिकविधित्वात्, अग्निहोत्रादिविधिवदिति शङ्कते—**कस्मादिति**। अनुमानमग्रे दूष्यम्। आदौ हेतुमुत्थाप्य व्याचष्टे—**संभवादिति**। ननु देवतादीनां विविधभोगभाजामवैराग्यान्न मोक्षेऽर्थित्वं, तत्राह—**तत्रेति**। वैषयिकसुखस्यानित्यत्वपारतन्त्र्यादिदोषदृष्ट्या तत्र वैराग्यसिद्धौ परमपुरुषार्थतया मोक्षेऽर्थित्वं महाधियां तेषामुदेष्यतीत्यर्थः। चतुर्थ्यन्तशब्दातिरिक्तदेवताभावात्तस्याश्च विग्रहायोगान्न ज्ञानहेत्वनुष्ठानशक्तिरित्याशङ्क्याह—**तथेति**। तयोः सतोरपि शूद्रवदनधिकारं शङ्कित्वोक्तम्—**न चेति**। त्रैवर्णिकानामेवोपनयनादेर्वादीनां तदभावे वैदिकशक्त्यभावान्नाधिकार इत्याशङ्क्याह—**नचेति**। तर्हि तदभावादङ्गिनोऽध्ययनस्याभावे कुतो वेदार्थेऽधिकारः, तत्राह—**तेषां चेति**। जन्ममरणव्यवधानेऽपि भूतप्रेतादिषु स्मृतिदर्शनान्न तदस्मृतिरिति भावः। तथापि पूर्वोक्तानुमाने जाग्रति कुतो देवादयो ब्रह्मविद्यायामधिक्रियेरन्नित्याशङ्क्य कालातीतत्वमाह—**अपि चेति**। ब्रह्मचर्यादीत्यादिपदेनोपगमनशुश्रूषादि गृह्यते। द्वितीयमादिपदं सनत्कुमारनारदसंवादादिसंग्रहार्थम्। न केवलं लिङ्गविरोधादेव कालातीतत्वं किं तु 'तद्यो यो देवानाम्' इत्यादिवाक्यविरोधाद-

वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास' ( छा० ८।११।३ ) 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म' ( तै० ३।१ ) इत्यादि । यदपि कर्मस्वनधिकारकारणमुक्तम्—'न देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' ( जै० ६।१।६,७ ) इति। न तद्विद्यास्वस्ति । न हीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति। नच भृग्वादीनां भृग्वादिसगोत्रतया । तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते। देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते ॥ २६ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

स्यादेतत्, यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन कर्माङ्गभावोऽभ्युपगम्यते । तदा च विरोधः कर्मणि स्यात्। न हीन्द्रादीनां स्वरूपसंनिधानेन यागेऽङ्गभावो दृश्यते । नच संभवति । बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसंनिधानतानुपपत्तेरिति चेत् । नायमस्ति विरोधः । कस्मात् । अनेकप्रतिपत्तेः।

---

रत्नप्रभाव्याख्या

रोति, वेदार्थत्वात्, अग्निहोत्रवदित्यत आह—**यदपीति** । देवानां कर्मसु नाधिकारः, देवतान्तराणामुद्देश्यानामभावादिति प्रथमसूत्रार्थः। ऋषीणामनधिकारः, ऋष्यन्तराभावादपियुक्ते कर्मण्यशक्तेरिति द्वितीयसूत्रार्थः । असामर्थ्यमुपाधिरिति परिहरति—**न तदिति** । असामर्थ्यरूपं कारणमित्यर्थः । न ह्यस्ति येनासामर्थ्यं स्यादिति शेषः । 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणाम्' इति वाक्यबाधोऽप्यनुमानस्य द्रष्टव्यः । ननु देवादीन्प्रत्यङ्गुष्ठमात्रश्रुतिः कथं, तेषां महादेहत्वेन हृदयस्यादङ्गुष्ठमात्रत्वाभावात् । अतः श्रुतिषु तेषां नाधिकार इत्यत आह—**देवाद्यधिकारेऽपीति**॥२६॥ननु मन्त्रादीनां प्रतीयमानविग्रहवत्त्वे तात्पर्यं कल्पयित्वा देवादीनामधिकार उक्तः, स चायुक्तः, अन्यपराणां तेषां प्रत्यक्षादिविरोधेन स्वार्थे तात्पर्यकल्पनानुपपत्तेरित्याक्षिप्य सूत्रचतुष्टयेन परिहरति—**विरोधः कर्मणीत्यादिना** । वर्ण्येत, तर्हीति शेषः । स्वरूपं विग्रहः । अभ्युपगमे प्रत्यक्षेण देवता दृश्येत, नच दृश्यते, अतो योग्यानुपलब्ध्या देवताया विग्रहवत्या अभावात्संप्रदानकारकाभावेन कर्मविप्लवः स्यादित्याह—**तदा चेति** । विग्रहस्याङ्गत्वमनुपलब्धिबाधितं युक्त्या च न संभवतीत्याह—**न चेति** । तस्माद्वर्थोपहितशब्द एव देवता, तस्या अचेतनत्वान्न विद्याधिकार इति शङ्कार्थः । परिहरति—**नायमिति** । एकस्यापि देवस्य योगबलादनेकदेहप्राप्तेः

भामतीव्याख्या

न्यायतत्त्वस्य पुंसः स्मर्यमाणः । स च मनुष्याणामिह जन्मनीव देवादीनां प्राचि भवे विधिवदधीत आम्नाय इह जन्मनि स्मर्यमाणः अत एव स्वयं प्रतिभातो वेदः संभवतीत्यर्थः । नच कर्मानधिकारे ब्रह्मविद्यानधिकारो भवतीत्याह—**यदपि कर्मस्वनधिकारकारणमुक्तमिति** । वस्वादीनां हि न वस्वाद्यन्तरमस्ति । नापि भृग्वादीनां भृग्वाद्यन्तरमस्ति । प्राचां वसुभृगुप्रभृतीनां प्रतिअधिकारत्वेनेदानीं देवर्षित्वाभावादित्यर्थः ॥ २६ ॥ **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** । मन्त्रादिपदसमन्वयात्प्रतीयमानोऽर्थः प्रमाणान्तराविरोधे सत्युपेयः, न तु विरोधे । प्रमाणान्तरविरुद्धं चेदं विग्रहवत्त्वादि देवतायाः । तस्मात् 'यजमानः प्रस्तरः' इत्यादिवदुपचरितार्थो मन्त्रादिर्व्याख्येयः । तथाच विग्रहाद्यभावाच्छब्दोपहितार्थोऽर्थोपहितो वा शब्दो देवतेत्यचेतनत्वान्न तस्याः क्वचिदप्यधिकार इति शङ्कार्थः । निराकरोति—**न** । कस्मात् । **अनेकरूपप्रतिपत्तेः** । सैव कुत इत्यत आह—**दर्शनात्**

आनन्दगिरीयव्याख्या

पीति मत्वाह—**यदपीति** । देवानां कर्मसु नाधिकारः, देवतान्तराणामुद्देश्यानामभावात्तदनुष्ठानाशक्तेरिति सूत्रार्थः । ऋषीणामपि भृग्वादीनामार्षेयकर्मणि नाधिकारः, भृग्वाद्यन्तराभावात्तद्युक्ते कर्मण्यशक्तेरिति सूत्रान्तरार्थः । अधिकारहेत्वसत्त्वं ज्ञानेऽपि तुल्यं तेषामिति कुतो वाक्यार्थधीरित्येतद्दूषयति—**न तदिति** । तदेव स्पष्टयति—**न हीति** । साधकबाधकसत्त्वासत्त्वफलमाह—**तस्मादिति** । ननु देवादीनामधिकारे कथमङ्गुष्ठमात्रश्रुतिः, न हि तेषां महादेहानां हृदयमङ्गुष्ठमात्रं, तत्राह—**देवादीति** । साधारणी खल्वङ्गुष्ठश्रुतिस्तत्र तत्र तत्तदङ्गुष्ठपरिमितहृदयापेक्षया निर्वक्ष्यतीत्यर्थः ॥ २६ ॥ मन्त्रादिप्रामाण्येन विग्रहादिमत्त्वं गृहीत्वा देवतादीनामधिकारो निरूपितः । संप्रति देवताविग्रहादिमन्त्रादीनामन्यपराणामविरोधे प्रामाण्यात्प्रत्यक्षादिविरोधमाशङ्क्य परिहर्तुं सूत्रचतुष्टये स्थिते तत्र कर्मणि विरोधमाशङ्क्य परिहरति—**विरोध इति** । मानान्तरविरुद्धेऽर्थे मन्त्रादीनामन्यपराणामप्रामाण्याद्विग्रहवद्देवतादिविषयाणां तेषामुपचरितार्थतया शब्दोपहितोऽर्थस्तदुपहितो वा शब्दो देवादिरित्यचेतनत्वात्तस्य नाधिकारसिद्धिरित्यभिसंधाय शङ्कां विभजते—**स्यादेतदिति** । अभ्युपगम्यतामिन्द्रादीनामध्वर्युप्रभृतिवदध्वरे स्वरूपसंनिधानेनाङ्गत्वं, तत्राह—**तदा चेति** । कथं विरोधस्तत्राह—**न हीति** । दर्शनाभावमुक्त्वा युक्त्यभावमाह—**न चेति** । इन्द्रादीनां स्वरूपसंनिधिद्वारा यागाङ्गत्वायोगे हेतुमाह—**बहुष्विति** । उद्दिश्य त्यागत्वाद्यागस्य न विरोधोऽस्तीत्याह—**नायमिति** । विरोधमङ्गीकृत्यापि परिहर्तुं प्रश्नपूर्वकं हेतुमाह

**एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति । कथमेतदवगम्यते । दर्शनात् । तथाहि—'कति देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति निरुच्य 'कतमे ते' इत्यस्यां पृच्छायाम् 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' (बृ० ३।९।१,२) इति ब्रुवती श्रुतिरेकैकस्य देवतात्मना युगपदनेकरूपतां दर्शयति । तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण 'कतम एको देव इति प्राणः' इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति । तथा स्मृतिरपि—'आत्मनो वै शरीराणि बहूनि भर-**

रत्नप्रभाव्याख्या

श्रुतिस्मृतिदर्शनात्संभवति । अतो न कर्मणि विरोध इति व्याचष्टे—**कस्मादित्यादिना** । वैश्वदेवशस्त्रे शस्यमानदेवाः कतीति शाकल्येन पृष्टो याज्ञवल्क्यो निविदा 'त्रयश्च' इत्यादिरूपयोत्तरं ददौ । निविन्नाम शस्यमानदेवसंख्यावाचकः शब्दः । षडधिकानि त्रीणि शतानि त्रीणि सहस्राणीति संख्योक्तौ संख्येयस्वरूपप्रश्ने, महिमानो विभूतयः सर्वे देवा एषां त्रयस्त्रिंशद्देवानामतोऽष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रः प्रजापतिश्चेति त्रयस्त्रिंशद्देवास्तेऽपि षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानस्तेऽपि षट्सु देवेष्वन्तर्भवन्ति । षट् देवास्त्रिषु लोकेषु त्रयश्च द्वयोरन्नप्राणयोर्द्वौ च एकस्मिन्प्राणे हिरण्यगर्भेऽन्तर्भवत इति दर्शितमित्यर्थः । त्रयस्त्रिंशतोऽपि देवानामिति संबन्धः । दर्शनं श्रौतं व्याख्याय स्मार्तं व्याचष्टे—**तथा स्मृतिरिति** । बलं योगसिद्धिम् । 'अणिमा महिमा चैव लघिमा प्राप्तिरीशिता । प्राकाम्यं च वशित्वं च यत्र कामावसा-

भामतीव्याख्या

श्रुतिषु स्मृतिषु च । तथाहि—एकस्यानेककायनिर्माणमदर्शनाद्वा न युज्यते, बाधदर्शनाद्वा । तत्रादर्शनमसिद्धं, श्रुतिस्मृतिभ्यां दर्शनात् । नहि लौकिकेन प्रमाणेनादृष्टत्वादागमेन दृष्टमदृष्टं भवति, मा भूद्यागादीनामपि स्वर्गादिसाधनत्वमदृष्टमिति । मनुष्यशरीरस्य मातापितृसंयोगजत्वनियमादसति पित्रोः संयोगे कुतः संभवः, संभवे वानग्नितोऽपि धूमः स्यादिति बाधदर्शनमिति चेत् । हन्त किं शरीरत्वेन हेतुना देवादिशरीरमपि मातापितृसंयोगजं सिषाधयिषसि । तथा चानेकान्तो हेत्वाभासः, स्वेदजोद्भिज्जानां शरीराणामतद्धेतुत्वात् । इच्छामात्रनिर्माणत्वं देहादीनामदृष्टचरमिति चेत्, न । भूतोपादानत्वेनेच्छामात्रनिर्माणत्वासिद्धेः । भूतवशिनां हि देवादीनां नानाकायचिकीर्षावशाद्भूतक्रियोत्पत्तौ भूतानां परस्परसंयोगेन नानाकायसमुत्पादात् । दृष्टा च वशिन इच्छावशाद्वश्ये क्रिया, यथा विषविद्याविद इच्छामात्रेण विषशकलप्रेरणम् । नच विषविद्याविदो दर्शनेनाधिष्ठानदर्शनाद्व्यवहितविप्रकृष्टभूतादर्शनाद्देवादीनां कथमधिष्ठानमिति वाच्यम् । काचाभ्रपटलपिहितस्य विप्रकृष्टस्य च भौमशनैश्चरादेर्दर्शनेन व्यभिचारात् । असक्ताश्च दृष्टयो देवादीनां काचाभ्रपटलादिवन्महीमहीधरादिभिर्न व्यवधीयन्ते । न चास्मदादिवत्तेषां शरीरित्वेन व्यवहितविप्रकृष्टादिदर्शनासंभवोऽनुमीयत इति वाच्यम्, आगमविरोधिनोऽनुमानस्योत्पादायोगात् । अन्तर्धानं चाञ्जनादिना मनुजानामिव तेषां प्रभवतामुपपद्यते, तेन संनिहितानामपि न क्रतुदेशे दर्शनं भविष्यति । तस्मात्सूक्तम्—अनेकप्रतिपत्तेरिति । **तथाहि कति देवा इत्युपक्रम्येति** । वैश्वदेवशस्त्रस्य हि निविदि 'कति देवाः' इत्युपक्रम्य निविदैवोत्तरं दत्तं शाकल्याय याज्ञवल्क्येन—**त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति** । निविन्नाम शस्यमानदेवतासंख्यावाचकानि मन्त्रपदानि । एतदुक्तं भवति—वैश्वदेवस्य निविदि कति देवाः शस्यमानाः प्रसंख्याता इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरं—'त्रयश्च त्री च शता' इत्यादि । यावत्संख्याका वैश्वदेवनिविदि संख्याता देवास्त एतावन्त इति । पुनश्च शाकल्येन 'कतमे ते' इति संख्येयेषु पृष्टेषु याज्ञवल्क्यस्योत्तरम्—**महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति** । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च प्रजापतिश्चेति त्रयस्त्रिंशद्देवाः । तत्राग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेति वसवः । एते हि प्राणिनां कर्मफलाश्रयेण कार्यकारणसंघातरूपेण परिणमन्तो जगदिदं सर्वं वासयन्ति, तस्माद्वसवः । कतमे रुद्रा इति दशेमे पुरुषे प्राणाः । बुद्धिकर्मेन्द्रियाणि दश, एकादशं च मन इति । तदेतानि प्राणाः, तद्वृत्तित्वात् । ते हि प्रायणकाल उत्क्रामन्तः पुरुषं रोदयन्तीति रुद्राः । कतम आदित्या इति द्वादशमासाः संवत्सरस्यावयवाः पुनःपुनः परिवर्तमानाः प्राणभृतामायूंषि च कर्मफलोपभोगं चादापयन्तीत्यादित्याः । अशनिरिन्द्रः, सा हि बलं, सा हीन्द्रस्य परमा ईशता, तया हि सर्वान्प्राणिनः प्रमापयति, तेन स्तनयित्नुरशनिरिन्द्रः । यज्ञः प्रजापतिरिति, यज्ञसाधनं च यज्ञरूपं

आनन्दगिरीयव्याख्या

स्याति—**कस्मादिति** । एकस्य युगपदनेकत्वापत्तिर्विरुद्धेत्याह—**कथमिति** । प्रामाणिकत्वेन विरोधं समाधत्ते—**दर्शनादिति** । तत्र श्रौतं दर्शनमाह—**तथाहीति** । वैश्वदेवस्य निविदि कति देवाः शस्यमाना इति शाकल्येन पृष्टे याज्ञवल्क्यस्योत्तरम्—**त्रयश्चेति** । शस्यमानदेवतासंख्यावाचिमन्त्रपदं निविदुच्यते । षडधिकत्रिशताधिकत्रिसहस्रं देवा इति संख्यानिर्णयानन्तरं संख्येयप्रश्ने वसवोऽष्टावेकादश रुद्रा द्वादशादित्याः प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशद्देवेषु पूर्वेषामन्तर्भावो दर्शित इत्याह—**कतम इति** । अन्तर्भावश्रुतेस्तात्पर्यमाह—**एकैकस्येति** । तेऽपि देवाः षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानः, तेऽपि त्रयाणां लोकानां, ते च द्वयोरन्नप्राणयोः, तौ चैकस्य प्राणस्येति प्राणस्य सर्वे महिमान इत्येकस्यानेकरूपताधीरित्याह—**तथेति** । त्रयस्त्रिंशतोऽपि देवानामिति संबन्धः । श्रौतं

नप्राप्तिर्भवति । शूद्रस्य संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः' (मनु० १०।४) इत्येकजातित्वस्मरणात् । 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' (मनु० १०।१२६) इत्यादिभिश्च ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्याधिकारः । यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते । 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' (छा० ४।४।५) इति श्रुतिलिङ्गात् ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

इतश्च न शूद्रस्याधिकारः । यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति । 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च । अत एवाध्ययनप्रतिषेधः । यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत । भवति च वेदोच्चारणे जिह्वाछेदो धारणे शरीरभेद इति । अत

---

रत्नप्रभाव्याख्या

पातकमभक्ष्यभक्षणकृतम् ॥ ३६ ॥ सत्यकामः किल मृतपितृको जवालां मातरमपृच्छत्, किंगोत्रोऽहमिति । तं मातोवाच भर्तृसेवाव्यग्रतयाहमपि तव पितुर्गोत्रं न जानामि, जवाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति एतावज्जानामीति । ततः स जाबालो गौतममागत्य तेन किंगोत्रोऽसीति पृष्ट उवाच, नाहं गोत्रं वेद्मि न माता वेत्ति परंतु मे मात्रा कथितं, उपनयनार्थमाचार्यं गत्वा सत्यकामो जाबालोऽस्मीति ब्रूहीति । अनेन सत्यवचनेन तस्य शूद्रत्वाभावो निर्धारितः । अब्राह्मण एतत्सत्यं विविच्य वक्तुं नार्हतीति निर्धार्य, हे सौम्य, सत्यात्त्वं नागाः सत्यं न त्यक्तवानसि, अतस्त्वामुपनेष्ये, तदर्थं समिधमाहरेति गौतमस्य प्रवृत्तेश्च लिङ्गान्न शूद्रस्याधिकार इत्याह—तदभावेति ॥ ३७ ॥ स्मृत्या श्रवणादिनिषेधाच्च [illegible] धिकार इत्याह—श्रवणेति । अस्य शूद्रस्य द्विजैः पठ्यमानं वेदं प्रमादाच्छृण्वतः सीसलाक्षाभ्यां तप्ताभ्यां श्रोत्रद्वय[illegible]

भामतीव्याख्या

तेषामेव तन्निषिध्यते । तच्च द्विजातीनामिति द्विजातय एव निषिद्धोपनयना अधिक्रियन्ते न शूद्र इति ॥ ३६ ॥ तदभाव**निर्धारणे च प्रवृत्तेः** । सत्यकामो ह वै जाबालः प्रमीतपितृकः स्वां मातरं जबालां पप्रच्छ, अहमाचार्यकुले ब्रह्मचर्यं [illegible]ष्यामि, तद्ब्रवीतु भवती किंगोत्रोऽहमिति । साब्रवीत् । त्वज्जनकपरिचरणपरतया नाहमज्ञासिषं गोत्रं तवेति । स त्वा[illegible] गौतममुपससाद । उपसद्योवाच, हे भगवन्, ब्रह्मचर्यमुपेयां त्वयीति । स होवाच, नाविज्ञातगोत्र उपनीयत इति किंगोत्रोऽसीति । अथोवाच सत्यकामो नाहं वेद स्वं गोत्रं, स्वां मातरं जबालामपृच्छं, सापि न वेदेति । तदुपश्रुत्याभ्यधाद्गौतमः, नाद्विज आर्जवं युक्तमीदृशं वचः, तेनास्मिन्न शूद्रत्वसंभावनास्तीति त्वां द्विजातिजन्मानमुपनेष्य इत्युपनेतुमनुशासितुं च जाबालं [illegible] प्रवृत्तः । तेनापि शूद्रस्य नाधिकार इति विज्ञायते । **न सत्यादगा इति** । न सत्यमतिक्रान्तवानसीति ॥ ३७ ॥ श्रवण[illegible]

आनन्दगिरीयव्याख्या

शूद्रस्येति । एकजातिरुपनयनरहितः । पातकं भक्ष्याभक्ष्यविभागाभावकृतम् । आदिशब्देन 'पद्यु ह वा एतत्' इत्यादि गृह्यते ॥ ३६ ॥ शूद्रस्य विद्यानधिकारे लिङ्गान्तरमाह—तदभावेति । चकारार्थमाह—इतश्चेति । तदेव स्फुटयति—यदिति । सत्यकामो [illegible] ब्रह्मचर्यकालमालक्ष्य प्रमीतपितृकः स्वां मातरं जबालामपृच्छत्, भगवति, कस्यचिद्गुरोरावासमासाद्य ब्रह्मचर्यमाचरितुमिच्छामि, [illegible] भवती किंगोत्रोऽहमिति । सा तु त्वत्पितृचरणपरतया नाहं तदवेदिषं, जबालाहमस्मि त्वं जाबालोऽसीत्येतावदवगतमवादीत् । [illegible] सत्यकामो गौतममभ्येत्याभ्यभाषत, ब्रह्मचर्यं भगवति चरितुमिच्छाम्यनुगृह्णातु मां भवानिति । ततो गौतमेन किंगोत्रोऽसीति पृष्टो [illegible] वेद, नापि मातेति तेनोक्ते तदीयसत्यवचनेन शूद्रस्य मायावित्वयोगात्तदशूद्रत्वे सिद्धे तमुपनेतुमध्यापयितुं चाचार्यो यस्मात्प्रवृत्त[illegible] शूद्रस्याधिकारोऽस्तीत्यर्थः । कथमुक्तनीत्या गौतमस्य प्रवृत्त्यौन्मुख्यं, तत्राह—नेति । एतत्सत्यवचनं विवक्तुं विविच्य [illegible] वक्तुमित्येतत् । 'न सत्यादगाः' सत्यवचनान्नातिगतोऽसीत्यर्थः ॥ ३७ ॥ श्रौतमिव लिङ्गं शूद्रस्य विद्यानधिकारे स्मार्तं [illegible] श्रवणेति । तद्व्याकरोति—इतश्चेति । उक्तमेव विभजते—वेदेति । तत्र श्रवणप्रतिषेधं स्वहस्तयति—श्रवणेति । [illegible] समीपे प्रमादादेव शृण्वतः शूद्रस्य प्रत्यवायप्रायश्चित्तालोचनायां सीसलाक्षाभ्यां संतप्ताभ्यामतिद्रुताभ्यां श्रोत्रद्वयपूरणं कार्यमित्यर्थः । पद्यु पदा युक्तम् । संचारसमर्थमिति यावत् । श्रवणनिषेधादेवार्थादध्ययननिषेधोऽपि सिध्यतीत्याह—अत इति । तदेव स्फुटयति [illegible] यस्येति । न केवलमार्थिकोऽध्ययननिषेधः, श्रौतश्चेत्याह—भवतीति । अध्ययननिषेधानुपपत्त्या ज्ञानानुष्ठानयोरपि [illegible]

एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति 'न शूद्राय मतिं दद्यात्' इति, 'द्विजातीनामध्ययनमिज्या दानम्' इति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं, ज्ञानस्यैकान्तिकफलत्वात् । 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥ ३८ ॥

## कम्पनात् ॥ ३९ ॥




जगत्कम्पनकृत्प्राणोऽशनिर्वायुरुतेश्वरः ॥ अशनिर्भयहेतुत्वाद्वायुर्वा देहचालनात् ॥ १ ॥
वेदनादमृतत्वोक्तेरीशोऽन्तर्यामिरूपतः ॥ भयहेतुश्चालनं तु सर्वशक्तियुतत्वतः ॥ २ ॥

अवसितः प्रासङ्गिकोऽधिकारविचारः । प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः । 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (का० २।६।२) इति । एतद्वाक्यं 'एजृ कम्पने' इति धात्वर्थानुगमाल्लक्षितम् । अस्मिन्वाक्ये स-

### रत्नप्रभाव्याख्या

प्रायश्चित्तं कार्यमित्यर्थः । पद्यु पादयुक्तं संचरिष्णुरूपमिति यावत् । भवति च । स्मृतिरिति शेषः । मतिर्वेदार्थज्ञानम् । दानं नित्यं निषिध्यते शूद्रस्य । नैमित्तिकं तु दानमस्त्येव । यदुक्तं विदुरादीनां ज्ञानित्वं दृष्टमिति, तत्राह—**येषामिति** । सिद्धानां सिद्धेर्दुरपह्नवत्वेऽपि साधकैः शूद्रैः कथं ज्ञानं लब्धव्यमित्यत आह—**श्रावयेदिति** ॥ ३८ ॥ **कम्पनात्** । अस्यापि प्रासङ्गिकत्वमाशङ्क्याह—**अवसित इति** । समाप्त इत्यर्थः । काठकं पठति—**यदिदमिति** । सर्वं जगत्प्राणान्निःसृतं उत्पन्नं प्राणे चिदात्मनि प्रेरके सति एजति चेष्टते, तच्च प्राणाख्यं कारणं महद्ब्रह्म बिभेत्यस्मादिति भयम् । तस्मिन् भयहेतुत्वे दृष्टान्तमाह—**वज्रमिति** । यथोद्यतं वज्रं भयं तथेत्यर्थः । य एतत्प्राणाख्यं ब्रह्म निर्विशेषं विदुस्ते मुक्ता भवन्तीत्याह—**य इति** । नन्वस्मिन्सूत्रे कथमिदं वाक्यमुदाहृतमित्यत आह—**एतदिति** । एजत्यर्थस्य कम्पनस्य सूत्रितत्वादेजतिपदयुक्तं वाक्यमुदाहृतमित्यर्थः । प्रासङ्गिकाधिकारचिन्तयास्य संगतिर्नापेक्षितेति 'शब्दादेव प्रमितः' इत्यनेनोच्यते । तत्राङ्गुष्ठवाक्ये जीवानुवादो

### भामतीव्याख्या

ध्ययनार्थप्रतिषेधात्स्मृतेश्च । निगदव्याख्यानेन भाष्येण व्याख्यातम् । अतिरोहितार्थमन्यत् ॥ ३८ ॥ **कम्पनात्** । प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं च भङ्क्त्वा वायुः पञ्चवृत्तिराध्यात्मिको बाह्यश्चात्र प्रतिपाद्यः । तथाहि—प्राणशब्दो मुख्यो वायावाध्यात्मिके, वज्रशब्दश्चाशनौ । अशनिश्च वायुपरिणामः । वायुरेव हि बाह्यो धूमज्योतिःसलिलसंवलितः पर्जन्यभावेन परिणतो विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन विवर्तते । यद्यपि च सर्वं जगदिति सवायुकं प्रतीयते तथापि सर्वशब्द आपेक्षिकोऽपि न स्वाभिधेयं जहाति किंतु संकुचद्वृत्तिर्भवति । प्राणवज्रशब्दौ तु ब्रह्मविषयत्वे स्वार्थमेव त्यजतः । तस्मात् स्वार्थत्यागाद्वरं वृत्तिसंकोचः, स्वार्थलेशावस्थानात् । अमृतशब्दोऽपि मरणाभाववचनो न सार्वकालिकं तदभावं ब्रूते, ज्योतिर्जीवितयापि तदुपपत्तेः । यथा अमृता देवा इति । तस्मात्प्राणवज्रश्रुत्यनुरोधाद्वायुरेवात्र विवक्षितो न ब्रह्मेति प्राप्तम् । एवं प्राप्त उच्यते—**कम्पनात्** सवायुकस्य जगतः कम्पनात्, परमात्मैव शब्दात्प्रमित इति मण्डूकप्लुत्यानुषज्यते । ब्रह्मणो हि बिभ्यदेतज्जगत्कृत्स्नं स्वव्यापारे

### आनन्दगिरीयव्याख्या

त्याह—**अत इति** । साक्षादपि ज्ञाननिषेधमाह—**भवतीति** । अनुष्ठाननिषेधमपि शाब्दं दर्शयति—**द्विजातीनामिति** । दानमत्र नित्यमिष्टं, नैमित्तिकस्य शूद्रेऽपि योगात् । यत्तु विदुरादीनां ज्ञानित्वं स्मृतिसिद्धमिति, तत्राह—**येषामिति** । साधकस्याधिकारचिन्ता न सिद्धस्येत्याह—**तेषामिति** । विदुरादीनां ज्ञानाभावस्य स्मृतिविरोधेन दुर्वचत्वादुत्पन्नज्ञानानां तेषां मुक्तिरेव । सामग्र्याः साध्याव्यभिचारादित्यर्थः । कुतस्तर्हि शूद्राणां ज्ञानोत्पत्तिः, तत्राह—**श्रावयेदिति** । कुत्र तर्हि तदधिकारो वार्यते, तत्राह—**वेदेति** । आर्थवादिकशूद्रशब्दस्योक्तनीत्या क्षत्रियेऽन्वयाच्च जातिशूद्रस्य वेदद्वाराधिकारो विद्यायामित्युपसंहरति—**इति स्थितमिति** ॥ ३८ ॥ बहुलिङ्गविरोधादेकस्य शूद्रशब्दस्य मुख्यार्थबाधवद्वायुसहितजगत्कम्पनाश्रयत्वभयहेतुत्वामृतत्वसाधनत्वलिङ्गैर्बहुभिर्विरोधात्प्राणश्रुतेरेकस्या मुख्यार्थत्यागमाह—**कम्पनादिति** । आपादसमाप्तेरुत्तरसंदर्भस्य संगतिमाह—**अवसित इति** । अस्याधिकरणस्योदाहरणतया काठकवाक्यं पठति—**यदिति** । यत्किंचेदमविशिष्टं जगत्तत्सर्वं प्राणे निमित्ते सत्येजति चेष्टते । तच्च तस्मादेव निःसृतमुत्पन्नम् । तच्च प्राणाख्यं जगत्कारणं महदपरिच्छिन्नं बिभेत्यस्मादिति भयम् । तदेव भयहेतुत्वं निरूपयति—**वज्रमिति** । उद्यतं वज्रमिवेत्यर्थः । प्राणतत्त्वधियोऽमृतत्वहेतुत्वमाह—**य इति** । सूत्राक्षराननुगमात्रेदमुदाहरणमित्याशङ्क्याह—**एतदिति** । एजतिधात्वर्थस्य कम्पनस्य सूत्रणादेजतिपदयुक्तमेतद्वाक्यं सूत्रितमित्यर्थः । वाक्ये प्रातीतिकमर्थं संक्षिप्याह—**अस्मिन्निति** । संदेहतुकं संशयमुक्त्वा श्रुत्या

र्वमिदं जगत्प्राणाश्रयं स्पन्दते, महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतं, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते। तत्र कोऽसौ प्राणः, किं तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति । प्रसिद्धेरेव चाशनिर्वज्रं स्यात् । वायोश्चेदं माहात्म्यं संकीर्त्यते। कथम् । सर्वमिदं जगत्पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायेजति। वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते । वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते । वायुविज्ञानादेव चेदममृतत्वम् । तथाहि श्रुत्यन्तरम्—'वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद' इति। तस्माद्वायुरयमिह प्रतिपत्तव्य इति। एवं प्राप्ते ब्रूमः—ब्रह्मैवेदमिह प्रतिपत्तव्यम्। कुतः । पूर्वोत्तरालोचनात् । पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि । पूर्वत्र तावत् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' (का० २।६।१) इति ब्रह्म निर्दिष्टं, तदेवेहापि संनिधानात्, जगत्सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, 'प्राणस्य प्राणम्' (बृ० ४।४।१८) इति दर्शनात्। एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य । तथाचोक्तम्—'न प्राणेन

### रत्नप्रभाव्याख्या

ब्रह्मैक्यज्ञानार्थं इत्युक्तं, न तथेह प्राणानुवाद ऐक्यज्ञानार्थः संभवति, प्राणस्य स्वरूपेण कल्पितस्यैक्यायोगात् । अतः प्राणोपास्तिपरं वाक्यमिति प्रत्युदाहरणेन पूर्वपक्षयति—**प्रसिद्धेः पञ्चवृत्तिरिति**। ननु 'अत एव प्राणः' इत्यादौ ब्रह्मापि लिङ्गात् श्रुतिर्नीता, अत्रापि सर्वचेष्टाभयहेतुत्वं ब्रह्मलिङ्गमस्तीति नास्ति पूर्वपक्षावसरो गतार्थत्वादिति, अत आह—**वायोश्चेति**। प्रतिष्ठाय स्थितिं लब्ध्वा प्राणे वायौ निमित्ते जगच्चलतीति प्रसिद्धम्। अतः स्पष्टं ब्रह्मलिङ्गं नास्तीति भावः। वज्रलिङ्गाच्च वायुरित्याह—**वायुश्चेति** । व्यष्टिर्विशेषः । समष्टिः सामान्यम् । सूत्राद्बहिरेव सिद्धान्तं प्रतिजानीते—**ब्रह्मैवेति** । पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वाश्रयत्वं लिङ्गं वाक्यभेदकप्राणश्रुतेर्बाधकमित्याह—**पूर्वत्रेत्यादिना** । शुक्रं स्वप्रकाशम् । तदु नात्येति ब्रह्मानाश्रितः कोऽपि लोको नास्त्येवेत्युकारार्थः.। सौत्रं लिङ्गं व्याचष्टे—**एजयितृत्वमिति** । सवायुकस्य सर्वस्य कम्पनं

### भामतीव्याख्या

नियमेन प्रवर्तते न तु मर्यादामतिवर्तते । एतदुक्तं भवति—न श्रुतिसंकोचमात्रं श्रुत्यर्थपरित्यागे हेतुः, अपि तु पूर्वोत्तरैकवाक्यताप्रकरणाभ्यां संवलितः श्रुतिसंकोचः । तदिदमुक्तम्—**पूर्वापरयोर्ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहीति** । तदनेन वाक्यैकवाक्यता दर्शिता

### आनन्दगिरीयव्याख्या

पूर्वपक्षयति—**तत्रेत्यादिना** । 'शब्दादेव प्रमितः' इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मैक्यज्ञानायेत्युक्तम् । इह तु प्राणस्य संसारकल्पितस्य न ब्रह्मैक्यं, यतोऽनूद्येत, तस्मादुपास्तिविधिरिति प्रत्यवस्थीयते । सिद्धान्ते तु निर्विशेषे ब्रह्मण्युक्तश्रुत्यन्वयादस्ति श्रुत्यादिसंगतिः फलं तु पूर्वोत्तरपक्षयोरुपास्तिर्ज्ञानं चेति । नन्वतिदेशाधिकरणे प्रातर्दने विचारे च प्राणशब्दस्य ब्रह्मार्थत्वमुक्तं तथेहापीत्यनर्थकमधिकरणम् । मैवम् । 'प्राणमेवाभिसंविशन्ति' इत्यत्र निरपेक्षकारणत्वपरैवकारवत् 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादावुपक्रमोपसंहारैकरूप्यवत् तदभावादगतार्थत्वादित्यभिप्रेत्याह—**वायोश्चेति** । जगत्कम्पनहेतुत्वं ब्रह्मलिङ्गमिहापि भाति, तत्कथं वायोरिदं माहात्म्यमिति शङ्कते—कथमिति । उक्तलिङ्गमन्यथयति—**सर्वमिति** । तथापि जगद्भयहेतुत्वं ब्रह्मलिङ्गमित्याशङ्क्याह—**वायुश्चेति** । न तावद्वज्रशब्दो ब्रह्मवाचकाभावात् । नच ब्रह्मनिमित्तं भयानकं वज्रमुद्यम्यते, मानाभावात् । न चेदमेव मानं, वायुनिमित्तत्वेन तदुद्यमनोपपत्तेः कथं वायोरपि वज्रोद्यमहेतुत्वं, तत्रापि मानाभावाद्वाक्यस्य साधारण्यात्, तत्राह—**वायौ हीति** । तथापि ज्ञानस्यामृतत्वहेतुत्वं ब्रह्मलिङ्गमित्याशङ्क्याह—**वायुश्चेति** । तत्र बृहदारण्यकमनुकूलयति—**तथाहीति** । व्यष्टिर्विशेषः । समष्टिः सामान्यम् । प्राणवायुरिति सिद्धमुपसंहरति—**तस्मादिति** । आध्यात्मिकाधिदैविकवायूपास्त्यर्थं वाक्यमित्युक्तमनूद्य सिद्धान्तयति—**एवमिति** । बहिरेव प्रतिजानीते—**ब्रह्मेति** । वाक्यस्य वायूपास्तिपरत्वे श्रौते कुतो ब्रह्मधीरित्याह—**कुत इति** । पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं लोकाश्रयत्वादिलिङ्गं प्राणश्रुतेर्बाधकमित्याह—**पूर्वेति** । तत्र वाक्यैकवाक्यत्वं विवृणोति—**पूर्वोत्तरयोरिति** । तथाप्येतदितरत् गुरुच्यतामित्याशङ्क्य वाक्यैक्यसंभवे न तद्भेत्तव्यमित्याह—**इहैवेति** । पूर्ववाक्यस्य कुतो ब्रह्मार्थत्वं, तत्राह—**पूर्वत्रेति** । शुभ्रं ज्योतिष्मत् । तस्यैव पूर्णतामाह—**तद्ब्रह्मेति** । तस्य कूटस्थतामाह—**तदेवेति** । तस्य सर्वाधिष्ठानतामाह—**तस्मिन्निति** । तदेव व्यतिरेकमुखेनाह—**तदु नेति** । तथापि कथं तदेवात्र वाच्यमित्याशङ्क्य प्रकरणाल्लिङ्गप्रत्यभिज्ञानाच्चेत्याह—**तदेवेति** । मुख्यप्राणे सिद्धे कथं प्रकरणादिनार्थान्तरधीरित्याशङ्क्याह—**प्राणेति** । एकवाक्यताकाङ्क्षाप्रकरणानुगृहीतबहुलिङ्गविरोधे एकश्रुतिकपूर्वप्राणशब्दस्य न मुख्यार्थोऽस्तीत्यर्थः । उत्सृष्टं सिद्धान्तमुक्त्वा सर्वजगत्कम्पहेतुत्वं लिङ्गान्तरं सूत्रयोजनया दर्शयति—एजयि

नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (का० २।५।५) इति । उत्तरत्रापि 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' (का० २।६।३) इति ब्रह्मैव निर्देक्ष्यते न वायुः । सवायुकस्य जगतो भयहेतुत्वाभिधानात् । तदेवेहापि संनिधानान्महद्भयं, वज्रमुद्यतमिति च भयहेतुत्वं प्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । वज्रशब्दोऽप्ययं भयहेतुत्वसामान्यात्प्रयुक्तः । यथा हि वज्रमुद्यतं ममैव शिरसि निपतेद्यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म । तथाच ब्रह्मविषयं श्रुत्यन्तरम्—'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' (तै० ८।१) इति । अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते । ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६।१५) इति मन्त्रवर्णात् । यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितं तदापेक्षिकम् । तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय 'अतोऽन्यदार्तम्' (बृ० ३।४) इति वाय्वादेरार्तत्वाभिधानात् । प्रकरणादप्यत्र परमात्मनिश्चयः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (का० १।२।१४) इति परमात्मनः पृष्टत्वात् ॥ ३९ ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

११अधिकरणम्

परं ज्योतिस्तु सूर्यस्य मण्डलं ब्रह्म वा भवेत् ॥ समुत्थायोपसंपद्येत्युक्तया स्यादविमण्डलम् ॥ १ ॥
समुत्थानं त्वंपदार्थशुद्धिर्वाक्यार्थबोधनम् । संपत्तिरुत्तमत्वोक्तेर्ब्रह्म स्यादक्षिसाक्षितः ॥ २ ॥

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा०

रत्नप्रभाव्याख्या

वणादपि प्राणः परमात्मैवेत्यर्थः । ब्रह्मणि वज्रशब्दः कथमित्याशङ्क्य गौण इत्याह—वज्रशब्द इति । बृहदारण्यके 'वायुरेव व्यष्टिः' इत्यत्र 'अपपुनर्मृत्युम्' इत्यपमृत्युजयरूपमापेक्षिकममृतत्वमुच्यते न मुख्यामृतत्वम्, तत्रैव वायूपास्तिप्रकरणं समाप्य 'अथ हैनमुषस्तः पप्रच्छ' इति ज्ञेयात्मानमुक्त्वा वाय्वादेर्नाशित्वोक्तेरित्याह—यत्तु वाय्वित्यादिना । तस्मात्काठकवाक्यं ज्ञेये समन्वितमिति सिद्धम् ॥ ३९ ॥ ज्योतिर्दर्शनात् । छान्दोग्ये प्रजापतिविद्यावाक्यमाह—एष इति । परंज्योतिः-

भामतीव्याख्या

प्रकरणादपि इति भाष्येण प्रकरणमुक्तम् । यत्खलु पृष्टं तदेव प्रधानं प्रतिवक्तव्यमिति तत्र प्रकरणम् । पृष्टादन्यस्मिंस्तूच्यमाने शास्त्रमप्रमाणं भवेदसंबद्धप्रलापित्वात् । यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितमापेक्षिकं तदिति । 'अपपुनर्मृत्युं जयति' इति श्रुत्या ह्यपमृत्योर्विजय उक्तो नतु परममृत्युविजय इत्यापेक्षिकत्वं, तच्च तत्रैव प्रकरणान्तरकरणेन हेतुना । न केवलमपश्रुत्या तदापेक्षिकमपि तु परमात्मानमभिधाय 'अतोऽन्यदार्तम्' इति वाय्वादेरार्तत्वाभिधानात् । नह्यार्तान्मृत्युरादनार्तो भवतीति भावः ॥ ३९ ॥ ज्योतिर्दर्शनात् । अत्र हि ज्योतिःशब्दस्य तेजसि मुख्यत्वात्, ब्रह्मणि जघन्यत्वात्, प्रकरणाच्च श्रुतेर्बलीयस्त्वात्, पूर्ववच्छ्रुतिसंकोचस्य चात्राभावात्,

आनन्दगिरीयव्याख्या

मिति । तत्र हेतुः—तथाचेति । केन तर्हि मर्त्यानां जीवनं, तत्राह—इतरेणेति । इतरं स्फोरयति—यस्मिन्निति । पूर्वत्र ब्रह्मोक्तेरत्रापि तदेकवाक्यत्वात्तदेवोक्तमित्युक्तम् । इदानीमुत्तरवाक्येऽपि ब्रह्मोक्तिमाह—उत्तरत्रेति । अस्येश्वरस्य भयादग्निसूर्यौ तपतः । इन्द्रादयः स्वव्यापारेषु धावन्ति । मृत्योरुक्तानपेक्ष्य पञ्चमत्वम् । कथमत्र ब्रह्मोक्तं, वायुरेवाग्न्यादिभयकारणं किं न स्यात्, तत्राह—सवायुकस्येति । तथापि कथं प्रकृते ब्रह्मोक्तिरित्याशङ्क्य प्रकरणानुगृहीतभयहेतुत्वलिङ्गप्रत्यभिज्ञानादित्याह—तदेवेति । अशनौ प्रसिद्धवज्रशब्दस्य ब्रह्मविरोधित्वान्नात्र ब्रह्मोक्तमित्याशङ्क्याह—वज्रेति । तस्य भयहेतौ ब्रह्मणि प्रवृत्तिं दृष्टान्तेन स्फुटयति—यथेति । भयहेतुत्वस्य श्रुत्यन्तरे ब्रह्मणः सिद्धेस्तत्प्रत्यभिज्ञानादपि ब्रह्मैवेदमित्याह—तथाचेति । भीषा भयेनास्माद्ब्रह्मणो निमित्तादिति यावत् । ब्रह्मैवात्र प्रतिपाद्यमित्यत्र लिङ्गान्तरमाह—अमृतत्वेति । श्रुतस्य फलस्य ब्रह्मधिया व्याप्तिमाह—ब्रह्मेति । व्याप्तिभङ्गमुक्तमनूद्य प्रत्याह—यत्त्विति । 'अपपुनर्मृत्युं जयति' इत्यपमृत्युजयस्योक्तेरित्यर्थः । तस्यापेक्षिकत्वे हेत्वन्तरमाह—तत्रैवेति । पञ्चमेऽध्याये सूत्रोक्त्यनन्तरमेव परमात्मानमन्तर्यामिणं प्रकृत्य ततोऽन्यस्य नाशित्वोक्तेर्वायुज्ञानाधीनममृतत्वमापेक्षिकमित्यर्थः । एतस्मिन्वाक्ये ब्रह्मैव प्रतिपाद्यमित्यत्र मानान्तरमाह—प्रकरणादिति । तस्य परमात्मविषयत्वे हेतुमाह—अन्यत्रेति ॥ ३९ ॥ बहुलिङ्गविरोधेन श्रुतिबाधवत्प्रकरणानुगृहीतोत्तमपुरुषश्रुत्या ज्योतिःश्रुतेर्मुख्यार्थबाधमाह—ज्योतिरिति । दहराधिकरणे ज्योतिःशब्दं ब्रह्मेति सिद्धवदादाय ब्रह्मरूपेणोच्यते जीव इत्युक्तम् । इदानीं ब्रह्मैव ज्योतिःशब्दमित्येतन्निश्चयितुं तदेव वाक्यमाह—एष इति । परं ज्योतिरिति

८।१२।३ ) इति श्रूयते । तत्र संशय्यते, किं ज्योतिःशब्दं चक्षुर्विषयतमोपहं तेजः किंवा परं ब्रह्मेति । किं तावत्प्राप्तम् । प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । कुतः । तत्र ज्योतिःशब्दस्य रूढत्वात् । 'ज्योतिश्चरणाभिधानात्' ( ब्र० सू० १।१।२४ ) इत्यत्र हि प्रकरणाज्ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते । न चेह तद्वत्किंचित्स्वार्थपरित्यागे कारणं दृश्यते । तथाच नाडीखण्डे-'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' ( छा० ८।६।५ ) इति मुमुक्षोरादित्यप्राप्तिरभिहिता । तस्मात्प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । एवं प्राप्ते ब्रूमः—परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् । दर्शनात् । तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते, 'य

---

रत्नप्रभाव्याख्या

श्रुतिभ्यां संशयमाह—तत्रेति । घटादिविषयावरकतमोनाशकं सौरमित्यर्थः । पूर्वत्र ब्रह्मप्रकरणस्यानुग्राहकः सर्वशब्दसंचाद्ययोगोऽस्तीति प्राणश्रुतिर्ब्रह्मणि नीता । न तथात्र 'य आत्मापहतपाप्मा' इति प्रकरणस्यानुग्राहकं पश्याम इति प्रत्युदाहरणेन पूर्वपक्षमाह—प्रसिद्धमेवेत्यादिना । पूर्वपक्षे सूर्योपास्तिः, सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलम् । ननु ज्योतिरधिकरणे ज्योतिःशब्दस्य ब्रह्मणि वृत्तेरुक्तत्वात्कथं पूर्वपक्ष इत्यत आह—ज्योतिरिति । तत्र गायत्रीवाक्ये प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्याज्ज्योतिःशब्दस्य स्वार्थत्यागः कृतः, तथात्र स्वार्थत्यागे हेत्वदर्शनात्पूर्वपक्ष इत्यर्थः । ज्योतिःश्रुतेरनुग्राहकमर्चिरादिमार्गस्थत्वं लिङ्गमाह—तथाचेति । 'ता वा एता हृदयस्य नाड्यः' इति कण्डिकया नाडीनां रश्मीनां च मिथः संश्लेषमुक्त्वा अथ संज्ञालोपानन्तरं यत्र काले एतन्मरणं यथा स्यात्तथोत्क्रामति अथ तदा एतैर्नाडीसंश्लिष्टरश्मिभिरूर्ध्वः सन्नुपरि गच्छन् गत्वादित्यं ब्रह्मलोकद्वारभूतं गच्छतीत्यभिहितं, तथैवात्रापि शरीरात्समुत्थाय मृत्वा परं ज्योतिरादित्याख्यमुपसंपद्य द्वारा ब्रह्मलोकं गत्वा स्वस्वरूपेणाभिनिष्पद्यत इति वक्तव्यम् । समुत्थायोपसंपद्येति क्त्वाश्रुतिभ्यां ज्योतिषोऽर्चिरादिमार्गस्थत्वलाभादित्यर्थः । अतो मार्गस्थसूर्योपास्त्या क्रममुक्तिपरं वाक्यमिति प्राप्ते सिद्धान्तयति—एवमिति । व्याख्येयत्वेनोपक्रान्त ब्र

भामतीव्याख्या

प्रत्युत ब्रह्मज्योतिःपक्षे क्त्वाश्रुतेः पूर्वकालार्थायाः पीडनप्रसङ्गात्, समुत्थानश्रुतेश्च तेज एव ज्योतिः । तथाहि—समुत्थानपूर्वकत्वं श्रूयते, न तु विवेकविज्ञानम् । उद्गमनं च तेजःपक्षेऽर्चिरादिमार्गेणोपपद्यते । आदित्यश्चार्चिराद्यपेक्षया परं ज्योतिर्भवतीति तदुपसंपद्य तस्य समीपे भूत्वा स्वेन रूपेणाभिनिष्पद्यते, कार्यब्रह्मलोकप्राप्तौ क्रमेण मुच्यते । ब्रह्मज्योतिःपक्षे तु ब्रह्म भूत्वा स्वरूपनिष्पत्तिः । नच देहादिविविक्तब्रह्मस्वरूपसाक्षात्कारो वृत्तिरूपोऽभिनिष्पत्तिः । सा हि ब्रह्मभूयात्प्राचीना न तु पराचीना सेयमुपसंपद्येति क्त्वाश्रुतेः पीडा । तस्मात्तिसृभिः श्रुतिभिः प्रकरणबाधनात्तेज एवात्र ज्योतिरिति प्राप्तम् । एवं प्राप्तेऽभिधीयते— परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् । दर्शनात् । तस्य हीह प्रकरणे अनुवृत्तिर्दृश्यते । यत्खलु प्रतिज्ञायते, श्रूयते

आनन्दगिरीयव्याख्या

श्रुतिभ्यां संशयमाह—तत्रेति । चक्षुषो विषयो घटादिस्तस्यावरकं बाह्यं तमस्तदपहतिकारणमादित्याख्यं तेजस्तदिह ज्योतिःशब्दं ज्योतिःश्रुतेस्तत्र रूढत्वादित्येकः पक्षः । ज्योतिर्विशेषणस्य परत्वस्य निरतिशयत्वस्य ब्रह्मणोऽन्यत्रायोगात्तदेव ज्योतिरिति पक्षः । प्रश्नपूर्वकं पूर्वपक्षयति—किमिति । नच प्रकरणात्प्राणस्येव ज्योतिषो ब्रह्मत्वं, तत्र सर्वशब्दश्रुतिसंकोचवत्प्रकृते प्रकरणानुग्राहकाभावात् । परशब्दस्य विशेषणार्थस्य विशेष्यानुसारेणादित्येऽपि नेयत्वादुक्तश्रुतेर्निर्विशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वोत्तरपक्षयोः सूर्योपास्त्या क्रममुक्तिः, ब्रह्मज्ञानान्मुक्तिरिति फलभेदः । सर्वशब्दस्येवात्र कस्याश्चिदपि श्रुतेरसंकोचात्प्रागिवेहापि 'समुत्थाय' इत्यादिसंकोचाद्वा युक्तमादित्यग्रहणमिति भावः । प्रसिद्धस्याप्रतिपाद्यत्वात्तद्ग्रहणं नेति शङ्कते—कुत इति । अप्रतिपाद्यत्वेऽपि तस्योपास्यत्वेन देयत्वमाह—तत्रेति । ज्योतिरधिकरणन्यायेनास्यापि निर्णयात्पूर्वपक्षानुत्थानादनारभ्यमेतदधिकरणमित्याशङ्क्याह—ज्योतिरिति । ब्रह्मणो गायत्रीवाक्ये प्रकृतत्वात्तस्य सर्वनाम्ना परामृष्टस्य द्युसंबन्धलिङ्गात्प्रत्यभिज्ञानात्तत्र ज्योतिःशब्दो ब्रह्मणि प्रसिद्धिमुत्सृज्य वर्तते । नच तथास्मिन्वाक्ये ज्योतिःशब्दस्य स्वार्थत्यागे हेतुरदृष्टत्वादित्यगतार्थतेत्यर्थः । नन्वत्रापि परं ज्योतिरिति ज्योतिषो विशेषणं स्वरूपाभिनिष्पत्तिरुत्तमपुरुषत्वं चादित्येऽनुपपन्नं ज्योतिःशब्दस्य प्रसिद्धार्थत्यागे हेतुरस्तु, नेत्याह—तथाचेति । 'अथ या एता हृदयस्य नाड्यः' इत्यादि नाडीखण्डः । तत्रादित्यग्रहानुरोधेन मुमुक्षोस्तत्प्राप्तिरभिहितेति संबन्धः । विशेषज्ञानोपरमानन्तर्यमथशब्दार्थः । यत्रेत्यारब्धकर्मावसानकालोक्तिः । एतदुत्क्रमणं यथा तथेति क्रियाविशेषणम् । अस्मादभिमानविषयाद्देहादुत्क्रमणं यदा करोत्ययं तदैतैरेव त्यस्य रश्मिभिरालम्बनैरूर्ध्वः सन्नाक्रमत उपरि गच्छतीत्युपक्रम्यादित्यं गच्छतीत्युपसंपत्तव्यस्य ज्योतिषो यथादित्यत्वं तथा श्रुतं परत्वमर्चिरादिभ्यो युक्तं समुत्थायोपसंपद्येति च पूर्वकालार्थक्त्वाश्रुतेर्ब्रह्मपक्षे बाधाद्देहाभिमानत्यागरूपमुत्थानं कृत्वोपसंपद्य कार्यब्रह्म गत्वा स्वेन रूपेणाभिनिष्पद्यते स चोत्तमः पुरुष इत्यङ्गीकारे सर्वाविरोधादादित्यपक्षो ज्योतिःश्रुत्या क्त्वाश्रुतिभ्यां चाभ्युपेय इत्यर्थः । मार्गपर्वभूतादित्योपास्त्या तत्प्राप्तिद्वारा क्रममुक्तिपरं वाक्यमित्युपसंहरति—तस्मादिति । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञाय व्याचष्टे— एवमिति । श्रुतिभिस्तेजसो प्राप्तत्वे कुतो ब्रह्मधीरिति पृच्छति—कस्मादिति । हेतुमादाय व्याचष्टे—दर्शनादिति ।

आत्माऽपहतपाप्मा' (छा० ८।७।१) इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात्। 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा० ८।९।३) इति चानुसंधानात्। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८।१२।१) इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात् । ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः। 'परं ज्योतिः' 'स उत्तमः पुरुषः' (छा० ८।१२।३) इति च विशेषणात्। यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति। नासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसंबन्धात् । न ह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥

रत्नप्रभाव्याख्या

त्मैवात्र ज्योतिःशब्देन व्याख्येय इति ज्योतिर्वाक्येनैकवाक्यताप्रयोजकप्रकरणानुगृहीतोत्तमपुरुषश्रुत्या वाक्यभेदकज्योतिःश्रुतिर्बाध्येति भावः। अशरीरत्वफललिङ्गाच्च ब्रह्मैव ज्योतिर्न सूर्य इत्याह—**अशरीरमिति**। नच सूर्यप्राप्त्या क्रमेणाशरीरत्वं स्यादिति वाच्यं, परत्वेन विशेषितस्य ज्योतिष एव स उत्तम इति परामर्शेनाशरीरत्वनिश्चयादित्याह—**परमिति**। पूर्वोक्तलिङ्गं दूषयति—**यत्त्विति**। नाडीखण्डे दहरोपासकस्य या सूर्यप्राप्तिरुक्ता स न मोक्ष इति युक्ता सूर्योक्तिः, अत्र तु प्रजा-

भामतीव्याख्या

परामृश्यते, यच्चोपसंह्रियते, स एव प्रधानं प्रकरणार्थः। तदन्तःपातिनस्तु सर्वे तदनुगुणतया नेतव्याः । ननु श्रुत्यनुरोधमात्रेण प्रकरणादपक्रष्टव्या इति हि लोकस्थितिः। अन्यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च तदन्तःपातिनो 'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिश्रुत्यनुरोधेन पृथग्विधयः प्रसज्येरन्। तत्किमिदानीं 'तिस्र एव साह्नस्योपसदः कार्या द्वादशाहीनस्य' इति प्रकरणानुरोधात्समुदायप्रसिद्धिबललब्धमहर्गणाभिधानं परित्यज्याहीनशब्दः कथमप्यवयवव्युत्पत्त्या साह्नं ज्योतिष्टोममभिधाय तत्रैव द्वादशोपसत्तां विधत्ताम्। स हि कृत्स्नविधानान्न कुतश्चिदपि हीयते क्रतोरित्यहीनः शक्यो वक्तुम्। मैवम्। अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति श्रुत्या प्रकरणबाधनान्न द्वादशोपसत्तामहीनगुणयुक्ते ज्योतिष्टोमे शक्नोति विधातुम् । नाप्यतोऽपकृष्टं सदहर्गणस्य विधत्ते। परप्रकरणेऽन्यधर्मविधेरन्याय्यत्वात्। असंबद्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसंधानक्लेशात्। तेनानपकृष्टे नैव द्वादशाहीनस्येति वाक्येन साह्नस्य तिस्र उपसदः कार्या इति विधिं स्तोतुं द्वादशाहविहिता द्वादशोपसत्ता तत्प्रकृतित्वेन च सर्वाहीनेषु प्राप्ता निवीतादिवदनूद्यते। तस्मादहीनश्रुत्या प्रकरणबाधेऽपि न द्वादशाहीनस्येति वाक्यस्य प्रकरणादपकर्षः। ज्योतिष्टोमप्रकरणाम्नातस्य पूषाद्यनुमन्त्रणमन्त्रस्य यल्लिङ्गबलात्प्रकरणबाधेनापकर्षस्तदगत्या । पौष्णादौ च कर्मणि तस्यार्थवत्त्वात् । इह त्वपकृष्टस्यार्चिरादिमार्गोपदेशे फलस्योपायमार्गप्रतिपादकेऽतिविशदे 'एष संप्रसादः' इति वाक्यस्याविशदैकदेशमात्रप्रतिपादकस्य निष्प्रयोजनत्वात्। नच द्वादशाहीनस्येतिवद्यथोक्तात्मध्यानसाधनानुष्ठानं स्तोतुमेष संप्रसाद इति वचनमर्चिरादिमार्गमनुवदतीति युक्तम्, स्तुतिलक्षणायां स्वाभिधेयसंसर्गतात्पर्यपरित्यागप्रसङ्गात्। द्वादशाहीनस्येति तु वाक्ये स्वार्थसंसर्गतात्पर्ये प्रकरणविच्छेदस्य प्रासादमात्रस्य चाप्रयोजनत्वमिति स्तुत्यर्थो लक्ष्यते । न चैतद्दोषभयात्समुदायप्रसिद्धिमुल्लङ्घ्यावयवप्रसिद्धिमुपाश्रित्य साह्नस्यैव द्वादशोपसत्तां विधातुमर्हति, त्रित्वद्वादशत्वयोर्विकल्पप्रसङ्गात्। नच सत्यां गतौ विकल्पो न्याय्यः । साह्नाहीनपदयोश्च प्रकृतज्योतिष्टोमाभिधायिनोरानर्थक्यप्रसङ्गात्। प्रकरणादेव तदवगतेः। इह तु स्वार्थसंसर्गतात्पर्ये नोक्तदोषप्रसङ्ग इति पौर्वापर्यालोचनया प्रकरणानुरोधाद्रूढिमपि पूर्वकालतामपि परित्यज्य प्रकरणानुगुण्येन ज्योतिः परं ब्रह्म प्रतीयते। यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति। नह्येतत्प्रकरणोक्तनासावात्यन्तिको मोक्षः, किंतु कार्यब्रह्मलोकप्राप्तिः। नच क्रममुक्त्यभिप्रायं स्वेन रूपेणाभिनिष्पद्यत इति वचनम्। नह्येतत्प्रकरणोक्तं ब्रह्मतत्त्वविदुषो गत्युत्क्रान्ती स्तः । तथा च श्रुतिः—'न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति । नच तद्द्वारेण क्रममुक्तिः। अर्चिरादिमार्गस्य हि कार्यब्रह्मलोकप्रापकत्वं न तु ब्रह्मभूयहेतुभावः। जीवस्य तु निरुपाधिनित्यशुद्धबुद्धब्रह्मभावसाक्षा-

आनन्दगिरीयव्याख्या

ब्रह्मणोऽस्मिन्प्रकरणे वक्तव्यत्वेनानुवृत्तिदर्शनं हेतुना साधयति—**य इति**। प्रकरणाविच्छेदं कथयति—**एतमिति**। किंचार्चिराद्यपेक्षया परं ज्योतिरादित्यश्चेत्तत्प्राप्त्या विदुषो नाशरीरत्वं, आदित्यस्य देवतात्मनः सशरीरत्वात्। नच तत्प्राप्त्या स्वरूपाभिनिष्पत्तिः, अन्यस्यान्यात्मतायोगादित्याह—**अशरीरमिति**। उपास्त्या तत्प्राप्तावशरीरत्वमाशङ्क्याह—**ब्रह्मेति**। इतश्चात्र ब्रह्मैव ज्योतिरित्याह—**परमिति**। शरीरादुत्थितस्यानन्तरमुपसंपत्तव्यत्वमादित्यस्य नाडीखण्डे दृष्टमिति लिङ्गानुगृहीतां ज्योतिरादिश्रुतिमपहतपाप्मत्वादिपरमात्मप्रकरणानुगृहीतोत्तमपुरुषादिश्रुत्या बाधित्वा परं ब्रह्म ज्योतिराश्रेयं, एकवाक्यतापादकफलवत्प्रकरणोपेतश्रुतेरविफललिङ्गसंगतिश्रुतितो बलीयस्त्वात्, अस्य हि निर्गुणविद्यायां श्रुताशरीरताफलायामर्चिराद्यनवतारादादित्यानर्थक्यान्मार्गपर्वत्वेन तस्य सगुणविद्यानुप्रविष्टत्वादेवोक्तसंयोगादत्र ज्योतिर्मात्रश्रुतेर्मार्गानुक्तेरादित्योक्तौ श्रुतित्रयानर्थक्यात्, 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायाद्बलवत्प्रकरणोपेतप्रागुक्तश्रुत्या ब्रह्मैव ज्योतिरिति भावः। परोक्तमनुभाष्य दूषयति—**यत्त्विति**। आत्यन्तिकेऽपि मोक्षे तदुभयं स्यादित्याशङ्क्य वाक्यविकरणविरोधान्नैवमित्याह—**न हीति**। पूर्वापरालोचनायामत्र क्रममुक्त्यप्रतीतेर्बाधित्वा स्वत्वाश्रुतिं परस्य ज्योतिषो ब्रह्मणः प्राप्तिरेव

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

(१२अधिकरणम्) वियद्वा ब्रह्म वाकाशो वै नामेति श्रुतं वियत् ॥ अवकाशप्रदानेन सर्वनिर्वाहकत्वतः ॥ १ ॥
निर्वोढृत्वं नियन्तृत्वं चैतन्यस्यैव तत्त्वतः ॥ ब्रह्म स्याद्वाक्यशेषे च ब्रह्मात्मेत्यादि शब्दतः ॥ २ ॥

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा० ८।१४।१) इति श्रूयते। तत्किमाकाशशब्दं परं ब्रह्म किंवा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः। आकाशशब्दस्य तस्मिन्रूढत्वात्, नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन्योजयितुं शक्यत्वात्, स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणादिति। एवं प्राप्त इदमुच्यते—परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति। कस्मात्। अर्थान्तरत्वादिव्यपदेशात्। 'ते यदन्तरा तद्ब्रह्म' इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति। नच ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं संभवति,

---

रत्नप्रभाव्याख्या

पतिवाक्ये निर्गुणविद्यायामर्चिरादिगतिस्थसूर्यस्यानन्वयादनर्थकत्वात् श्रुतिव्यत्यासेन स्वरूपं साक्षात्कृत्य परं ज्योतिस्तदेवोप- पद्यत इति व्याख्येयमिति भावः ॥ ४० ॥ **आकाशो व्यपदेशात्।** छान्दोग्यमुदाहरति—**आकाश इति।** यथोपक्र- बलाज्ज्योतिःश्रुतिबाधस्तथाकाशोपक्रमाद्ब्रह्मादिशब्दबाध इति दृष्टान्तेन पूर्वपक्षयति—**भूतेति।** श्रुतैर्गुणैराकाशोपास्तिर्गु- णब्रह्मज्ञानं चेत्युभयत्र फलम्। 'आकाशस्तल्लिङ्गात्' इत्यनेन पौनरुक्त्यमाशङ्क्य तद्वदत्र स्पष्टलिङ्गाश्रवणादिति परिहरति—**स्रष्टृ- त्वादेश्चेति।** वै नामेति प्रसिद्धिलिङ्गस्याकाशश्रुतेश्च वाक्यशेषगताभ्यां ब्रह्मात्मश्रुतिभ्यामनेकलिङ्गोपेताभ्यां बाधो युक्तः। ... बहुप्रमाणसंवादस्तत्र वाक्यस्य तात्पर्यमिति निर्णयादिति सिद्धान्तयति—**परमेवेत्यादिना।** नामरूपे शब्दार्थौ तदन्त-

भामतीव्याख्या

स्कारहेतुके मोक्षे कृतमर्चिरादिमार्गेण कार्यब्रह्मलोकप्राप्त्या। अत्रापि ब्रह्मविदस्तदुपपत्तेः। तस्माच्च ज्योतिरादित्यमुपसंपद्य संप्र- दस्य जीवस्य स्वेन रूपेण पारमार्थिकेन ब्रह्मणाभिनिष्पत्तिराञ्जसीति श्रुतेरत्रापि क्लेशः। अपिच परं ज्योतिः स उत्तमपुरुष इति परिष्टाद्विशेषणात्तेजसो व्यावर्त्यपुरुषविषयत्वेनावस्थापनाज्ज्योतिःपदस्य परमेव ब्रह्मज्योतिः न तु तेज इति सिद्धम् ॥ ४० ॥ **आका- शोऽर्थान्तरत्वादिव्यपदेशात्।** यद्यपि 'आकाशस्तल्लिङ्गात्' इत्यत्र ब्रह्मलिङ्गदर्शनादाकाशः परमात्मेति व्युत्पादितं, तद्व- तद्वदत्र परमात्मलिङ्गदर्शनाभावान्नामरूपनिर्वहणस्य भूताकाशेऽप्यवकाशदानेनोपपत्तेरकस्माच्च रूढिपरित्यागस्यायोगात्, नामरू- अन्तरा ब्रह्मेति च नाकाशस्य नामरूपयोर्निर्वहितुरन्तरालत्वमाह, अपि तु ब्रह्मणः, तेन भूताकाशो नामरूपयोर्निर्वहिता। ... चैतयोरन्तरालं मध्यं सारमिति यावत्। न तु निर्वोढैव ब्रह्म अन्तरालं वा निर्वोढृ। तस्मात्प्रसिद्धेर्भूताकाशो न तु ब्रह्मेति प्राप्त एवं प्राप्त उच्यते—परमेवाकाशं ब्रह्म, **कस्मात्, अर्थान्तरत्वादिव्यपदेशात्।** नामरूपमात्रनिर्वाहकमिहाकाशमुच्यते। भूताकाशं च विकारत्वेन नामरूपान्तःपाति सत् कथमात्मानमुद्वहेत्। नहि सुशिक्षितोऽपि विज्ञानी स्वेन स्कन्धेनात्मानं वोढुं ... हते। नच नामरूपश्रुतिरविशेषतः प्रवृत्ता भूताकाशवर्जं नामरूपान्तरे संकोचयितुं सति संभवे युज्यते। नच निर्वाहकत्वं निरु-

आनन्दगिरीयव्याख्या

स्वरूपाभिनिष्पत्तिः, तस्यैवोत्तमपुरुषत्वेत्युपेत्य वाक्यस्य ब्रह्मपरत्वमास्थेयम्। अतो ब्रह्मज्ञानात्तत्प्राप्तिरिति भावः ॥ ४० ॥ प्रकरणेन उप- मयुरुपादिश्रुत्या ज्योतिरादिश्रुतेर्बाध उक्तः। इदानीमात्मब्रह्मश्रुतिभ्यां लिङ्गानुगृहीताभ्यामाकाशश्रुतेर्बाधमाह—**आकाश इति।** छान्दो- ग्यवाक्यमुदाहरति—**आकाश इति।** आकाशब्रह्मश्रुतिभ्यां संशयमुक्त्वा पूर्वपक्षयति—**तदित्यादिना।** यथोपक्रमादर्थान्तरे ... ढोऽपि ज्योतिःशब्दः स्वार्थात्प्राच्यावितस्तथाकाशोपक्रमाद्ब्रह्मादिशब्दः स्वार्थात्प्राच्याव्यतामिति मत्वा हेतुमाह—**आकाशेति।** ... शेषं ब्रह्मण्युक्तश्रुतेरन्वयोक्तेः श्रुत्यादिसंगतयः। पूर्वपक्षे वाय्वादिमात्राधिष्ठानाकाशात्मकब्रह्मोपास्त्या क्रममुक्तिः, सिद्धान्ते ... ष्ठानब्रह्मधिया साक्षान्मुक्तिरिति फलभेदः। रूढिग्रहे तस्य नामरूपनिर्वहणमयुक्तमित्याशङ्क्य नामरूपशब्दाभ्यां प्रसिद्धदेवदत्तादि- सितासितादिरूपाणां च स्वीकारात्तदाश्रयावकाशदानद्वारा भूताकाशेऽपि तन्निर्वहणं युक्तमित्याह—**नामेति।** 'आकाशस्तल्लिङ्गात्' इत्यनेन गतार्थत्वमाशङ्क्याह—**स्रष्टृत्वादेश्चेति।** तत्र हि सर्वजगदुत्पत्तेरेवकारसिद्धनिरपेक्षकारणत्वस्य प्रश्नप्रत्युक्तिसामानाधिकरण्यसामर्थ्यं- दृष्टेर्ब्रह्मपरत्वं, नैवमिह तत्परत्वे किंचिदसाधारणं लिङ्गमित्यगतार्थतेत्यर्थः। तस्य च श्रुत्या प्रसिद्धवदुपादानात्प्रमितस्य ... आभूतसंप्लवस्थानादमृतत्वं, आप्नोतीत्यात्मत्वं व्यापित्वात्। तस्मान्नामादिवद्भूताकाशोपास्त्यर्थं वाक्यमित्यर्थः। पूर्वपक्षमनूद्य ... प्रतिज्ञां व्याकरोति—**एवमिति।** आकाशशब्दाद्भूताकाशो भाति, कुतो ब्रह्मधीरित्याह—**कस्मादिति।** हेतुमादायार्थान्तरत्वं ... विशदयति—**अर्थान्तरत्वादीति।** भूताकाशस्यापि नामरूपाभ्यामर्थान्तरत्वं, देवदत्तादिशब्दस्य नामत्वान्नीलपीतादेः रूपत्वात्तदन्त- रत्वस्य भूताकाशे सिद्धत्वादित्याशङ्क्याह—**नचेति।** यत्र नामरूपशब्दौ संभूयोक्तौ तत्र शब्दार्थावेव श्रुतिषु गृह्येते 'तन्नामरूपाभ्यां' इत्यादौ तथा दृष्टेः। नच शब्दार्थान्तर्भूतस्य भूताकाशस्य ततोऽर्थान्तरत्वमित्यर्थः। किंच भूताकाशमपि विकारतया नामरूप-

सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र संभवति । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२) इत्यादिब्रह्मकर्तृकत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति । बाढमस्ति । अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति । 'तद्ब्रह्म तदमृतं स आत्मा' (छा० ८।१४) इति च ब्रह्मवादस्य लिङ्गानि । 'आकाशस्तल्लिङ्गात्' (ब्र० १।२२) इत्यस्यैवायं प्रपञ्चः ॥ ४१ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

(१३अधिकरणम्)

रयाद्विज्ञानमयो जीवो ब्रह्म वा जीव इष्यते ॥ आदिमध्यावसानेषु संसारप्रतिपादनात् ॥ १ ॥
विविच्य लोकसंसिद्धं जीवं प्राणाद्युपाधितः ॥ ब्रह्मत्वमन्यतोऽप्राप्तं बोध्यते ब्रह्म नेतरत् ॥ २ ॥

व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठे प्रपाठके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ० ४।३।७) इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः । तत्किं संसा-

रत्नप्रभाव्याख्या

तिनस्तद्भिन्नत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः । नामादिकर्तृत्वं न ब्रह्मलिङ्गं, जीवस्थत्वादिति शङ्कते—नन्विति । 'अनेन जीवेन' इत्यत्र जीवस्य ब्रह्माभेदेन कर्तृत्वमुच्यते साक्षादयोगादिति परिहरति—बाढमिति । यचोक्तं स्पष्टं लिङ्गं नास्तीति, तत्राह—नामेति । तर्हि पुनरुक्तिः, तत्राह—आकाशेति । तस्यैव साधकोऽयं विचारः । अत्राकाशशब्दस्य ब्रह्मणि वृत्तिं सिद्धवत्कृत्य तत्र संशयादिप्रवृत्तेरुक्तत्वादिति न पौनरुक्त्यमिति भावः ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन । अहंधीगम्येषु कतम आत्मेति जनकप्रश्ने याज्ञवल्क्य आह—योऽयमिति । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । सप्तमी व्यतिरेकार्था । प्राणबुद्धिभ्यां भिन्न इत्यर्थः । वृत्तेरज्ञानाच्च भेदमाह—अन्तर्ज्योतिरिति । पुरुषः पूर्ण इत्यर्थः । उभयलिङ्गानां दर्शनात्संशयमाह—तत्किमिति । पूर्वत्र नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तं, तदयुक्तं, 'प्राज्ञेनात्मना संपरिष्वक्तः' इत्यभिन्नेऽपि जीवा-

भामतीव्याख्या

मवगतं ब्रह्मलिङ्गं कथंचित्क्लेशेन परतन्त्रे नेतुमुचितम् 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च स्रष्टृत्वमतिस्फुटं ब्रह्मलिङ्गमत्र प्रतीयते । ब्रह्मरूपतया च जीवस्य व्याकर्तृत्वे ब्रह्मण एव व्याकर्तृत्वमुक्तम् । एवं च निर्वहितुरेवान्तरालतोपपत्तेरन्यो निर्वहिताऽन्यश्चान्तरालमित्यर्थभेदकल्पनापि न युक्ता । तथा च ते नामरूपे यदन्तरेत्ययमर्थान्तरव्यपदेश उपपन्नो भवत्याकाशस्य । तस्मादर्थान्तरव्यपदेशात्, तथा 'तद्ब्रह्म तदमृतम्' इति व्यपदेशाद्ब्रह्मैवाकाशमिति सिद्धम् ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन । 'आदिमध्यावसानेषु संसारिप्रतिपादनात् । तत्परे ग्रन्थसंदर्भे सर्वं तत्रैव योज्यते ॥' संसार्येव तावदात्माहंकारास्पदं प्राणादिपरीतः सर्वजनसिद्धः । तमेव च 'योऽयं विज्ञानमयः प्राणेषु' इत्यादिश्रुतिसंदर्भ आदिमध्यावसानेष्वामृशतीति तदनुवादपरो भवितुमर्हति । एवं च संसार्यात्मैव किंचिदपेक्ष्य महान्, संसारस्य चानादित्वेनानादित्वादज उच्यते, न तु तदतिरिक्तः कश्चिदत्र नित्यशुद्धबुद्धमुक्तस्वभावः प्रतिपाद्यः । यत्तु सुषुप्त्युत्क्रान्त्योः प्राज्ञेनात्मना संपरिष्वक्त इति भेदं मन्यसे, नासौ भेदः, किंत्वयमात्मशब्दः स्वभाववचनः, तेन सुषुप्त्युत्क्रान्त्यवस्थायां विशेषविषयाभावात्संपिण्डितप्रज्ञेन प्राज्ञेनात्मना स्वभावेन परिष्वक्तो न किंचि-

आनन्दगिरीयव्याख्या

कथमात्मानमुद्दहेत्, नन तन्निर्वाहकत्वं निरङ्कुशं श्रुतं परतन्त्रभूताकाशे कथंचिन्नेयमित्याह—नामेति । अन्यत्र तन्निर्वहणस्य ब्रह्मकर्तृकत्वसिद्धेस्तदेवात्रापि प्रत्यभिज्ञातमित्याह—अनेनेति । नामरूपनिर्वाहकत्वमादिशब्दोक्तं न ब्रह्मसाधारणमिति शङ्कते—नन्विति । जीवस्य तन्निर्वाहकत्वेऽपि ब्रह्माभेदात्तस्य ब्रह्मसाधारणतेत्याह—बाढमिति । स्रष्टृत्वादिब्रह्मलिङ्गमिह नेत्युक्तं प्रत्याह—नामेति । आकाशशब्दस्य ब्रह्मार्थत्वे लिङ्गान्येव सन्ति, भूताकाशार्थत्वे श्रुतिलिङ्गे स्तः । तथाच केवललिङ्गेभ्यस्तयोर्बलीयस्त्वाद्भूताकाशग्रहणमित्याशङ्क्यात्रापि ब्रह्मात्मश्रुती विद्येते इत्याह—तदिति । उपक्रमस्थाकाशश्रुतेः 'आकाशो वै नाम' इति प्रसिद्धलिङ्गाच्च नामरूपनिर्वहणतदर्थान्तरत्वामृतत्वलिङ्गानुगृहीते ब्रह्मात्मश्रुती बलवत्याविति भावः । 'आकाशस्तल्लिङ्गात्' इत्यत्रोपक्रमोपसंहाराभ्यां प्रतिपाद्यतया तात्पर्यवल्लिङ्गादाकाशस्य ब्रह्मत्वमुच्यते, तत्कथं वदानन्त्यलिङ्गादाकाशस्य ब्रह्मत्वमुक्तं, इहापि श्रुत्यन्तरसिद्धनामादिनिर्वाहकत्वसंवादेन तात्पर्यवल्लिङ्गादाकाशस्य ब्रह्मत्वमुच्यते, पृथगारम्भ इत्याशङ्क्याह—आकाश इति । तत्र स्रष्टृत्वस्पाष्टवदिह नेति विशेषोऽस्तीति भावः ॥ ४१ ॥ श्रुत्युपेतलिङ्गेन श्रुतेर्बाधमुक्त्वा लिङ्गेन लिङ्गस्यैव बाधमाह—सुषुप्तीति । साकाङ्क्षत्वं वारयति—व्यपदेशादिति । षष्ठाध्यायवाक्यजातं विषयत्वेनोदाहरति—बृहदिति । देहादीनामन्यतमो वा तदतिरिक्तो वात्मेति जनकस्य प्रश्ने याज्ञवल्क्यस्योत्तरम्—योऽयमिति । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेषु हृदीति व्यतिरेकार्थे सप्तम्यौ । प्राणबुद्ध्यतिरिक्त इत्यर्थः । बुद्धिवृत्तेर्वा विनक्ति—अन्तरिति । अज्ञानाद्भिनत्ति—ज्योतिरिति । पुरुषः पूर्णो योऽयमेवंभूतः स आत्मेत्यर्थः । तदेव वाक्यमधिकृत्योपक्रमस्थविज्ञानमयशब्दादुपसंहारस्थमर्येज्ञानादिशब्दाच्च संशयमाह—

रिस्वरूपमात्रान्वाख्यानपरं वाक्यमुतासंसारिस्वरूपप्रतिपादनपरमिति संशयः । किं तावत्प्राप्तम् । संसारिस्वरूपमात्रविषयमेवेति । कुतः । उपक्रमोपसंहाराभ्याम् । उपक्रमे 'योऽयं विज्ञानमयः प्राणेषु' इति शारीरलिङ्गात् । उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ० ४।४।२२) इति तदपरित्यागात्, मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति । एवं प्राप्ते ब्रूमः—परमेश्वरोपदेशपरमेवेदं वाक्यं न शारीरमात्रान्वाख्यानपरम् । कस्मात् । सुषुप्त्युत्क्रान्त्योः च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ० ४।३।२१) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति । तत्र पुरुषः शारीरः स्यात्तस्य वेदितृत्वात् । बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसंभवात् । प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् । तथोत्क्रान्तावपि 'अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति' (बृ० ४।३।३५) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति । तत्रापि शारीरो जीवः स्याच्छरीरस्वामित्वात् । प्राज्ञस्तु स एव परमेश्वरः । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्पर-

रत्नप्रभाव्याख्या

त्मनि भेदोक्तिवदौपचारिकभेदोक्तिसंभवादित्याक्षेपसंगतिः । पूर्वपक्षे कर्मकर्तृ जीवस्तुतिः, सिद्धान्ते जीवानुवादेन । ततः की-तभेदभिन्नस्य प्राज्ञस्य परमात्मनः स्वरूपैक्यप्रमितिरिति फलम् । बुद्धान्तो जाग्रदवस्था । आदिमध्यावसानेषु जीवोक्तेर्जीव-वकमिदं वाक्यमिति प्राप्ते सिद्धान्तयति—**परमेश्वरेत्यादिना** । वाक्यस्य जीवस्तावकत्वे जीवाद्भेदेन प्राज्ञस्याज्ञातस्योक्तेर-रसंगता स्यात्, अतो ज्ञाताज्ञातसंनिपाते ज्ञातानुवादेनाज्ञातं प्रतिपादनीयं, 'अपूर्वे वाक्यतात्पर्यम्' इति न्यायादिति सिद्धान्त-तात्पर्यम् । पुरुषः शरीरं प्राज्ञो जीव इति भ्रान्तिं वारयति—**तत्र पुरुष इत्यादिना** । देहस्य वेदनाप्रसक्तेर्निषेधा-त्पुरुषो जीव एव, प्राज्ञस्तु रूढ्या पर एवेत्यर्थः । अन्वारूढोऽधिष्ठितः । उत्सर्जन् घोरान्शब्दान्मुञ्चन् । बुद्धौ ध्यायन्तीवाल-

भामतीव्याख्या

द्भेदेत्यभेदेऽपि भेदवदुपचारेण योजनीयम् । यथाहुः—'प्राज्ञः संपिण्डितप्रज्ञः' इति । पत्यादयश्च शब्दाः संसारिण्येव कार्यकरण-घातात्मकस्य जगतो जीवकर्मार्जिततया तद्भोग्यतया च योजनीयाः । तस्मात्संसार्येवानूद्यते न तु परमात्मा प्रतिपाद्यत इति प्राप्त एवं प्राप्तेऽभिधीयते—'सुषुप्त्युत्क्रान्त्योर्भेदेन' व्यपदेशादित्यनुवर्तते । अयमभिसंधिः—किं संसारिणोऽन्यः परमात्मा नास्ति तस्मात्संसार्यात्मपरं 'योऽयं विज्ञानमयः प्राणेषु' इति वाक्यम्, आहोस्विदिह संसारिव्यतिरेकेण परमात्मनोऽसंकीर्तनात्संसारिपरामर्श-ध्यावसानेष्ववमर्शनात्संसार्यात्मपरं, न तावत्संसार्यतिरिक्तस्य तस्याभावः । तत्प्रतिपादका हि शतश आगमाः 'ईक्षतेर्नाशब्दम्' 'गति-सामान्यात्' इत्यादिभिः सूत्रसंदर्भैरुपपादिताः । न चात्रापि संसार्यतिरिक्तपरमात्मसंकीर्तनाभावः, सुषुप्त्युत्क्रान्त्योस्तत्संकीर्तनात् नच प्राज्ञस्य परमात्मनो जीवाद्भेदेन संकीर्तनं सति संभवे राहोः शिर इतिवदौपचारिकं युक्तम् । नच प्राज्ञशब्दः प्रज्ञाप्रकर्ष-शालिनि निरूढवृत्तिः कथंचिदज्ञविषयो व्याख्यातुमुचितः । नच प्रज्ञाप्रकर्षोऽसंकुचद्वृत्तिर्विदितसमस्तवेदितव्यात्सर्वविदोऽन्यत्र संभ-वति । न चेत्थंभूतो जीवात्मा । तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन जीवात्प्राज्ञस्य परमात्मनो व्यपदेशात् 'योऽयं विज्ञानमयः' इत्यादि-जीवात्मानं लोकसिद्धमनूद्य तस्य परमात्मभावोऽनधिगतः प्रतिपाद्यते । नच जीवात्मानुवादमात्रपराण्येतानि वचांसि । अन-गतार्थावबोधनपरं हि शाब्दं प्रमाणं, न त्वनुवादमात्रनिष्ठं भवितुमर्हति । अतएव च संसारिणः परमात्मभावविधानायादि-

आनन्दगिरीयव्याख्या

तद्विति । अङ्गुष्ठमात्रश्रुतावुपक्रमोपसंहारौ न जीवार्थावत्र तथेत्यगतार्थत्वं मत्वा प्रश्नपूर्वकं पूर्वपक्षयति—**किं तावदिति** । नामरूप-भेदवादादाकाशं ब्रह्मेत्युक्तं भेदवादो नैकान्तः, असत्यपि भेदे 'प्राज्ञेनात्मना संपरिष्वक्तः' इति भेदोपचारादित्याशङ्क्यात्रापि सुषुप्त्युत्क्रान्त्योर्भेदव्यपदेश-धनादधिकरणसंगतिः । षष्ठाध्यायस्य निर्विशेषे ब्रह्मण्यन्वयोक्तेः श्रुत्यादिसंगतयः । पूर्वपक्षे जीवानुवादेन कर्तृस्तुतिः, सिद्धान्ते तदनुवादेन तथाथार्थ्यधीरिति फलभेदः । जीवे महानित्याद्ययुक्तमित्याह—**कुत इति** । आदिमध्यावसानेषु जीवोक्तेस्तत्परे संदर्भे महानज इति तत्र कथंनिन्नेयमित्याह—**उपक्रम इति** । जीवानुवादेन कर्मापेक्षितकर्तृस्तुत्या तदधिकारसिद्धिरत्रेष्टेत्युपसंहर्तुमितिशब्दः । पूर्वपक्ष-मनुभाष्य सिद्धान्तयन्बहिरेव प्रतिज्ञामाह—**एवमिति** । उपक्रमोपसंहारपरामर्शानां जीवार्थतया तत्परे संदर्भे कथमीश्वरोक्तिरित्याह-कस्मादिति । तत्र हेतुं सोपस्कारमवतारयति—**सुषुप्ताविति** । सौषुप्तं भेदवादमुदाहरति—**सुषुप्तौ तावदिति** । करचरणा-दिमति शरीरे पुरुषशब्दात्कुतः शारीरात्परस्य भेदः, तत्राह—**तत्रेति** । तस्य वेदितृत्वेऽपि प्रकृते वेदितृत्वं नापेक्ष्यं, तदा बाह्यान्तर-धीनिषेधादित्याशङ्क्याह—**बाह्येति** । पुरुषस्य शारीरत्वेऽपि प्रकर्षेणाज्ञ इति व्युत्पत्त्या प्राज्ञशब्देनापि तस्यैवोक्तेर्भेदोक्तेरौपचारिकत्व-शारीरात्परस्य भेदोक्तिरित्याशङ्क्याह—**प्राज्ञ इति** । योगाद्रूढेर्बलीयस्त्वं मत्वा हेतुमाह—**सर्वेति** । औत्क्रान्तिकीमपि भेदोक्तिं दर्श-यति—**तथेति** । अन्वारूढोऽधिष्ठित उत्सर्जञ्ज्ञानावेदनातः शब्दं कुर्वन्निति यावत् । शारीरशब्दस्य शरीरसंबन्धिमात्रवाचकस्य प्रा-तिशयत्वात्कुतो भेदधीरित्याशङ्क्य रूढिर्बलीयस्त्वन्यायेनाह—**तत्रेत्यादिना** । भेदोक्तिफलमाह—**तस्मादिति** । पूर्वपक्षबीजमनु-

मेश्वर एवात्र विवक्षित इति गम्यते । यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति । अत्र ब्रूमः—उपक्रमे तावत् 'योऽयं विज्ञानमयः प्राणेषु' इति न संसारिस्वरूपं विवक्षितं किं तर्ह्यनूद्य संसारिस्वरूपं परेण ब्रह्मणास्यैकतां विवक्षति । यतो 'ध्यायतीव लेलायतीव' इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते । तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति । योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः । यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षति, किं तर्ह्यवस्थारहितत्वमसंसारित्वं च । कथमेतदवगम्यते । यत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति पदे पदे पृच्छति । यच्च 'अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' (बृ० ४।३।१४,१५) इति पदे पदे प्रतिवक्ति । 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्य भवति' (बृ० ४।३।२२) इति च । तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् । यदस्मिन्वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्वभावप्रतिषेधनाश्च भवन्ति । 'सर्वस्य वशी सर्वस्येशानः

---

रत्नप्रभाव्याख्या

ध्यायतीव चलन्त्यां चलतीव । वस्तुतः सर्वविक्रियाशून्य इत्युक्तेर्न संसारिणि तात्पर्यमित्याह—**यत इति** । उपक्रमवदुपसंहारवाक्येऽप्यैक्यं विवक्षितमित्याह—**तथेति** । व्याचष्टे—**योऽयमिति** । अवस्थोपन्यासस्य त्वमर्थशुद्धिद्वारैक्यपरत्वान्न जीवलिङ्गत्वमित्याह—**यतो न बुद्धान्तेति** । प्रश्नोत्तराभ्यामसंसारित्वं गम्यत इत्याह—**यदत ऊर्ध्वमिति** । कामादिविवेकानन्तरमित्यर्थः । **भवतीति चेति** । यद्यस्माद्वक्ति तस्मादवगम्यत इति योजना । तेनावस्थाधर्मेणानन्वागतोऽस्पृष्टो भवति, असङ्गत्वात् । सुषुप्तावप्यात्मतत्त्वं पुण्यपापाभ्यामस्पृष्टं भवति । हि यस्मादात्मा सुषुप्तौ सर्वशोकातीतः तस्माद्धृदयस्यैव सर्वे शोका इति श्रुत्यर्थः ॥ ४२ ॥ वाक्यस्य ब्रह्मात्मैक्यपरत्वे हेत्वन्तरमाह—**पत्यादीति** । सूत्रं व्याचष्टे—**इतश्चेति** । वशी

भामतीव्याख्या

वसनेष्वनुवाद्यतयाऽवमर्श उपपद्यते । एवं च महत्त्वं चाजत्वं च सर्वगतस्य नित्यस्यात्मनः संभवानापेक्षिकं कल्पयिष्यते । **यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासादिति** । नानेनावस्थावत्त्वं विवक्ष्यते । अपि त्ववस्थानामुपजनापायधर्मकत्वेन तदतिरिक्तमवस्थारहितं परमात्मानं विवक्षति, उपरितनवाक्यसंदर्भालोचनादिति ॥ ४२ ॥ **पत्यादिशब्देभ्यः । सर्वस्य वशी** । वशः सामर्थ्यं सर्वस्य जगतः प्रभवत्ययम्, व्यूहावस्थानसमर्थ इति । अत एव सर्वस्येशानः, सामर्थ्येन ह्ययमुक्तेन सर्वस्येष्टे, तदिच्छानु-

आनन्दगिरीयव्याख्या

दूषयति—**यदुक्तमिति** । उपक्रमस्य संसार्यर्थत्वं निरस्यति—**उपक्रम इति** । तस्य प्रश्नद्वारा विषयमाह—**किमिति** । अनुवादमात्रमेवात्रेष्टं किं न स्यादित्याशङ्क्याह—**यत इति** । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव चलन्त्यां चलतीव । वस्तुतो न ध्यायति न चलतीत्यर्थः । उपसंहारानुसारेणोपक्रमस्यैकस्मिन्वाक्ये नेयत्वात्तस्य संसार्यर्थत्वादुपक्रमस्य तदर्थतेत्याशङ्क्याह—**तथेति** । तस्य परमार्थत्वं वाक्यार्थोक्त्या वक्ति—**योऽयमिति** । परामर्शस्य संसारिगामित्वमुक्तमनूद्य पूर्वापरविरोधेन प्रत्याह—**यस्त्विति** । बुद्धान्तो जागरितम् । संसारिस्वरूपबुद्धेर्वाक्याननुगुणत्वे हेतुमाह—**यत इति** । अवस्थावत्त्वेन संसारित्वे दृष्टेऽपि तद्राहित्यमभिप्रेतमित्यत्र नियामकं पृच्छति—**कथमिति** । एकस्मिन्वाक्ये प्रसिद्धाप्रसिद्धयोर्लिङ्गेषु प्रसिद्धार्थानुवादेनाप्रसिद्धार्थ एव प्रतिपाद्यो वाक्यस्यापूर्वार्थत्वादेति न्यायेन जीवलिङ्गस्तदनुवादेन तस्य ब्रह्मता वाक्येनोच्यतेऽन्यथा प्रश्नायोगादित्याह—**यदिति** । अतः कामादिविवेकानन्तरं विमोक्षाय तदौपयिकसाक्षात्कारायैव ब्रूहीति पुनः पुना राज्ञा यस्मात्पृच्छति तस्मात्प्रश्नसामर्थ्यात्प्रतीचो ब्रह्मता प्रतिपाद्येत्यर्थः । न केवलं प्रश्नसामर्थ्यादेवम्, उत्तरसामर्थ्यादपीत्याह—**यच्चेति** । तेन जाग्रद्भोगादिनानन्वागतोऽस्पृष्टो भवति, असङ्गत्वादिति प्रत्युक्तेरित्यर्थः । प्रतिवचनान्तरं दर्शयति—**अनन्वागतमिति** । आत्मतत्त्वं पुण्यपापाभ्यामनाघ्रातमिति यावत् । तदा सुप्तौ हृदयस्य बुद्धेः संबन्धिनः शोकान्कामादीनशेषानतिक्रान्तो भवतीत्याह । **तीर्णो हीति** । अनुवादमात्रस्य प्रश्नप्रत्युक्तिभ्यामयोगे फलितमाह—**तस्मादिति** ॥ ४२ ॥ वाक्यस्यासंसारिपरत्वे हेत्वन्तरमाह—**पत्यादीति** । सूत्रे हेत्वन्तरद्योतिचकाराभावात्तदविषयत्वमाशङ्क्य व्याचष्टे—**इतश्चेति** । तत्र हेतुभावं योजयति—**यदिति** । तत्रासंसारिविषयं शब्दजातमुदाहरति—**सर्वस्येति** । स्वाधीनं सर्वमपि नियन्तुं शक्तिरस्तीति वक्तुं द्वितीयं विशेषणम् ।

सर्वस्याधिपतिः' इत्येवंजातीयका असंसारिस्वभावप्रतिपादनपराः । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इत्येवंजातीयकाः संसारिस्वभावप्रतिषेधनाः । तस्मादसंसारी परमेश्वर इहोक्त इत्यवगम्यते ॥ ४३ ॥ इति श्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

रत्नप्रभाव्याख्या

स्वतन्त्रः । अपराधीन इति यावत् । ईशानो नियमनशक्तिमान् । शक्तेः कार्यमाधिपत्यमिति भेदः । तस्माच्छोधितत्वमर्थे पष्ठाध्यायसमन्वय इति सिद्धम् ॥४३॥ इति श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्याये तृतीयः पादः ॥३॥

भामतीव्याख्या

विधानाज्जगतः । अत एव सर्वस्याधिपतिः सर्वस्य नियन्ता । अन्तर्यामीति यावत् । किंच स एवंभूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना कर्मणा भूयानुत्कृष्टो भवतीत्येवमाद्याः श्रुतयोऽसंसारिणं परमात्मानमेव प्रतिपादयन्ति । तस्माज्जीवात्मानं प्रमाणान्तरसिद्धमनूद्य तस्य ब्रह्मभावप्रतिपादनपरो 'योऽयं विज्ञानमयः' इत्यादिवाक्यसंदर्भ इति सिद्धम् ॥ ४३ ॥ इति श्रीमद्वाचस्पतिमिश्रविरचितशारीरकभगवत्पादभाष्यविभागे भामत्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

आनन्दगिरीयव्याख्या

स्वाधीनं स्वनियम्यं च सर्वमधिष्ठाय पालयतीति वक्तुं तृतीयम् । संसारिस्वभावनिषेधकं शब्दजातमादत्ते—स नेति । श्रुतिसिद्धमर्थमुपसंहरति—तस्मादिति । निर्विशेषप्रचुराणां वाक्यानां सिद्धोऽन्वयो ब्रह्मणीति पादार्थमुपसंहरति—इत्यवगम्यत इति ॥ ४३ ॥ इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकन्यायनिर्णये प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

॥ इति प्रथमाध्यायस्य ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिसमन्वयाख्यस्तृतीयः पादः ॥



## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥




वायुर्नित्यो जायते वा छान्दोग्येऽजन्मकीर्तनात् ॥ सैषाऽनस्तमिता देवतेत्युक्तेर्न च जायते ॥ १ ॥
श्रुत्यन्तरोपसंहाराद्गौण्यनस्तमयश्रुतिः ॥ वियद्वज्जायते वायुः स्वरूपं ब्रह्म कारणम् ॥ २ ॥

अतिदेशोऽयम् । एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः । तत्राप्येते यथा योगं पक्षा रचयितव्याः । न वायुरुत्पद्यते छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः । अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरण आम्नानम् 'आकाशाद्वायुः' (तै० २।१) इति पक्षान्तरम् । ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिरसंभवादित्यपरोऽभिप्रायः । असंभवश्च 'सैषाऽनस्तमिता देवता यद्वायुः' (बृ० १।५।२२) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणाच्च । प्रतिज्ञानुपरोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः । अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः । अग्न्यादीनामिव वायोरस्तमयाभावात् । कृतप्रतिविधानं चामृतत्वादिश्रवणम् । ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु

---

### रत्नप्रभाव्याख्या

॥ ७ ॥ **एतेन मातरिश्वा व्याख्यातः** । अतिदेशत्वान्न पृथक्संगत्याद्यपेक्षा । 'तत्तेजोऽसृजत' इति श्रुतेः 'आकाशाद्वायुः' इति श्रुत्या विरोधोऽस्ति न वेति एकवाक्यत्वभावाभावाभ्यां संशये गौणपक्षपूर्वपक्षसिद्धान्तपक्षानतिदिशति—**तत्रापीत्यादिना** । पूर्वत्र श्रुत्यविशेषानन्तर्यं तेजसः स्थापितं, तत्र वायुतेजसोस्तुल्यवदानन्तर्ये वायोरग्निरिति क्रमश्रुतिबाधात्पौर्वापर्ये तेजःप्राथम्यभङ्गान्नैकवाक्यतेति पूर्वपक्षे गौणवाद्यभिप्रायमाह—**ततश्चेति** । अस्तमयप्रतिषेधो मुख्योत्पत्त्यसंभवे लिङ्गम् । 'वायुश्चान्तरिक्षं चैतदमृतम्' इति तस्यैव लिङ्गस्याभ्यासः । 'वायुरेव व्यष्टिः समष्टिश्च' इति सर्वात्मत्वलिङ्गान्तरमादिपदार्थः । तथा संवर्गविद्यायां 'वायुर्ह्येवैतान्सर्वानग्न्यादीन्संहरति' इति शब्दमात्रेणैश्वर्यश्रवणं लिङ्गान्तरं ग्राह्यम् । एतैर्लिङ्गैर्वायुरनाद्यनन्त इति प्रतीतेरुत्पत्तिर्गौणीत्यविरोधः श्रुत्योरिति प्राप्ते प्रतिपिपादयिषितप्रतिज्ञाश्रुतेर्बलीयस्त्वात्तत्साधकानां तत्र तत्र वायूत्पत्तिवाक्यानां भूयस्त्वादुक्तविभक्तत्वादिलिङ्गानुग्रहाच्च मुख्यैव वायोरुत्पत्तिः, तथाचाकाशं वायुं च सृष्ट्वा तेजोऽसृजतेति श्रुत्योरेकवाक्यतया ब्रह्मणि समन्वयः । लिङ्गानि तूपास्यवायुस्तावकत्वादापेक्षिकतया व्याख्येयानीति मुख्यसिद्धान्तमाह—**प्रतिज्ञेत्यादिना** । कृतं प्रतिविधानमापेक्षिकत्वेन समाधानं यस्य तत्तथा । अधिकरणारम्भमाक्षिप्योक्तामधिकाशङ्कामाह—**नन्वित्या-**

### भामतीव्याख्या

तार्थम् ॥ ७ ॥ **एतेन मातरिश्वा व्याख्यातः** । यद्यभ्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दूरत एवोपचरितत्वं, हन्त भोः पवनस्य नित्यत्वप्रसङ्गः । 'वायुश्चान्तरिक्षमेतदमृतम्' इति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य विशेषेणाह—**सैषाऽनस्तमिता देवता यद्वायुरिति** । तस्मादभ्यासान्नापेक्षिकं वायोरमृतत्वमपि त्वौत्पत्तिकमेवेति प्राप्तम् । तदिदमुक्तं भाष्यकृता—**अस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्चेति** । चेन समुच्चयार्थेनाभ्यासो दर्शितः । एवं प्राप्त उच्यते—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, प्रतिज्ञा-

### आनन्दगिरीयव्याख्या

सिध्यतीत्यधिकरणार्थं निगमयति—**इति सिद्धमिति** ॥ ७ ॥ वियदुत्पत्तिमुक्त्वा पवनोत्पत्तिमतिदेशेन साधयति—**एतेनेति** । अत्र पूर्ववत्पादादिसंगतयो न पृथग्वक्तव्या भवन्तीत्यभिप्रेत्य तात्पर्यमाह—**अतिदेशोऽयमिति** । फलभेदमपि पूर्ववदुपेत्य सूत्राक्षरार्थं कथयति—**एतेनेति** । वियदुत्पत्तिकथनानन्तरं तेजआद्यतिक्रम्य वायोरुत्पत्तिमत्त्वेन व्याख्याने कारणमाह—**वियदाश्रय इति** । 'तत्तेजोऽसृजत' इति श्रुतिः 'आकाशाद्वायुः' इति श्रुत्या विरुध्यते न वेत्येकवाक्यत्वासंभवसंभवाभ्यां संशये सत्यतिदेशं विशदीकर्तुं तुल्यन्यायत्वमाह—**तत्रापीति** । बहूक्त्वा वियदधिकरणेऽपि पक्षत्रयमस्तीति सूचितं, तदेव पक्षत्रयं संक्षिपन्प्रथमं गौणवादिपक्षमाह—**न वायुरिति** । पूर्वपक्षं संक्षिपति—**अस्ति त्विति** । छान्दोग्ये तेजसः 'तत्तेजोऽसृजत' इति प्रथमजत्वश्रवणात्, तैत्तिरीयके च 'आकाशाद्वायुः' इति वायोस्तेजःसकाशात्पूर्वजत्वश्रुतेरुभयोस्तदनुपपत्त्या मिथोविरोधे श्रुत्योरप्रामाण्यादाकाशद्वारा वायुकारणे ब्रह्मणि समन्वयासिद्धिरित्यर्थः । गौणवादिनोऽभिप्रायं संगृह्णाति—**ततश्चेति** । आकाशवद्वायोरकारणत्वाभावात्कथमसंभवाद्युक्तेत्याशङ्क्याह—**असंभवश्चेति** । दर्शितश्रुत्या वायुनित्यत्वमापेक्षिकमित्याशङ्क्याभ्यस्यमानत्वान्नैवमित्याह—**अमृतत्वादीति** । 'वायुश्चान्तरिक्षं चैतदमृतम्' इति श्रूयते । आदिशब्देन 'वायुरेव व्यष्टिर्वायुः समष्टिः' इत्यभ्यासो गृह्यते । प्रतिज्ञाश्रुतेरनुमानाच्च पवनोत्पत्तेरावश्यकत्वे श्रुत्योरेकवाक्यतया विरोधाभावादाकाशद्वारा वायुकारणे ब्रह्मणि समन्वयः सिध्यतीति सिद्धान्तमाह—**प्रतिज्ञेति** । यत्तु वायोरस्तमयप्रतिषेधादुत्पत्तेरसंभव इति, तत्राह—**अस्तमयेति** । अमृतत्वादिश्रवणं तर्हि कथं, तत्राह—**कृतेति** । प्रतिज्ञावाक्यार्थप्राधान्यात्तदुपपादकवायूत्पत्तिप्रतिपादकवाक्यानां च बहुत्वान्मुख्यभूयस्त्वाभ्यां बलीयस्त्वादमृतत्वास्तमयनिषेधावापेक्षिकत्वेन नेयौ । अभ्यासस्तूपास्यादरार्थत्वान्न वायोरमृतत्वमात्यन्तिकं गमयति । 'अप पुनर्मृत्युं जयति' इत्यपमृत्युजयस्यैव वाक्यशेषे श्रवणादिति भावः । अधिकाशङ्काभावेनातिदेशमाक्षिपति—**नन्विति** ।

किमतिदेशेनासति विशेष इति । उच्यते—सत्यमेवमेतत् । तथापि मन्दधियां शब्दमात्रकृता-शङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते । संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात् । अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥




सद्ब्रह्म जायते नो वा कारणत्वेन जायते ॥ यत्कारणं जायते तद्वियद्वाय्वादयो यथा ॥ १ ॥
असतोऽकारणत्वेन खादीनां सत उद्भवात् ॥ व्याप्तेरजादिवाक्येन बाधात्सन्नैव जायते ॥ २ ॥

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः । तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत । तामाशङ्कामपनेतुमिदं सूत्रम्—'असंभ-

रत्नप्रभाव्याख्या

दिना । 'वायुर्ह्येवैतान्सर्वान्संवृङ्क्ते' इत्यादिशब्दमात्रं शङ्कामूलं नार्थ इति द्योतनार्थं मात्रपदम् । तामेव शङ्कामाह—**संवर्गेति** । व्यष्टिसमष्ट्युपास्तिः 'वायुं दिशां वत्सं वेद' इत्युपास्तिश्चादिशब्दार्थः ॥ ८ ॥ **असंभवस्तु सतोऽनुपपत्तेः ।** 'अनाद्यनन्तं महतः परं ध्रुवम्', 'न चास्य कश्चिज्जनिता' इत्यादि ब्रह्मानादित्वश्रुतीनां 'त्वं जातो भवसि विश्वतोमुखः' इत्युत्पत्तिश्रुत्या विरोधोऽस्ति न वेत्येकवाक्यत्वभावाभावाभ्यां संदेहेऽस्ति विरोध इति पूर्वपक्षे यथा वाय्वादेरमृतत्वादिकमुत्पत्तिश्रुतिबलादापेक्षिकं तथा ब्रह्मानादित्वमापेक्षिकमिति दृष्टान्तसंगत्या एकदेशिपक्षं प्रापयति—**वियदिति** । ब्रह्म कुतश्चिज्जायते, कारणत्वात्, आकाशवदित्यनुमानानुग्रहाज्जन्मश्रुतिर्बलीयसीत्याह—**तथेति** । न चानादिकारणाभावेनानवस्था बीजाङ्कुरवदनादित्वोपपत्तेः । तथाच दीपाद्दीपवद्ब्रह्मान्तराद्ब्रह्मान्तरोत्पत्तिः, उत्पत्तिश्रुत्या चानादित्वश्रुतिर्नेयेत्यनाद्यनन्तब्रह्मसमन्वयासिद्धिरिति प्राप्ते मुख्यसिद्धान्तमाह—**तामिति** । ब्रह्म न जायते, कारणशून्यत्वात्, नरविषाणवत्, व्यतिरेकेण घटवच्चेत्यनुमानानुग्रहाद्विपक्षे चाकारणककार्यवादप्रसङ्गाद्ब्रह्मानादित्वश्रुतयो बलीयस्य इति कारणत्वलिङ्गबाधाज्जन्मश्रुतिः कार्यभेदेन व्या-

भामतीव्याख्या

क्यार्थस्य प्राधान्यात्, तदुपपादनार्थत्वाच्च वाक्यान्तराणां, तेषामपि चाद्वैतप्रतिपादकानां मातरिश्वोत्पत्तिक्रमप्रतिपादकानां बहुलमुपलब्धेः, मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वात्, एतदनुरोधेनामृतत्वास्तमयप्रतिषेधावापेक्षिकत्वेन नेतव्याविति । भूयसीः श्रुतीरपेक्ष्य द्वे अपि श्रुती शब्दमात्रमुक्ते ॥ ८ ॥ **असंभवस्तु सतोऽनुपपत्तेः** । ननु 'न चास्य कश्चिज्जनिता' इत्यात्मनः सतोऽकारणत्वश्रुतेः कथमुत्पत्त्याशङ्का । नच वचनमदृष्ट्वा पूर्वः पक्ष इति युक्तम्, अधीतवेदस्य ब्रह्मजिज्ञासाधिकारादवदर्शनानुपपत्तेरत आह—**वियत्पवनयोरिति** । यथाहि वियत्पवनयोरमृतत्वानस्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते । एवमकारणत्वश्रुतिरात्मनोऽग्निविस्फुलिङ्गदृष्टान्तश्रुतिविरोधात्प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या । न चात्मनः कारणवत्त्वेऽनवस्था लोहगन्धितामावहत्यनादित्वात् कार्यकारणपरम्पराया इति भावः । **तथा विकारेभ्य इति** । प्रमाणान्तरविरोधो दर्शितः । एवं प्राप्त उच्यते—सदेकस्वभावस्योत्पत्त्यसंभवः । कुतः **अनुपपत्तेः** । सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम् । उक्तमेतद्वि-

आनन्दगिरीयव्याख्या

अधिकां शङ्कां दर्शयन्नुत्तरमाह—**उच्यत इति** । यदुक्तमसति विशेषे नातिदेशोऽर्थवानिति, तदङ्गीकरोति—**सत्यमिति** । तर्हि पूर्वेणैवाधिकरणेन गतत्वादिदमधिकरणमनारभ्यमिति, तत्राह—**तथापीति** । शब्दानुरोधिन्यपि शङ्का न वस्त्वनुरोधिनीति मात्रशब्दार्थः । शब्दमात्रकृतामाशङ्कामेव दर्शयति—**संवर्गेति** । 'स यो वायुं दिशां वत्सं वेद' इत्यादिविद्यासंग्रहार्थमादिपदम् । द्वितीयमादिपदममृतत्वश्रवणमभ्यासं च संगृह्णाति । अमृतत्वादिश्रवणस्य कृतप्रतिविधित्वात्कथं तद्वशादाशङ्केति, तत्राह—**कस्यचिदिति** । प्रतिज्ञानुरोधादिना वायोर्नित्यत्वानुपपत्तेरुक्तत्वात्तत्कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहर्तुमितिशब्दः ॥ ८ ॥ ब्रह्मणो वियत्पवनकारणत्वं पूर्वाधिकरणयोरुक्तम् । इदानीमग्निरेव विस्फुलिङ्गोऽग्न्यन्तरोत्पत्तौ तथा ब्रह्मान्तराद्ब्रह्मोत्पद्यतामित्याशङ्क्याह—**असंभवस्त्विति** । 'न चास्य कश्चिज्जनिता' इत्यादेर्ब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य 'त्वं जातो भवसि' इत्यादिश्रुत्या विरोधोऽस्त्युत नेत्येकवाक्यत्वासंभवसंभवाभ्यां संदेहे पूर्वपक्षमाह—**वियदिति** । दर्शितश्रुतिविरोधपरिहारद्वारा समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे विरोधादप्रामाण्ये नित्यसिद्धे ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते वाक्यैक्यादविरोधात्प्रामाण्ये तत्र तत्सिद्धिः । संभावनामात्रादर्थसिद्धावतिप्रसङ्गात्प्रमाणमेव साधकं वक्तव्यमित्याशङ्क्याह—**तथेति** । ब्रह्म कस्यचित्कार्यं, कारणत्वात्, आकाशवत् । न चाजत्वश्रुतिविरोधः, अनुमानानुगृहीतजन्मश्रुत्या तस्या विरोधात् । न चानवस्थानुगृहीताजत्वश्रुतिर्बलवती, कार्यकारणपरंपराया बीजादिवदनादित्वादन्धपरंपरया तदनुगृहीतत्वेऽपि तत्रानुमानानुगृहीतत्वेनाविशेषादस्ति विरोधः श्रुत्योरिति भावः । ब्रह्म न कार्यं, कारणशून्यत्वात् । नरविषाणवदित्यनुमानानुगृहीताजत्वश्रुत्या ब्रह्मणो नित्यत्वाज्जन्मश्रुतेरौपाधिकजन्मविषयत्वेनाविरोधान्नित्यसिद्धे ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तमाह—**तामिति** ।

वस्तु' इति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या । कस्मात् । अनुपपत्तेः । सन्मात्रं हि ब्रह्म । न तस्य सन्मात्रादेवोत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः । नापि सद्विशेषाद्दृष्टविपर्ययात् । सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यम् । नाप्यसतो निरात्मकत्वात् । 'कथमसतः सज्जायेत' ( छा० ८।७।१ ) इति चाक्षेपश्रवणात् । 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' ( श्वे० ६।९ ) इति च ब्रह्मणो जनयितारं वारयति । वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता न तु ब्रह्मणः सास्तीति वैषम्यम् । नच विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात् । या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः ॥ ९ ॥

## तेजोऽतस्तथाह्याह ॥ १० ॥




ब्रह्मणो जायते वह्निर्वायोर्वा ब्रह्मसंयुतात् ॥ तत्तेजोऽसृजतेत्युक्तेर्ब्रह्मणो जायतेऽनलः ॥ १ ॥
वायोरग्निरिति श्रुत्या पूर्वश्रुत्येकवाक्यतः ॥ ब्रह्मणो वायुरूपत्वमापन्नादग्निसंभवः ॥ २ ॥

---

रत्नप्रभाव्याख्या

द्ध्येयेत्यनाद्यनन्तब्रह्मसमन्वयसिद्धिरिति सिद्धान्तफलम् । नच हेत्वसिद्धिः, कारणस्यानिरूपणात् । तथाहि—किं सन्मात्रस्य ब्रह्मणः सन्मात्रमेव सामान्यं कारणं सद्विशेषो वा असद्वा । न त्रेधापीत्याह—**सन्मात्रं हीत्यादिना** । दीपस्तु दीपान्तरे निमित्तमित्यनुदाहरणम् । वियत्पवनयोर्ब्रह्मणश्च विभक्तत्वाविभक्तत्वाभ्यां कारणभावाभावाभ्यां च वैषम्यम् । कारणत्वलिङ्गस्याप्रामाणिकानवस्था । तर्केणापि बाधमाह—**नच विकारेभ्य इत्यादिना** । कारणस्यानभ्युपगमे यदृच्छावादप्रसङ्गः, अनादिकारणानभ्युपगमेऽनवस्थाप्रसङ्गः, तदभ्युपगमे ब्रह्मवादप्रसङ्गः, कारणान्तरस्य प्रधानादेर्निरासादिति भावः ॥ ९ ॥ —**तेजोऽतस्तथाह्याह** । 'तत्तेजोऽसृजत' इति 'वायोरग्निः' इति च श्रुत्योर्विरोधोऽस्ति न वेति संदेहे सामान्यात्सामा-

भामतीव्याख्या

काराः सत्त्वेनानुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयाः, सैकाल्यावच्छेदादिति । न चात्मा तादृशस्तस्य श्रुतेरनुभवाद्वा वर्तमानैकस्वभावत्वेन प्रसिद्धेस्तदिदमाह—**सन्मात्रं हि ब्रह्मेति** । एतदुक्तं भवति—यत्स्वभावाद्विचलति तदनिर्वचनीयं निर्वचनीयोपादानं युक्तं, न तु विपर्ययः । यथा रज्जूपादानः सर्पो न तु सर्पोपादाना रज्जुरिति । ययोस्तु स्वभावादप्रच्युतिस्तयोर्निर्वचनीययोर्नोपादेयोपादानभावः, यथा रज्जुशुक्तिकयोरिति । नच निरधिष्ठानो विभ्रम इत्याह—**नाप्यसत इति** । नच निरधिष्ठानभ्रमपरंपरानादितेत्याह—**मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गादिति** । पारमार्थिको हि कार्यकारणभावोऽनादिर्नानवस्थया दुष्यति । समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे, तदत्र न प्रस्मर्तव्यम् । तस्मात्सदधिष्ठानविभ्रमसमर्थनाऽनादित्वेनोचितेत्यर्थः । अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकरूपापेक्षया नेतव्या । शेषमतिरोहितार्थम् । ये तु गुणादिकालोत्पत्तिविषयमिदमधिकरणं वर्णयांचक्रुस्तैः 'सतोऽनुपपत्तेः' इति क्लेशेन व्याख्येयम् । अविरोधसमर्थनप्रस्तावे चास्य संगतिर्वक्तव्या । अवादिवद्दिक्कालादीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात् । तदास्तां तावत् ॥ ९ ॥ **तेजोऽतस्तथाह्याह** । यद्यपि

आनन्दगिरीयव्याख्या

तत्र प्रतिज्ञाभागं विभजते—**न खल्विति** । कारणशून्यत्वं विशदीकुर्वन्प्रश्नपूर्वकं सौत्रं हेतुमादत्ते—**कस्मादिति** । ब्रह्मणो हि कार्यत्वं ब्रुवता सन्मात्रं वा सद्विशेषो वा तस्यासद्वा कारणमिति वक्तव्यम् । नाद्य इत्याह—**सन्मात्रं हीति** । न द्वितीय इत्याह—**नापीति** । दृष्टविपर्ययमेव साधयति—**सामान्यादिति** । न तृतीय इत्याह—**नापीति** । श्रुतिविरोधाच्चायं पक्षो न संभवतीत्याह—**कथमिति** । युक्त्या हेतुमुपपाद्य श्रुत्योपपादयति—**स कारणमिति** । यदुक्तं वियत्पवनयोरसंभाव्यमानजन्मनोरपीत्यादि, तत्राह—**वियदिति** । विभक्तत्वमुत्पत्त्यावुपपत्तिः । ब्रह्मण्यपि तुल्यं विभक्तत्वमित्याशङ्क्य श्रुतत्वविरोधान्मैवमित्याह—**न** चेति । यत्तु तथेत्याद्यनुमानमुक्तं तद्दूषयति—**नचेति** । तस्य कार्यत्वं वदता मूलप्रकृतिरुपगम्यते न वेति विकल्प्य द्वितीयं प्रत्याह—**मूलेति** । नचानादित्वान्नानवस्था, ब्रह्मणोऽपि कार्यत्वे तत्तदुपादाने परंपरायौगपद्ये प्रलयाभावप्रसङ्गादिति भावः । प्रथमे तुल्यबाधापत्तिरित्याशयेनाह—**या मूलेति** । एवं कार्यत्वानुमानस्याभासत्वाज्जन्मश्रुतेश्चौपाधिकविषयत्वादकार्यत्वानुमानानुगृहीताजत्वश्रुतेर्बलीयस्त्वादितरस्यास्तदनुरोधित्वादितरेतराविरोधान्नित्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः संभवतीत्युपसंहरति—**इत्यविरोध इति** ॥ ९ ॥ अध्यस्तस्याधिष्ठानत्वायोगाच्च कुतश्चिदपि ब्रह्मणो जन्मेत्युक्तम् । इदानीं वायोरपि तर्हि कार्यत्वेनाध्यस्तत्वात्तेजसस्ततो जन्मानुपपत्तेर्ब्रह्मण एव तज्जन्मेति प्रत्यवस्थाने प्रत्याह—**तेजोऽत इति** । तैत्तिरीये छान्दोग्ये च जायमानत्वेन श्रुतं तेजो विषयः । तत्किं ब्रह्मकार्यं किं

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वं, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद्ब्रह्मयोनिकं तेज इति । कुतः । 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात् । सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात् । 'तज्जलान्' ( छा० ८।७।१ ) इति चाविशेषश्रुतेः 'एतस्माज्जायते प्राणः' ( मुण्ड० २।१।३ ) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात् । तैत्तिरीयके च 'स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच' ( तै० ३।६।१ ) इत्यविशेषश्रवणात् । तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः । वायोरनन्तरमग्निः संभूत इति । एवं प्राप्त उच्यते—तेजोऽतो मातरिश्वनो जायत इति । कस्मात् । तथाह्याह—'वायोरग्निः' इति । अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता स्यात् । ननु क्रमार्थैषा भविष्यतीत्युक्तम् । नेति ब्रूमः—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१।१ ) इति पुरस्तात्संभवत्यपादानस्यात्मनः

---

**रत्नप्रभाव्याख्या**

न्योत्पत्त्यसंभवेऽपि ब्रह्मवाय्वोः सामान्ययोस्तेजोरूपविशेषोपादानत्वसंभवात्तुल्यबलतयास्ति विरोध इति प्रत्युदाहरणेन पूर्वपक्षः । सर्वत्राध्यायसमाप्तेरेकवाक्यत्वासंभवासंभवौ संशयबीजम् । पूर्वपक्षे श्रुतीनां विरोधादप्रामाण्यं फलं, सिद्धान्ते प्रामाण्यमित्युक्तं न विस्मर्तव्यम् । एवं पूर्वपक्षे कार्यमात्रस्य विवर्तत्वात्कल्पितस्य वायोस्तेजःकल्पनाधिष्ठानत्वायोगाद्ब्रह्मैव तेजस उपादानं सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीनां भूयस्त्वाच्च तदनुरोधाद्वायोरिति क्रमार्था पञ्चमीत्यविरोध इत्येकदेशिसिद्धान्तं प्रापयति—**प्राप्तं तावद्ब्रह्मयोनिकं तेज इत्यादिना।** श्रुतीनां विरोधमात्रोपन्यासेन पूर्वपक्षः, अपसिद्धान्तेनाविरोधात्तावदेकदेशिपक्ष इति ज्ञेयम् । तदुभयमपि मुख्यसिद्धान्तापेक्षया पूर्वपक्षत्वेन व्यवह्रियते । सिद्धान्तयति—**एवं प्राप्त इति । कदर्थिता ।** बाधितार्थेति यावत् । वायोस्तेजःप्रकृतित्वं पञ्चमीश्रुत्या निर्धारितं, नच कल्पितस्योपादानत्वासंभवः, अधिष्ठानत्वासंभवेऽपि मृदादिवत्परिणामित्वसंभवात्, स्वतस्तु ब्रह्मणश्छान्दोग्ये स्रष्टृत्वमात्रं श्रुतं नोपादानत्वम् । नच 'बहु स्याम्' इति कार्याभेदेक्षणलिङ्गादुपादानत्वसिद्धिः, लिङ्गाच्छ्रुतेर्बलीयस्त्वेन श्रुत्यविरोधेन लिङ्गस्य नेयत्वात् । नयनं चेत्थं वायोर्ब्रह्मानन्यत्वाद्वायुज-

**भामतीव्याख्या**

'वायोरग्निः' इत्यपादानपञ्चमी 'कारकविभक्तिरुपपदविभक्तेर्बलीयसी' इति नेयमानन्तर्यपरा युक्ता, तथापि बहुश्रुतिविरोधेन दुर्बलाप्युपपदविभक्तिरेवात्रोचिता । ततश्चानन्तर्यदर्शनपरेयं वायोरग्निरिति श्रुतिः । नच साक्षाद्ब्रह्मजत्वसंभवे तद्व्यवधानेन तज्जत्वं परंपरयाश्रयितुं युक्तम् । वाजपेयस्य पशुयूपवदिति प्राप्तम् । एवं प्राप्ते उच्यते—युक्तं पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वात्तत्र साक्षाद्वाजपेयासंबन्धे

**आनन्दगिरीयव्याख्या**

वा वायुकार्यमिति संशयस्य बीजं दर्शयन्पूर्वपक्षमाह—**छान्दोग्य इति ।** तत्रेति शाखाद्वयोक्तिः । नच 'तत्तेजोऽसृजत' इति श्रुतेर्निमित्तविषयत्वात् 'वायोरग्निः' इति श्रुतेरुपादानविषयत्वादविप्रतिपत्तिः । 'बहु स्याम्' इति बहुभवनाशंसनलिङ्गेनोपादानत्वावगमादिति भावः । अत्रापि श्रुत्योर्विरोधनिराकरणद्वारा वायुभावमापन्ने ब्रह्मणि तेजोयोनौ समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुत्योरनेकवाक्यत्वेन विरोधादप्रामाण्ये तेजोहेतौ ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते तदेकवाक्यत्वेनाविरोधात्प्रामाण्ये तत्र तत्सिद्धिः । सत्यां विप्रतिपत्तौ विशेषकारणमन्तरेणान्यतरनिश्चयासिद्धिरिति शङ्कते—**कुत इति ।** उपक्रान्तस्य सन्मात्रस्यैकमेवाद्वितीयमित्यवधारिताद्वितीयत्वनिर्धारणाय 'तत्तेजोऽसृजत' इति वचनादुपादानादेवोपादेयस्याव्यतिरेकादुपादानत्वमेव तेजः प्रति ब्रह्मणो विवक्षितमित्याह—**सदेवेति ।** किंचाथेऽधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतोत्पत्तिश्रुतेर्ब्रह्मजत्वं वियतो वर्णितं, तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेष्टव्यमित्याह—**सर्वविज्ञानेति ।** इतश्च ब्रह्मजत्वं तेजसो युक्तमित्याह—**तज्जलानिति चेति ।** अथर्वणश्रुत्या च तेजसो ब्रह्मजत्वसिद्धिरित्याह—**एतस्मादिति ।** तथापि तैत्तिरीयश्रुत्यालोचनायां न ब्रह्मजत्वं तेजसः स्यादित्याह—**तैत्तिरीयके चेति ।** ननु 'वायोरग्निः' इति श्रुतेर्वायुद्वारा तेजसो ब्रह्मजत्वेऽपि दर्शितश्रुतयो न विरुध्यन्तेऽन्यथा वायोरग्निरिति श्रुतिर्बाध्येत, तत्राह—**तस्मादिति ।** यद्यपि वायोरग्निरित्यपादानपञ्चमी कारकविभक्तिर्वायोरनन्तरमित्युपपदविभक्तेर्बलीयसी तथापि बहुश्रुतिविरोधाद्दुर्बलापि सैवोचितेति मत्वा क्रमोपदेशमेव विशदयति—**वायोरिति ।** यदि पुनरित्थमस्याः श्रुतेरर्थो नाश्रीयेत तर्हि विरुद्धार्थैव श्रुतिरियं पूर्वोक्तश्रुतिभिरिति पूर्वपक्षमनुभाष्य सिद्धान्तमाह—**एवं प्राप्त इति ।** तत्र प्रश्नपूर्वकं हेतुमाह—**कस्मादिति ।** हेतुमेव व्यतिरेकद्वारा विवृणोति—**अव्यवहिते हीति ।** कदर्थिता पीडिता बाधितेति यावत् । तेजसो वायुयोनित्वं पञ्चमीश्रुत्या निर्धारितं, ब्रह्मयोनित्वं तु तस्य बहुभवनाशंसनलिङ्गादवगतम्, अतः श्रुत्या लिङ्गं बाधित्वा वायुयोनित्वं मुख्यमादाय लिङ्गं परंपरया ब्रह्मयोनित्वविषयं विवक्षमाणेन न्यायेन ब्रह्मवायुसमुच्चयमेवाभ्युपगमयतीति भावः । पञ्चमीश्रुतेरुक्तां गतिं पूर्ववादी स्मारयति—**नन्विति ।** न क्रमार्थत्वं पञ्चम्या युक्तं, पूर्वोत्तरवाक्योपादानेनापादानार्थत्वप्रतीतेरिति परिहरति—**नेतीति ।** उत्तरवाक्यमिदमित्युच्यते । इतश्चापादानार्थत्वमेव पञ्चम्या न क्रमार्थत्वमित्याह

पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, परस्तादपि च तदधिकारे 'पृथिव्या ओषधयः' (तै० २।१।१) इत्यपादानपञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्यैवैषेति गम्यते। अपिच वायोरूर्ध्वमग्निः संभूत इति कल्प्य उपपदार्थयोगः क्लृप्तस्तु कारकार्थयोगो वायोरग्निः संभूतः इति। तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति। नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोवगमयति। 'तत्तेजोऽसृजत' इति। न। तस्याः पारम्पर्यजत्वेऽप्यविरोधात्। यदापि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं तेजसो न विरुध्यते। यथा तस्याः शृतं तस्या दधि तस्या आमिक्षेत्यादि। दर्शयति च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' (तै० २।७।१) इति। तथाचेश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः' (भ० गी० १०।४) इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (भ० गी० १०।५) इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते तथापि सर्वस्य भावजातस्य साक्षात्प्रणाड्या वेश्वरवंश्यत्वात्। एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः। तासां सर्वथोपपत्तेः। क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः। प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहितजन्यत्वमित्यविरोधः॥ १०॥

---

रत्नप्रभाव्याख्या

स्यापि तेजसो ब्रह्मप्रकृतिकत्वमविरुद्धमिति सिद्धान्तग्रन्थाशयः। **इहाधिकारादिति**। वायोरग्निः संभूत इति वाक्ये संबन्धादित्यर्थः। तदधिकारे संभूत्यधिकारे। निरपेक्षकारकविभक्तेरुपपदसापेक्षविभक्त्यपेक्षया प्रबलत्वाच्च न क्रमार्था पञ्चमीत्याह—**अपिचेति**। ऊर्ध्वमनन्तरमिति वोपपदं विना पञ्चमीमात्रात्क्रमो न भातीति कल्प्य उपपदार्थयोगः। प्रकृत्याख्यापादानकारकं तु निरपेक्षपञ्चम्या भाति। विशेषतोऽत्र प्रकरणादपादानार्थत्वं पञ्चम्याः क्लृप्तं क्लृप्तेन च कल्प्यं सति विरोधे बाध्यमिति स्थितिरित्यर्थः। पारम्पर्यजत्वमेवाह—**यदापीति**। तस्या धेनोः शृतं तप्तं क्षीरं साक्षात्कार्यं, दध्यादिकं तु पारम्पर्यजमित्यर्थः। दधिसंसृष्टं कठिनक्षीरमामिक्षा। ब्रह्मणो वायुभावे मानमाह—**दर्शयति चेति**। पारम्पर्यजस्यापि तज्जत्वव्यपदेशे स्मृतिमाह—**तथाचेति**। अन्तःकरणादिभ्यो जायमानबुद्ध्यादीनां मत्त एवेत्यवधारणं कथमित्याशङ्क्याह—**यद्यपीत्यादिना**। प्रनाड्या परंपरयेश्वरवंश्यत्वात्तज्जत्वात्परमकारणान्तरनिरासार्थमवधारणं युक्तमिति शेषः। एतत्पदार्थमाह—**तासामिति**। 'तज्जलान्' इत्याद्युक्तश्रुतीनां साक्षात्प्रनाड्या वा ब्रह्मजत्वमात्रेणोपपत्तेरित्यर्थः। अक्रमश्रुतीनां बलवत्क्रमश्रुत्यनुसारेणैकवाक्यता-

भामतीव्याख्या

क्लेशेन परंपराश्रयणम्। इह तु वायोर्ब्रह्मविकारस्यापि ब्रह्मणो वस्तुतोऽनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादानत्वोपपत्तेः कारकविभक्तेर्बलीयस्त्वानुरोधेनोभयथोपपद्यमानाः श्रुतयः कांस्यभोजिन्यायेन नियम्यन्त इति युक्तमिति राद्धान्तः। **'पारम्पर्यजत्वेऽपि'** इति भेदकल्पनाभिप्रायं यतः पारमार्थिकभेदमाह—**वायुभावापन्नं ब्रह्मेति**। **यथा तस्याः शृतम्** इति तु दृष्टान्तः परम्परामात्र-

आनन्दगिरीयव्याख्या

—**अपिचेति**। प्रकरणादुपादानाख्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्य पदार्थान्तरयोगोऽसिद्धो न कल्पयितुं शक्यते। क्लृप्तकल्प्ययोर्मध्ये क्लृप्तस्यैव बलीयस्त्वादित्यर्थः। पञ्चमीश्रुतेरक्रमार्थत्वे फलितमाह—**तस्मादिति**। श्रुतिबलात्तेजसो वायुजत्वे तद्बलादेव ब्रह्मजत्वमपि तस्यास्थेयमतः श्रुत्योर्मिथो विरोधः स्यादिति शङ्कते—**नन्विति**। 'वायोरग्निः' इति साक्षात्तेजसो वायुजत्वमुच्यते, 'तत्तेजोऽसृजत' इति त्वाकाशवायुद्वारा तस्य ब्रह्मजत्वमिति विरोधसमाधिरिति समाधत्ते—**न। तस्या इति**। अविरोधमेव साधयति—**यदापीति**। साक्षात्पारम्पर्याभ्यां कारणत्वे दृष्टान्तमाह—**यथेति**। तस्या धेनोः शृतं तप्तं क्षीरं विवक्षितम्। तदेव दधिसंसृष्टमामिक्षेति भेदः। तत्र क्षीरस्य दध्नि साक्षात्कारणत्वेऽपि गव्यं दधीति प्रयोगो दृष्टस्तथात्रापीत्यर्थः। तर्हि ब्रह्मणो वायुभावापत्तौ किं प्रमाणमित्याशङ्क्याह—**दर्शयति चेति**। पारम्पर्यजस्यापि तज्जत्वव्यपदेशयोग्यत्वे प्रमाणमाह—**तथाचेति**। अन्तःकरणादिभ्यः स्वकारणेभ्यो बुद्ध्यादीनामयशोन्तानामुत्पत्तिदर्शनान्मत्त एवेत्यवधारणमयुक्तमित्याशङ्क्याह—**यद्यपीति**। **प्रणाड्या**। परम्परयेति यावत्। ईश्वरवंश्यत्वात्तद्वंशोद्भवत्वादिदमवधारणस्मरणमिति शेषः। सर्वस्येत्यस्मादर्वाक्तथापीति वक्तव्यम्। पारम्पर्यविषयत्वं 'तत्तेजोऽसृजत' इति श्रुतेरुक्तम्। इदानीम् 'इदं सर्वमसृजत' इत्यादिश्रुतेरपि पारम्पर्यविषयत्वमेषितव्यमित्याह—**एतेनेति**। सर्वस्य साक्षाद्ब्रह्मजत्वाभावे कथं तासामुपपत्तिः, तत्राह—**तासामिति**। सर्वथा साक्षात्परम्परया वा सर्वस्य ब्रह्मजत्वमात्रेणाक्रमवादिनीनां श्रुतीनामुपपत्तेरितरश्रुतिवशात्पारंपर्यमेवाश्रयणीयमित्यर्थः। क्रमश्रुतीनामेवाक्रमश्रुतिवशान्नयनं किं न स्यादित्याशङ्क्याह—**क्रमवदिति**। अन्यथा। पारम्पर्यमन्तरेणेति यावत्। न साक्षात्कारणविषयत्वमिति शेषः। अव्यवधानेन ब्रह्मजत्वाभावे कथं प्रतिज्ञेत्याशङ्क्याह—**प्रतिज्ञापीति**। अक्रमश्रुतीनां क्रमश्रुत्यनुसारित्वेन मिथो विरोधाभावात्तेजसो वियत्पवनद्वारा कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपसंहरति—**इत्यविरोध**

## आपः ॥ ११ ॥




ब्रह्मणोऽपां जन्म किं वा वह्नेर्नाग्नेर्जलोद्भवः ॥ विरुद्धत्वान्नीरजन्म ब्रह्मणः सर्वकारणात् ॥ १ ॥
अग्नेराप इति श्रुत्या ब्रह्मणो वह्न्युपाधिकात् ॥ अपां जनिर्विरोधस्तु सूक्ष्मयोर्नाग्निनीरयोः ॥ २ ॥

'अतस्तथाह्याह' इत्यनुवर्तते । आपोऽतस्तेजसो जायन्ते । कस्मात् । तथाह्याह—'तदपोऽसृजत' इति 'अग्नेरापः' इति च । सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरियामित्याप इति सूत्रयांबभूव ॥ ११ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥




ता अन्नमसृजन्तेति श्रुतमन्नं यवादिकम् ॥ पृथिवी वा यवाद्येव लोकेऽन्नत्वप्रसिद्धितः ॥ १ ॥
भूताधिकारात् कृष्णस्य रूपस्य श्रवणादपि ॥ तथाद्भ्यः पृथिवीत्युक्तेरन्नं पृथ्व्यत्रहेतुतः ॥ २ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' ( छा० ६।२।४ ) इति श्रूयते । तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वौदनाद्युच्यते किं वा पृथिवीति । तत्र

---

### रत्नप्रभाव्याख्या

द्वियद्वायुद्वारा तेजःकारणे ब्रह्मणि समन्वय इति सिद्धम् ॥ १० ॥ आपः । अतिदेशोऽयं । तथा ह्याथर्वणे मुण्डकग्रथे 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति मन्त्रेऽपां ब्रह्मजत्वं श्रुतम् । 'अग्नेरापः' इति श्रुत्या तस्य विरोधोऽस्ति न वेति संदेहे तुल्यत्वादस्ति विरोध इति पूर्वपक्षे अपामग्निदाह्यत्वेन विरोधादग्निजत्वासंभवात्क्रमार्थो पञ्चमीत्यविरोध इत्यधिकाशङ्कायामुक्ततेजोन्यायमतिदिश्य व्याचष्टे—अत इति । प्रत्यक्षविरोधे कथमपामग्निजत्वनिर्णयः, तत्राह—सति वचन इति । त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽप्यग्नेराप इति वचनादतीन्द्रिययोस्तयोर्नास्ति विरोध इति निर्णीयत इत्यर्थः । न केवलं श्रुत्यविरोधज्ञानायायमतिदेशः किंतु पञ्चभूतोत्पत्तिक्रमनिर्णयार्थं चेत्याह—तेजसस्त्विति । तस्मात्तेजोभावापन्ने ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः । विषयमुक्त्वान्नशब्दमहाभूतप्रकरणाभ्यां संशयमाह—ता इति । अभ्यवहार्यं भक्ष्यम् । अत्र श्रुतौ यद्यन्नमोदनादिकं तदा 'अद्भ्यः पृथिवी'

### भामतीव्याख्या

साम्येन न तु सर्वथा साम्येनेति सर्वमवदातम् ॥ १० ॥ आपः । निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः । अन्नशब्दोऽयं व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते । श्रुतिश्च प्रकरणाद्बली-

### आनन्दगिरीयव्याख्या

इति ॥ १० ॥ तेजसो वायुकार्यत्वमुक्त्वाऽनन्तरनिर्दिष्टानामपां तेजसो जन्मातिदेशेन निरूपयति—आप इति । वाक्यं हि सूत्रं न पदमात्रं तत्कुतोऽस्य सूत्रतेत्याशङ्क्य सूत्रं पूरयति—अत इति । 'एतस्माज्जायते' इत्युपक्रम्य 'खं वायुर्ज्योतिरापः' इति 'अग्नेरापः' इति 'तदपोऽसृजत' इति च श्रूयते । तत्र किमापः सतो जायन्ते किंवा तेजस इति श्रुतिविप्रतिपत्तेः संदेहे सत्यपामग्निदाह्यत्वादग्नेस्तत्स्वयोगात् 'अग्नेरापः' 'तदपोऽसृजत' इति च श्रुती गौण्यावन्यथाथर्वणश्रुतिविरोधान्न ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षे सिद्धान्तमाह—आपोऽत इति । अपां कारणत्वे तेजसः श्रुतेऽपि प्रत्यक्षविरोधान्निश्चयासिद्धिरित्याशङ्क्याह—सतीति । त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽपि तयोरत्रिवृत्कृतयोरतीन्द्रियत्वाद्विरोधाप्रतीतेर्वचने सति निश्चयोपपत्तिरित्यर्थः । संदेहाभावे विचारस्य निरवकाशत्वात्कथमिदं सूत्रमित्याशङ्क्याह—तेजसस्त्विति । महाभूतसर्गव्याख्याने प्रक्रान्ते क्रमप्राप्तानामपामतिक्रमणं मा भूदित्यभिप्रेत्य प्रत्यक्षविरोधात् । 'आप एवाग्र आसुः' इति च पूर्वसद्भावश्रवणादाथर्वणश्रुतेश्च 'अग्नेरापः' इत्याद्या श्रुतिर्गौणीति मन्दाशङ्कां निरसितुमिदं सूत्रम् । पूर्ववत्क्रमश्रुत्यनुरोधेनाक्रमश्रुतेर्नेतव्यत्वात्पूर्वसद्भावश्रुतेश्च भूतसूक्ष्ममात्रविषयत्वेनाविरोधात्तेजोभावमापन्ने ब्रह्मण्यपां कारणे 'तदपोऽसृजत' इत्यादिश्रुतेः समन्वयसिद्धौ न गौणार्थतेति भावः । तत्र च तैत्तिरीयादिश्रुतेराथर्वणादिश्रुतेश्च मिथोविरोधनिराकरणद्वारा ब्रह्मण्येवाबादिकारणे समन्वयप्रतिपादनात्पादादिसंगतिस्तथैव फलभेदश्चेति द्रष्टव्यम् ॥ ११ ॥ तेजःकार्यत्वेनोक्तानामपां कार्यत्वेन 'ता अन्नमसृजन्त' इति श्रुतस्यान्नस्य पृथिवीत्वं साधयति—पृथिवीति । अधिकरणस्य विषयमाह—ता इति । अन्नशब्दान्महाभूतप्रकरणाच्च दर्शितश्रुतिं विषयीकृत्य विचारप्रयोजकं संदेहमाह—तत्रेति । अभ्यवहार्यम् । भक्षणयोग्यमिति यावत् । अप्कार्यविगानद्वारा कारणसमन्वये विगानं दर्शयन्पूर्वपक्षयति—तत्र प्राप्तमिति । 'ता अन्नमसृजन्त' इति श्रुतेः 'अद्भ्यः पृथिवी' इति श्रुतेश्च विरोधनिराकरणद्वारेण परम्परया पृथिवीकारणे ब्रह्मणि समन्वयप्रतिपादनादत्र पादादिसंगतिसौलभ्यमिति मन्तव्यम् । उक्तश्रुत्योरनेकवाक्यतया विरोधादप्रामाण्ये पूर्वपक्षे समन्वयासिद्धिः, सिद्धान्ते त्वेकवाक्यत्वेनाविरोधात्प्रामाण्ये तत्सिद्धिः । प्रकरणादिना पृथिवीप्रतीतौ कथमन्नशब्देन व्रीह्यादि प्राप्तमित्या-

प्राप्तं तावद्व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति । तत्र ह्यन्नशब्दः प्रसिद्धो लोके, वाक्यशेषोऽप्येतमर्थमुपोद्बलयति । 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवतीति' । व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीति । एवं प्राप्ते ब्रूमः—पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति । कस्मात् । अधिकाराद्रूपाच्छब्दान्तराच्च । अधिकारस्तावत् 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति महाभूतविषयो वर्तते । तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः । तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते 'यत्कृष्णं तदन्नस्य' इति । न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति । नापि व्रीह्यादीनाम् । ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् । नायं दोषः । बाहुल्यापेक्षत्वात् । भूयिष्ठं हि पृथिव्याः कृष्णं रूपं न तथा श्वेतरोहिते । पौराणिका अपि पृथिवीछायां शर्वरीमुपदिशन्ति । सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते । श्रुत्यन्तरमपि समानाधिकारमद्भ्यः पृथिवीति भवति । 'तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्'—(बृ० १।२।२) इति च । पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति—'पृथिव्या ओषधय ओषधीभ्योऽन्नम्' इति च । एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्र-

---

### रत्नप्रभाव्याख्या

इति श्रुत्या विरोधः, यदि पृथिवी तदा न विरोध इति फलं बोध्यम् । अप्पृथिव्योः कार्यकारणभावादधिकरणसंगतिः । अन्नश्रुतिवृष्टिभवत्वलिङ्गाभ्यां पूर्वपक्षः । तदेव तत्रैवेति श्रुत्यर्थः । तथाच क्वचिदन्नं क्वचिदद्भ्यः पृथिवी ततोऽन्नमिति विरोधात्मकवाक्यतेति प्राप्ते सिद्धान्तयति—एवं प्राप्त इति । अधिकारः प्रकरणम् । रूपं लिङ्गम् । पयः क्षीरं तद्वत्पाण्डुरं श्वेतम्, अङ्गारवद्रोहितं रक्तम् । शब्दान्तरशब्दितं स्थानं व्याचष्टे—श्रुत्यन्तरमपीति । अबानन्तर्यं पृथिव्याः स्थानं श्रुत्यन्तरसिद्धं तेनाप्यन्नस्य पृथिवीत्वमित्यर्थः । तत्तत्र सृष्टिकाले यदपां शरः यो मण्डवद्घनीभाव आसीत्स एव समहन्यत कठिनः संघातोऽभूत् साऽपां कठिना परिणतिः पृथिव्यभवदिति श्रुत्यर्थः । व्रीह्याद्यन्नसर्गः कस्मिन्स्थान इति विवक्षायामाह—पृथिव्या-

### भामतीव्याख्या

यस्तौ, सा च वाक्यशेषेणोपोद्बलिता 'यत्र क्वचन वर्षति' इत्येतेन तस्मादभ्यवहार्यं व्रीहियवाद्येवात्राद्भ्यो जायत इति विवक्षितम् । कार्ष्ण्यमपि हि संभवति कस्यचिददनीयस्य । नहि पृथिव्यपि कृष्णा, लोहितादिरूपाया अपि दर्शनात् । ततश्च श्रुत्यन्तरेण 'अद्भ्यः पृथिवी पृथिव्या ओषधयः' इत्यादिना विरोध इति पूर्वः पक्षः । श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणतयान्यतरा नेतव्या । तत्र किम् 'अद्भ्यः पृथिवी' इति पृथिवीशब्दोऽन्नपरतया नीयतामुत 'अन्नमसृजत' इत्यन्नशब्दः पृथिवीपरतयेति विशये, महाभूताधिक-

### आनन्दगिरीयव्याख्या

शङ्क्य श्रुतेस्ततो बलीयस्त्वादित्याह—तत्रहीति । अन्नशब्देन व्रीह्यादि ग्राह्यमित्यत्र लिङ्गमपि दर्शयति—वाक्यशेषोऽपीति । तस्मादिति । अद्भ्योऽन्नस्य सृष्टत्वादिति यावत् । तदेव । तत्रैवेत्यर्थः । वर्षणे सत्यन्नस्य बहुभवनं श्रुतमित्येतावता कथमन्नशब्दस्य पृथिव्यावृत्तिरित्याशङ्क्याह—व्रीहीति । श्रुतिलिङ्गाभ्यामन्नशब्दस्य प्रसिद्धार्थत्वे सिद्धे 'ता अन्नमसृजन्त' इत्यादिश्रुतेः श्रुत्यन्तरेण 'अद्भ्यः पृथिवी' इत्यादिना विरोध इति पूर्वपक्षोपसंहार इतिशब्दार्थः । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञाभागं व्याचष्टे—एवं प्राप्त इति । श्रुतिलिङ्गाभ्यामन्नशब्दस्य व्रीह्यादिविषयत्वे दर्शिते पृथिवीविषयत्वं हेत्वभावादयुक्तमिति शङ्कते—कस्मादिति । अन्नशब्दस्य पृथिवीविषयत्वे सूत्रोक्तं हेतुत्रयं विभज्यावतारयति—अधिकारादिति । अधिकारशब्दितं प्रकरणमादौ विवृणोति—अधिकार इति । प्रकरणस्य महाभूतविषयत्वेऽपि परम्परया व्रीह्यादिविषयत्वमन्नशब्दस्य किं न स्यादित्याशङ्क्य प्रबलप्रमाणं विना परम्पराकल्पनमनुचितमित्याह—तत्रेति । प्रकरणवल्लिङ्गमपि सिद्धान्ते साधकमस्तीत्याह—तथेति । लिङ्गस्यान्यथासिद्धिं शङ्कित्वा दूषयति—नहीति । कृष्णत्वनियमराहित्यं पृथिव्यामपि तुल्यमित्यसिद्धिं लिङ्गस्य चोदयति—नन्विति । पृथिवीप्रदेशानामकृष्णानामपि प्रथनात्तत्र कृष्णत्वं नियमाभावादसंभवि लिङ्गमिति तन्निराकरोति—नायमिति । बाहुल्यमेव प्रकटयति—भूयिष्ठं हीति । वाक्यशेषे यदन्नस्य कृष्णत्वं श्रुतं तत्तस्य पृथिवीत्वं गमयतीत्यत्र पौराणिकसंमतिमाह—पौराणिका अपीति । प्रकरणलिङ्गे दर्शयित्वा स्थानमपि सिद्धान्ते दर्शयति—श्रुत्यन्तरमपीति । समानाधिकारम् । महाभूतसृष्टिविषयत्वेन समानप्रकरणमिति यावत् । तत्रैव बृहदारण्यकश्रुतिमुदाहरति—तद्यदिति । तत्तत्र सृष्टिकाले यदपां यस्तासां शरो मण्डो घनीभावोऽभूदिति प्रकृतः शरो निरुच्यते । स हि समहन्यत संघातात्मना परिणतः । सोऽपां कठिनाकारपरिणामः पृथिव्यभवत् । विशेष्यपृथिव्यपेक्षया सेत्युक्तम् । चकारस्तु श्रुत्यन्तरमितिपदानुकर्षणार्थः । तैत्तिरीयके तेज आरभ्य चतुर्थपर्यायपठितस्यैव व्रीह्यादिरूपत्वात्तृतीयपर्यायस्य पृथिवीविषयत्वाच्छान्दोग्येऽपि तस्य तद्विषयत्वं युक्तमिति स्थानमेव प्रकटयति—पृथिव्यास्त्विति । प्रमाणत्रयफलं निगमयति—एवमिति । अन्नशब्दश्रुत्या व्रीह्यादिप्रतिपत्तिरुक्तेत्याशङ्क्याह—

तिपत्तिः । प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते । वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥ १२ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥




व्योमाद्याः कार्यकर्तारो ब्रह्म वा तदुपाधिकम् ॥ व्योम्नो वायुर्वायुतोऽग्निरित्युक्तेः खादिकर्तृता ॥ १ ॥
ईश्वरोऽन्तर्यमयतीत्युक्तेर्व्योमाद्युपाधिकम् ॥ ब्रह्म वाय्वादिहेतुः स्यात्तेज आदीक्षणादपि ॥ २ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्सृजन्त्याहोस्वित्परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति प्राप्तं तावत्स्वयमेव सृजन्तीति । कुतः । 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः

---

रत्नप्रभाव्याख्या

स्त्यति । पञ्चमीयम् । वृष्टिभवत्वलिङ्गसहिताच्छ्रुतेः कथं प्रकरणलिङ्गस्थानैर्बाध इत्याशङ्क्याह—**वाक्यशेषोऽपीति** । प्रबलदुर्बलप्रमाणसंनिपाते बहूनां दुर्बलानामत्यन्तबाधाद्वरं प्रबलप्रमाणस्याल्पबाधेन कथंचिन्नयनमिति न्यायेन श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वाद्यान्नात्मकपृथिवीनिष्ठत्वं नीयते । ताभ्यामन्नमात्रग्रहे प्रकरणादीनां पृथिवीमात्रविषयाणामत्यन्तबाधापत्तेरिति भावः । अन्नस्य वृष्टिजत्वोक्तिद्वारा पृथिव्या अब्जजन्यत्वं सूच्यते । पृथिव्यब्जा, पृथिवीत्वात्, अन्नवदित्यनुमानादित्यक्षरार्थः । एवं तित्तिरिश्रुत्यनुसारेण छन्दोगश्रुतेर्नयनादविरुद्धो भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धम् ॥ १२ ॥ संप्रति तानि भूतान्याश्रित्याश्रयाश्रयिभावसंगत्या तेषां स्वातन्त्र्यमाशङ्क्य निषेधति—**तदभिध्यानादेव तु तल्लिङ्गात्सः** । उक्तभूतान्याश्रित्य संशयपूर्वपक्षौ दर्शयति—**किमिमानीत्यादिना** । संशयबीजानुक्तौ पूर्वोत्तरपक्षयुक्त्यो बीजमिति ज्ञेयम् । नन्वत्र भूतानां किं स्वातन्त्र्येणोपादानत्वमाशङ्क्यते कर्तृत्वं वा । नाद्यः, 'रचनानुपपत्तेः' इत्यादिन्यायविरोधादिति शङ्कते—**नन्विति** । न द्वितीयः, अचेतनत्वादिति भावः । यथा मनुष्यादिशब्दैस्तत्तद्देहाभिमानिनो जीवा उच्यन्ते तथा 'आकाशाद्वायुः' इत्यादिश्रुतावाकाशादिशब्दैस्तत्तद्भूताभिमानिदेवता उच्यन्ते, तासां स्वकार्ये वाय्वादौ कर्तृत्वसंभवान्निरपेक्षनिमित्तत्वं पञ्चम्यर्थः । एवं 'तदात्मानं स्वयमकुरुत' इति श्रुतौ स्वयमिति विशेषणाद्ब्रह्मणोऽन्यानपेक्षसर्वकर्तृत्वसंभवान्निरपेक्षनिमित्तत्वं श्रुतम् । तथाच मिथोनिरपेक्षेश्वरभूत-

भामतीव्याख्या

रानुरोधात्प्रायिककृष्णरूपानुरोधाच्च 'तद्यदपां शर आसीत्' इति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य चान्यथाप्युपपत्तेरन्नशब्दोऽधिकारणे पृथिव्यामिति राद्धान्तः ॥ १२ ॥ **तदभिध्यानादेव तु तल्लिङ्गात्सः** । सृष्टिक्रमे भूतानामविरोध उक्तः । इदानीमाकाशादिभूताधिष्ठात्र्यो देवताः किं स्वतन्त्रा एवोत्तरोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति । तत्र 'आकाशाद्वायुर्वायोरग्निः' इति स्ववाक्ये निरपेक्षाणां श्रुतेः स्वयंचेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात्, प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि मूलकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणामेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्वव्याघात इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—**'आकाशाद्वायुः'** इत्यादय आकाशादीनां केवलमुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम् । नच

आनन्दगिरीयव्याख्या

**प्रसिद्धिरपीति** । लिङ्गानुगृहीता श्रुतिर्बलवती कुतो बाध्यतेत्याशङ्क्य त्वदुक्तं लिङ्गं सिद्धान्तानुकूलमित्याह—**वाक्यशेषोऽपीति** । प्रकरणादिभिर्यदा पृथिवी परिगृह्यते तदा श्रुतिलिङ्गयोर्नात्यन्तबाधः, स्वार्थापरित्यागेन तदाकारपरिणतायां पृथिव्यां प्रवृत्त्युपपत्तेः । श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे हेतुलिङ्गप्रकरणादीनामत्यन्तबाधः स्यात् । तेषां पृथिवीविषयत्वात्तदनुपादाने निरवकाशत्वात् । तत्र प्रमाणसमुदाययोरितरेतरविरोधेऽन्यतरस्यात्यन्तबाधेनान्यतरोपादानाद्वरमन्यतरस्याल्पबाधेनान्यतरोपादानमिति श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वा प्रकरणादिनिरन्नाकारपरिणता पृथिव्येव ग्रहीतव्येति मन्वानः सिद्धान्तमुपसंहरति—**तस्मादिति** । तैत्तिरीयश्रुत्यनुसारेण छन्दोगश्रुतिनयनात्तयोरविरोधात्प्रमाणभावमापन्ने पृथिवीकारणे ब्रह्मणि समन्वयोपपत्तिरिति निगमयितुमितीत्युक्तम् ॥ १२ ॥ पूर्वेष्वधिकरणेषु महाभूतानां पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्य सृष्टिरुपदिष्टा । संप्रति भूतानां स्वकार्ये स्वातन्त्र्याद्ब्रह्मणः सर्वकारणत्वश्रुतिविरोधः स्यादित्याशङ्क्याह—**तदभिध्यानादिति** । विषयप्रदर्शनपूर्वकमाकाशादिशब्दानां चेतनाचेतनविषयत्वाभ्यां संदेहमुक्त्वा पूर्वपक्षं गृह्णाति—**किमिमानीति** । अत्र च भूतसृष्टत्वश्रुतेर्ब्रह्मस्रष्टृत्वश्रुतेश्च विरोधनिराकरणद्वारेण सर्वस्रष्टरि ब्रह्मणि समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुत्योर्विरोधादनेकवाक्यत्वाच्च तत्र ब्रह्मणि समन्वयः । सिद्धान्ते तु तयोरेकवाक्यतयाऽविरोधात्प्रामाण्यात्सिद्धिः । 'आकाशादेव समुत्पद्यन्ते' इत्येवकारश्रुत्या ब्रह्मणः स्वातन्त्र्ये समधिगते भूतस्वातन्त्र्यमयुक्तमिति शङ्कते—**कुत इति** । मूलकारणत्वापेक्षया ब्रह्मणः स्वातन्त्र्यश्रवणमित्याशयवानाह—**आकाशादिति** । पूर्वपक्षमाक्षिपति—**नन्विति** । आकाशादिशब्दैराकाशाद्यभिमानिनीनां देवतानां

प्रतिपिद्धा । नैष दोषः । 'तत्तेज ऐक्षत ता आप ऐक्षन्त' (छा० ६।२।४) इति च भूतानामपि चेतनत्वश्रवणादिति । एवं प्राप्तेऽभिधीयते—स एव परमेश्वरस्तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति । कुतः । तल्लिङ्गात् । तथा हि शास्त्रम्—'यः पृथिव्यां तिष्ठन्यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' (बृ० ३।७।३) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामयत बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत् । तदात्मानं स्वयमकुरुत' (तै० २।६।१) इति च तस्यैव च सर्वात्मभावं दर्शयति । यत्त्वीक्षणश्रवणमप्तेजसोस्तत्परमेश्वरावेशवशादेव द्रष्टव्यम् 'नान्योऽतोऽस्ति द्रष्टा' (बृ० ३।७।२३) इतीक्षित्रन्तरप्रतिषेधात् । प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत बहु स्यां प्रजायेय' इत्यत्र ॥ १३ ॥

---

रत्नप्रभाव्याख्या

कर्तृत्वश्रुत्योर्विरोधान्न ब्रह्मणि समन्वय इति सफलं पूर्वपक्षमाह—**नैष दोष इति** । भूतानां तदभिमानिदेवतानामित्यर्थः । यथा आकाशादिभावापन्नब्रह्मणः सर्वोपादानत्वं तथा तदभिमानिदेवताजीवभावमापन्नब्रह्मणः कर्तृत्वमिति परम्परया ईश्वरकर्तृत्वश्रुत्यविरोधः । स्वयमिति विशेषणमीश्वरान्तरनिरासार्थं न जीवभावापेक्षानिरासार्थमित्येकदेशिसिद्धान्त ऊहनीयः । मुख्यसिद्धान्तमाह—**एवं प्राप्त इति** । आकाशादिशब्दैर्न देवतालक्षणा मुख्यार्थे बाधकाभावात्, पञ्चम्यश्च प्रकृतित्वार्थास्तत्र रूढतरत्वात्, तथा चाचेतनानां भूतानां कर्तृत्वमेव नास्ति, कुत ईश्वरानपेक्षकर्तृत्वम् । यद्यपि देवतानां कर्तृत्वं संभवति तथापीश्वरनियम्यत्वश्रवणाच्चेतनानामपि न स्वातन्त्र्यं, किमु वाच्यमचेतनानां भूतानां न स्वातन्त्र्यमिति मत्वोक्तम्—**तल्लिङ्गादिति** । तत्तदचेतनात्मनावस्थितस्य ब्रह्मण उपादानत्वेऽपि जीवव्यावृत्तेश्वरत्वाकारेणैव साक्षात्सर्वकर्तृत्वं न जीवत्वद्वारा तस्य सर्वनियन्तृत्वाल्लिङ्गादित्यर्थः । प्रकरणाच्च साक्षात्सर्वकर्तृत्वमित्याह—**तथेति** । पूर्वोक्तमनूद्य निरस्यति—**यत्त्विति** । परमेश्वरस्यान्तर्यामिभावेनावेशः संबन्धस्तद्वशाद्भूतेष्वीक्षणश्रवणं नैतावता तेषां चेतनत्वं स्वातन्त्र्यं वेत्यर्थः । अनेन 'तदभिध्यानात्' इति पदं व्याख्यातम् । इत्थं सूत्रयोजना—स ईश्वरस्तत्तदात्मना स्थितोऽपि साक्षादेव सर्वकर्ता तस्यान्तर्यामित्वलिङ्गात् । जीवत्वद्वारा कर्तृत्वं नाम जीवस्यैव कर्तृत्वमित्यन्तर्यामिणः कर्तृत्वासिद्धेरन्तर्यामित्वायोगात्तदभिध्यानादीश्वरेक्षणादेव भूतेषु श्रुतेक्षणोपपत्तेश्चेति । तत्तेज ऐक्षतेति श्रुत ईक्षिता परमात्मैवेत्यत्र श्रुत्यन्तरं प्रकरणं चाह—**नान्य इति** । तस्मादीश्वरपदार्थलोपप्रसङ्गेनेश्वरादन्यस्य स्वातन्त्र्याभावान्नेश्वरकर्तृत्वश्रुतेर्भूतश्रुत्या विरोध इति सिद्धम् ॥ १३ ॥

भामतीव्याख्या

चेतनानां स्वकार्ये स्वातन्त्र्यमित्येतदप्यैकान्तिकं, परतन्त्राणामपि तेषां बहुलमुपलब्धेर्भृत्यान्तेवास्यादिवत् । तस्माल्लिङ्गप्रस्तावसामर्थ्यात् स ईश्वर एव तेन तेनाकाशादिभावेनोपादानभावेनावतिष्ठमानः स्वयमधिष्ठाय निमित्तकारणभूतस्तं तं विकारं वाय्वादिकं सृजतीति युक्तम् । इतरथा लिङ्गप्रस्तावौ क्लेशितौ स्यातामिति । **परमेश्वरावेशवशादिति** । परमेश्वर एवान्तर्यामिभावेनाविष्ट ईक्षिता, तस्मात्सर्वस्य कार्यजातस्य साक्षात्परमेश्वर एवाधिष्ठाता निमित्तकारणं न त्वाकाशादिभावमापन्नः । आकाशादिभावमापन्नस्तूपादानमिति

आनन्दगिरीयव्याख्या

मनुष्यादिशब्दैरिव तदभिमानिनां जीवानां विवक्षितत्वात्, पञ्चमीनां च निमित्तार्थत्वात्, आकाशाद्यात्मनेश्वरस्य वाय्वाद्युपादानत्ववत्तदभिमानिदेवतात्मनाधिष्ठातृत्वं चाविरुद्धमिति परिहरति—**नैष दोष इति** । भूतानामपीति भूताभिमानिदेवताभिप्रायम् । 'सोऽकामयत' इति परमेश्वरं प्रस्तुत्य 'तदात्मानं स्वयमकुरुत' इति कर्तृत्वं श्रुतं, 'यः पृथिव्यां तिष्ठन्' इत्यादिना चेश्वरस्य नियन्तृत्वमुक्तं, तत्कुतो देवतानां स्वातन्त्र्येण कार्ये नियन्तृत्वमित्याशङ्क्य प्रस्तावलिङ्गाभ्यामवद्योतितं ब्रह्मणः सर्वनियन्तृत्वमभिमानिदेवताद्वारा पारम्पर्येणापि सिध्यति, अन्यथा ब्रह्मकारणत्वश्रुतेर्भूतकारणत्वश्रुतेश्च मिथो विरोधः स्यादित्युपसंहर्तुमितिशब्दः । आकाशादिशब्दैर्न देवतालक्षणा, मुख्यार्थबाधाभावात्, पञ्चम्यश्चोपादानार्थास्तत्र रूढतरत्वादिति सिद्धान्तयति—**एवं प्राप्त इति** । भूतानां स्वातन्त्र्यश्रवणान्नास्ति स्वविकारस्रष्टावीश्वरापेक्षेत्युक्तत्वादुक्तप्रतिज्ञानुपपत्तिरिति शङ्कते—**कुत इति** । सौत्रं हेतुमादाय विभजते—**तल्लिङ्गादिति** । इतश्च भूतानामयुक्ता स्वातन्त्र्येण प्रवृत्तिरित्याह—**तथेति** । ब्रह्माकाशयोरन्यतरपदार्थोपादानेऽन्यतरपदार्थबाधप्रसङ्गात्पञ्चम्येवकारश्रुतिभ्यामवगतस्वातन्त्र्ययोस्तयोरेकतरस्याप्यबाधेन समुच्चयोपादानेन नैरपेक्ष्यमात्रं बाधित्वा पूर्वपूर्वभूताकारपरिणतं ब्रह्मोत्तरोत्तरभूतोपादानमुपेयमिति भावः । पूर्वपक्षबीजमनूद्य तदभिध्यानादेवेति सूत्रावयवयोजनया निराकरोति—**यत्त्विति** । परमेश्वरस्य भूतेषु प्रवेशात्तदीयमेवाभिध्यानमप्तेजसोरुपचर्यते, तत्र भूतानां चेतनत्वाशङ्केत्यर्थः । भूतानां तदभिमानिचेतनदेवताद्वारेणेक्षणसिद्धौ किमीश्वरेणेत्याशङ्क्याह—**नान्य इति** । भवतु वा चेतनानां देवतात्मनां भिन्नत्वं तथापि किंकारणमिति विशये परमेश्वरस्य कारणत्वेन कृप्तत्वात्स एव द्विधा कारणमित्याह—**प्रकृतत्वादिति** । ब्रह्मणः स्वरूपेण पररूपेण सर्वकारणत्वे सर्वस्रष्टृब्रह्मसमन्वयस्य भूतस्वातन्त्र्य-

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥




सृष्टिक्रमो लये ज्ञेयो विपरीतक्रमोऽथ वा ॥ कृतं कल्प्याद्वरं तेन लये सृष्टिक्रमो भवेत् ॥ १ ॥
हेतावसति कार्यस्य न सत्त्वं युज्यते ततः ॥ पृथिव्यप्स्विति चोक्तत्वाद्विपरीतक्रमो लये ॥ २ ॥

भूतानामुत्पत्तिक्रमश्चिन्तितः । अथेदानीमप्ययक्रमश्चिन्त्यते । किमनियतेन क्रमेणाप्यय उतोत्पत्तिक्रमेणाथवा तद्विपरीतेनेति । त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' (तै० ३।१।१) इति । तत्रानियमोऽविशेषादिति प्राप्तम् । अथवोत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादिति । एवं प्राप्ते ततो ब्रूमः—विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितुमर्हति । तथाहि लोके दृश्यते येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति । अपिच दृश्यते मृदो जातं घटशरावाद्यप्ययकाले मृद्भावमप्येत्यद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति । अतश्चोपपद्यत एतत् । यत्पृथिव्यद्भ्यो जाता सती स्थिति-

रत्नप्रभाव्याख्या

विपर्ययेण तु । यद्यप्यत्र श्रुतिविरोधो न परिह्रियत इत्यसंगतिस्तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो विचार्यत इति प्रासङ्गिक्यावेव पादावान्तरसंगती इति मत्वाह—भूतानामिति । अत्रोत्पत्तिक्रमाद्विपरीतक्रमनिर्णयात्सिद्धान्ते भूतानां प्रातिलोम्येन लयध्यानपूर्वकं प्रत्यग्ब्रह्मणि मनःसमाधानं फलं, पूर्वपक्षे तु कारणनाशे सति कार्यनाश इति सर्वलयाधारब्रह्मासिद्धेरुक्तसमाध्यसिद्धिरिति भेदः । सति महाभूतानां लये क्रमचिन्ता स एव नास्तीति केचित्तान्प्रत्याह—त्रयोऽपीति । अनियम इत्यनास्थयोक्तं श्रौतस्य प्रलयस्य क्रमाकाङ्क्षायां श्रौत उत्पत्तिक्रम एव ग्राह्यः, श्रौतत्वेनान्तरङ्गत्वादित्येवं पूर्वपक्षः, सति कारणे कार्यं नश्यतीति लोके दृश्यते । तथाच श्रौतोऽप्युत्पत्तिक्रमो लये न गृह्यते किंतु लौकिकक्रम एव गृह्यते श्रुतेर्लौकदृष्टपदार्थबोधाधीनत्वेन श्रौतादपि लौकिकस्यान्तरङ्गत्वाद्योग्यत्वाच्च । कारणमेव हि कार्यस्य रूपमिति तदनन्यत्वन्यायेन स्थापितम् । नहि स्वरूपनाशे कार्यस्य क्षणमपि स्थितिर्युक्ता तस्मादयोग्य उत्पत्तिक्रमो लयस्य न ग्राह्यः । लौकिकक्रमावरोधेन निराकाङ्क्षत्वादिति सिद्धान्तयति—ततो ब्रूम इत्यादिना । क्रमेण परम्परया सर्वकार्यलयाधारत्वं ब्रह्मणः किमित्याश्रीयते, साक्षादेव

भामतीव्याख्या

सिद्धम् ॥ १३ ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च । उत्पत्तौ महाभूतानां क्रमः श्रुतो नाप्ययेऽप्ययमात्रस्य श्रुतत्वात् । तत्र नियमे संभवति नानियमः । व्यवस्थारहितो हि सः । नच व्यवस्थायां सत्यामव्यवस्था युज्यते । तत्र क्रमभेदापेक्षायां किं दृष्टोऽप्ययक्रमो घटादीनां महाभूताऽप्ययक्रमनियामकोऽस्त्वाहो श्रौत उत्पत्तिक्रम इति विशये श्रौतस्य श्रौतान्तरमभ्यर्हितं समानजातीयतया तस्यैव बुद्धिसांनिध्यात् । न दृष्टं, विरुद्धजातीयत्वात् । तस्माच्छ्रुतेनैवोत्पत्तिक्रमेणाप्ययक्रमो नियम्यत इति प्राप्त उच्यते—अप्ययस्य क्रमापेक्षायां स्वक्रमुत्पत्तिक्रमो नियामको भवेत्, न त्वस्त्यप्ययस्य क्रमापेक्षा, दृष्टानुमानोपनीतेन क्रमभेदेन श्रुत्यनुसारि-

आनन्दगिरीयव्याख्या

सष्टृत्वश्रुतिविरोधो नेति सिद्धमिति भावः ॥ १३ ॥ सृष्टिक्रममभिधाय लयक्रममभिधत्ते—विपर्ययेणेति । यद्यप्यत्र श्रुतिविप्रतिषेधो न साक्षात्परिह्रियते तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थत्वाद्विचार्यत इति प्रासङ्गिकी संगतिरित्यभिप्रेत्याह—भूतानामिति । वस्तुतस्तु सर्वप्रलयाधारब्रह्मसमन्वयस्य कारणनाशात्कार्यनाश इति न्यायानुगृहीतसृष्टिक्रमश्रुतिविरोधो निरस्यत इति संगतयः । पूर्वपक्षे भूतलयस्य श्रौतसंनिहितक्रमलाभादशेषलयाधारब्रह्मसमन्वयस्य न्यायोपेतसृष्टिक्रमविरोधादसिद्धिः । सिद्धान्ते लोकानुरोधिन्याः श्रुतेः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात्तेन तद्बाधकत्वेत्युक्ते ब्रह्मणि तत्सिद्धिः । 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ' इत्यादौ कार्यलिङ्गकानुमानप्रदर्शनात्, यत्प्रयन्ति इत्यादौ च लयमात्रश्रवणेऽपि क्रमस्याश्रुतत्वात्, आकाङ्क्षायाश्च द्विधापि शान्तेश्चिन्ताप्रकारमेवाभिनयति—किमनियतेनेति । सति प्रलये क्रमश्चिन्तनीयः, स एव नास्तीति केचित्, तान्प्रत्याह—त्रयोऽपीति । उपक्रममात्रेण पूर्वपक्षमाह—तत्रेति । श्रुतोत्पत्तिक्रमादेव नियमे सत्यनियमो न युक्तिमानित्याशङ्क्य पक्षान्तरमाह—अथवेति । महाभूतप्रलयोऽपि क्रममपेक्षते, तदुत्पत्तिप्रलययोरन्यतरत्वात्, तदुत्पत्तिवदित्यभिप्रेत्याह—क्रमाकाङ्क्षिण इति । तथाचासौ श्रौतसंनिहितक्रमवान्न इमातं व्यवहितं क्रममवलम्बते । तस्य बहिरङ्गत्वादिति भावः । महाभूतानामुत्पत्तिक्रमेण प्रलये क्रमवति सति सर्वप्रलयाधारे ब्रह्मणि समन्वयो न्यायानुगृहीतसृष्टिक्रमश्रुतिविरोधो न सिध्यतीत्युपसंहरति—एवमिति । सिद्धान्तसूत्रमवतार्य व्याकरोति—तत इति । लोकदृष्टपदार्थबोधाधीना हि श्रुतिः । अतः श्रुतिसंनिहितादपि लौकिकक्रमस्य संनिहिततरत्वात्तेन तद्बाधनं युक्तमित्युपपद्यत इति सूत्रावयवं व्याचष्टे—तथाहीति । चकारसूचितमुपपत्त्यन्तरमाह—अपिचेति । सत्यपीत्थं लौकिके दर्शने प्रकृते किमायातमित्याशङ्क्य फलपरत्वेनापि सूत्रावयवं योजयति—अतश्चेति । पृथिव्यादीनामवादौ लयश्चेद्ब्रह्मणः सर्वकार्यलयाधारत्वं

कालव्यतिक्रान्तावपोऽपीयादापश्च तेजसो जाताः सत्यस्तेजोऽपीयुः । एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम् । नहि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः—'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते' इत्येवमादौ । उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति । न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते । नहि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः कारणाप्यये कार्यस्यावस्थानानुपपत्तेः । कार्याप्यये तु कारणस्यावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वात् ॥ १४ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥




किमुक्तक्रमभङ्गोऽस्ति प्राणाद्यैर्नास्ति वास्ति हि ॥ प्राणाक्षमनसां ब्रह्मवियतोर्मध्य ईरणात् ॥ १ ॥
प्राणाद्या भौतिका भूतेष्वन्तर्भूताः पृथक् क्रमम् ॥ नेच्छन्त्यतो न भङ्गोऽस्ति प्राणादौ न क्रमः श्रुतः॥२॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम् । आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तम् । सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः । 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः' (कठ० ३।३) इत्यादिलिङ्गेभ्यः ।

---

**रत्नप्रभाव्याख्या**

तर्त्कि न स्यादित्यत आह—**नहि स्वकारणव्यतिक्रमेणेति** । घटनाशे मृदनुपलब्धिप्रसङ्गादित्यर्थः । 'वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते' इति स्मृतिशेष आदिपदार्थः । 'योग्यताधीनः संबन्धः' इति न्यायादयोग्यक्रमबाध इति सिद्धम् ॥ १४ ॥ **अन्तरा-ऽविशेषात्** । उक्तभूतोत्पत्तिलयक्रममुपजीव्य स किं करणोत्पत्तिक्रमेण विरुध्यते न वेति करणानामभौतिकत्वभौतिकत्वाभ्यां संदेहे वृत्तानुवादपूर्वकं पूर्वपक्षमाह—**भूतानामित्यादिना** । करणान्येव न सन्तीति वदन्तं प्रत्याह—**सेन्द्रियस्येति** । 'मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः,' 'श्रोत्रादीनीन्द्रियाण्यन्ये' इति स्मृतिर्द्रष्टव्या । अन्यपराः शब्दाः

**भामतीव्याख्या**

णोऽप्ययक्रमस्य बाध्यमानत्वात् । तस्मिन् हि सत्युपादानोपरमेऽप्युपादेयमस्तीति स्यात् । न चैतदस्ति । तस्मात् तद्विरुद्धदृष्टक्रमावरोधादाकाङ्क्षैव नास्ति, क्रमान्तरं प्रत्ययोग्यत्वात् तस्य । तदिदमुक्तं सूत्रकृता—'उपपद्यते च' इति । भाष्यकारोऽप्याह—**न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यत इति** । तस्मादुत्पत्तिक्रमाद्विपरीतः क्रम इत्येतन्न्यायमूला च स्मृतिरुक्ता ॥ १४ ॥ **अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्** । तदेवं भावनोपयोगिनौ भूतानामुत्पत्तिप्रलयौ विचार्य बुद्धी-

**आनन्दगिरीयव्याख्या**

कथमित्याशङ्क्य तत्तत्कारणात्मके ब्रह्मणि तत्तत्कार्यलयाभ्युपगमात्तत्रैव पर्यवसानमिति मत्वाह—**एवं क्रमेणेति** । पारम्पर्यं परित्यज्य साक्षाद्ब्रह्मणि सर्वकार्यलयाभ्युपगमो बलीयानित्याशङ्क्याह—**नहीति** । घटादेर्मृत्कार्यस्य परमाणुषु लयानभ्युपगमात् । अन्यथा घटादिनाशे परमाणूनामतीन्द्रियत्वान्न किंचिदुपलभ्येतेति भावः । लौकिकन्यायवशादुत्पत्तिक्रमविपरीतं प्रलयक्रमं प्रदर्श्य तत्रैव स्मृतिं संवादयति—**स्मृतावपीति** । 'वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते' इति वाक्यमादिशब्दार्थः । स्मार्तक्रमाल्लौकिकन्यायाच्च श्रौतक्रमस्य संनिकृष्टत्वादाकाङ्क्षासंनिधिभ्यां तस्यैवोपादेयत्वमित्याशङ्क्य योग्यत्वाभावान्नैवमित्याह—**उत्पत्तीति** । आकाङ्क्षापि तत्र नास्तीत्याह—**नचेति** । अयोग्यविषयाभ्यामाकाङ्क्षासंनिधिभ्यां विप्रकृष्टविषयेऽप्याकाङ्क्षायोग्यत्वे बलवत्तरे संबन्धस्य योग्यतानिमित्तत्वादिति भावः । अयोग्यत्वादित्युक्तं साधयति—**नहीति** । कार्यकारणयोरभेदे कार्याभावे कारणवत्तदभावेऽपि कार्यं स्यादित्याशङ्क्याह—**कार्येति** । तदेवं ब्रह्मणः सर्वप्रलयाधारत्वात्तत्र समन्वयस्य 'कारणनाशात्कार्यनाश' इति न्यायानुगृहीतसृष्टिक्रमश्रुत्या न विरोधोऽस्तीति सिद्धमिति भावः ॥ १४ ॥ पूर्वोक्तभूतोत्पत्तिप्रलयक्रमस्य करणसृष्ट्या बाधमाशङ्क्य परिहरति—**अन्तरेति** । भूतोत्पत्तिप्रलयक्रमो विषयः । स किं करणसृष्टिक्रमेण बाध्यते न वेति करणानां भौतिकत्वाभौतिकत्वाभ्यां संदेहे पूर्वपक्षयितुं वृत्तं कीर्तयति—**भूतानामिति** । उक्तोत्पत्तिप्रलयक्रमस्य विरोधद्योतनार्थमुक्तमर्थान्तरमनुद्रवति—**आत्मादिरिति** । अत्र न क्रमवद्भूतोत्पत्तिप्रलयाधारे ब्रह्मणि समन्वयस्य करणसृष्टिश्रुत्या विरोधपरिहारद्वारा दृढीकरणात्पादादिसंगतयः । पूर्वपक्षे करणसर्गश्रुतिविरोधादुक्तसमन्वयासिद्धिः । सिद्धान्ते तदविरोधात्तत्सिद्धिः । देहप्रदेशातिरिक्तेन्द्रियाभावात्कथं यथोक्तः संदेहः स्यादित्याशङ्क्याह—**सेन्द्रियस्येति** । श्रुतिस्मृत्योरुक्ता प्रसिद्धिः । तत्र श्रुतिमुदाहरति—**बुद्धिं त्विति** । 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिः' इत्याद्या स्मृतिरुदाहर्तव्या । करणानां सत्त्वेऽपि तेषामाहंकारिकत्वात्तदुत्पत्तिक्रमेण कुतो भूतोत्पत्त्यादिक्रमस्य विरोधाशङ्केत्याशङ्क्याह—

एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते । यद्यपि षष्ठस्याग्नेरुपसंहारो न संभवति तथापि द्युप्रभृतीनां पञ्चानामग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विद्याभेदो भवितुमर्हति । नहि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते । पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगैः—'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति' ( छा० ५।९।२ ) इति । वाजसनेयिनस्तु सांपादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' ( बृ० ६।२।१४ ) इत्यादि समामनन्ति स नित्यानुवादः । अथाप्युपासनार्थ एष वादस्तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम् । न चात्र पञ्चसंख्याविरोध आशङ्क्यः सांपादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता न विधिसमवायिनीत्यदोषः । एवं प्राणसंवादेष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते । न चावापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशङ्क्यः । कस्यचिद्वेद्यांशस्यावापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात् । तस्मादेकविद्यमेव ॥ २ ॥

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

यदप्युक्तमाथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद्विद्याभेद इति तत्प्रत्युच्यते । स्वाध्यायस्यैष धर्मो न विद्यायाः । कथमिदमवगम्यते । यतस्तथात्वेन स्वाध्याय-

रत्नप्रभाव्याख्या

दिना । अङ्गीकारं त्यजति—**पठ्यतेऽपीति** । इतोऽस्माल्लोकाद्दिष्टं लोकान्तरं प्रेतं गतं ज्ञातयोऽग्नये हरन्तीत्यर्थः । ननु छान्दोग्येऽग्निमात्रं श्रुतं वाजिभिस्तु समिदादिविशेषः पठ्यते इति रूपभेदस्तदवस्थः, तत्राह—**वाजसनेयिनस्त्विति** । षष्ठाग्नेस्तद्विशेषस्य चानुवादमात्रत्वेनानुपास्यत्वात्पञ्चाग्नय एवोपास्या उभयत्रेति न रूपभेद इत्यर्थः । सविशेषस्य षष्ठाग्नेरुपास्यत्वेऽपि न रूपभेद इत्याह—**अथापीति** । द्युलोकादीनां पञ्चानामनग्नीनामग्नित्वसंपत्तिविधिर्नैवार्थात्पञ्चत्वं संपत्तिकल्पिताग्नीनां सिद्धमनूद्यते न ध्येयत्वेन विधीयत इत्यर्थः । छन्दोगैर्वाजिशाखास्थं रेत उपसंहर्तव्यमित्युक्त्वाऽनुपसंहारेऽपि न विद्याभेद इत्याह—**न चावापेति** ॥ २ ॥ एवं रूपभेदो न विद्याभेदक इत्युक्त्वा धर्मविशेषोऽपि न भेदक इत्याह—**स्वाध्यायस्येति** । गोदानवदध्ययनाङ्गत्वेन शिरोव्रतमाथर्वणिकानां सूत्रे विहितं न विद्याङ्गमित्यर्थः । अधिकाराच्चेति

भामतीव्याख्या

दिति । परिहारः सूत्रावयवः—**न एकस्यामपीति** । पञ्चैव सांपादिका अग्नयो वाजसनेयिनामपि छान्दोग्यानामिव विधीयन्ते । षष्ठस्त्वग्निः संपद्व्यतिरेकायानूद्यते न तु विधीयते । वैश्वदेव्यां तूत्पत्तौ गुणो विधीयत इति भवतु भेदः । अथवा छान्दोग्यानामपि षष्ठोऽग्निः पठ्यत एव । अथवा भवतु वाजसनेयिनां षष्ठाग्निविधानं मा च भूच्छान्दोग्यानां तथापि पञ्चत्वसंख्याया अविधानादनुत्पत्तिशिष्टत्वं संख्यायाः किंतूत्पन्नेष्वग्निषु प्रचयशिष्टा संख्यानूद्यते सांपादिकानग्नीनवच्छेत्तुं, तेन येषामुत्पत्तिस्तेषां प्रत्यभिज्ञानात् अप्रत्यभिज्ञायमानायाश्च संख्याया अनुवाद्यत्वेनानुत्पत्तेर्विधीयमानस्य चाधिकस्य षोडशिग्रहणवद्विकल्पसंभवान्न शाखान्तरे ज्ञानभेदः । उत्पत्तिशिष्टत्वेऽसिद्धे प्राणसंवादादयोऽपि भवन्ति प्रत्यभिज्ञानादभिन्नास्तासु तासु शाखास्विति ॥ २ ॥ **स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः** । यैराथर्वणिकग्रन्थोपाया विद्या वेदितव्या तेषामेव शिरोव्र-

आनन्दगिरीयव्याख्या

स्याविरोधात्, तत्राह—**यद्यपीति** । एकैव विद्या षष्ठाग्नियुक्ता तद्रहिता चेति विरुद्धमित्याशङ्क्याह—**नहीति** । किंच वाजसनेयके षष्ठस्यापि ध्येयत्वमग्नेरुपेत्योक्तं न तु तस्य ध्येयत्वं पञ्चैवाग्नयस्तथोच्यन्ते । अनुपास्यत्वेन षष्ठोक्तिश्छान्दोग्येऽपि तुल्येत्याह—**पठ्यतेऽपीति** । इतोऽस्माल्लोकाच्चं दिष्टं परलोकं प्रेतं गतं पुत्रा ज्ञातयो वाग्नये नैधनविधिं विधातुं हरन्तीत्यर्थः । अनुपास्यत्वे किमिति पूर्वाग्निवत्पठ्यते षष्ठोऽग्निः, तत्राह—**वाजसनेयिनस्त्विति** । तस्योपासकस्य मृतस्य दाहायाग्निरेवाग्निरिति प्रसिद्धानुवादो न तूपास्तिविधिरुपास्यास्तूभयत्रापि पञ्चैवाग्नयः । प्रसिद्धानुवादश्च कल्पनानिवृत्त्यर्थत्वादर्थवानित्यर्थः । उत्पत्तौ गुणान्तरविध्यभावान्न विद्याभेदो वैश्वदेव्यास्तूत्पत्तौ विशिष्टगुणोक्तेर्भेद इत्युक्तम् । इदानीं वाजिनां षष्ठाग्निविधानेऽपि न विद्याभेद इत्याह—**अथापीति** । पञ्चाग्नीन्वेदेति श्रुतसंख्याविरोधान्न षष्ठस्याग्नेरुपसंहारसिद्धिरित्याशङ्क्य पञ्चसंख्याया विधेयत्वाभावात्सांपादिकाग्न्यवच्छेदकत्वेनैवानुवादादुत्पत्त्यशिष्टत्वादुत्पन्नानां च प्रत्यभिज्ञानान्न विद्याभेद इत्याह—**नचेति** । पञ्चाग्निविद्यायामुक्तन्यायं प्राणविद्यादिष्वतिदिशति—**एवमिति** । यस्यावापोद्वापाभ्यां वेद्यभेदाद्विद्याभेद इति, तत्राह—**नचेति** । बहुतरांशाभेदप्रत्यभिज्ञानादल्पतरांशभेदेऽपि प्रत्यभिज्ञाविरोधान्न विद्याभेद इत्यर्थः । रूपभेदाद्विद्याभेदं शङ्कितं निरस्योपसंहरति—**तस्मादिति** ॥ २ ॥ रूपभेदस्य भेदकत्वं निराकृत्य धर्मभेदस्य भेदकत्वं प्रत्याह—**स्वाध्यायस्येति** । व्यावर्त्यं चोद्यमनुद्रवति—**यदपीति** । शिरोव्रतं शिरस्यग्निधारणम् । आदिपदादानपात्रस्थानादि गृह्यते । चोद्योत्तरत्वेन सूत्रमवतार्य व्याचष्टे—**तदिति** । स्वाध्यायाङ्गत्वेन श्रुत्यादिभिर्विनियोगे न तदङ्गतेति शङ्कते—**कथमिति** । तथात्वेनेत्यादिनोत्तरमाह—**यत इति** । गोदानादीनि वेदाध्ययनाङ्गत्वेनानुष्ठेयानि व्रतानि । शिरोव्रतमपि

धर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थ आथर्वणिका इदमपि वेदव्रतत्वेन व्याख्यातमिति समामनन्ति । 'नैतदचीर्णव्रतोऽधीते' (मु० ३।२।११) इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते । ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मुण्ड० ३।२।१०) इति ब्रह्मविद्यासंयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति संकीर्त्येतैष धर्मः । न । तत्राप्येतामिति प्रकृतप्रत्यवमर्शात् । प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षत्वमिति ग्रन्थविशेषसंयोग्येवैष धर्मः । सववच्च तन्नियम इति निदर्शननिर्देशः । यथाच सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादाथर्वणोदितैकाग्न्यभिसंबन्धाच्चाथर्वणिकानामेव नियम्यन्ते तथैवायमपि धर्मः स्वाध्यायविशेषसंबन्धात्तत्रैव नियम्यते । तस्मादप्यनवद्यं विद्यैकत्वम् ॥ ३ ॥

## दर्शयति च ॥ ४ ॥

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् 'सर्वे वेदा यत्पदमामनन्ति' (क० २।१५) इति । 'तथैतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इति च । तथा 'महद्भयं वज्रमुद्यतम्' (क० ६।२) इति काठक उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दार्थे परामर्शो दृश्यते । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं

### रत्नप्रभाव्याख्या

व्याचष्टे—नैतदिति । एतत्प्रकृतं मुण्डकमननुष्ठितशिरोव्रतो नरो नाधीत इति श्रुतेर्मुण्डकाध्ययनाङ्गमेव शिरोव्रतमित्यर्थः । ननु विद्याङ्गत्वेनापि इदं व्रतं श्रुतमिति शङ्कते—नन्विति । सर्वशाखासु ब्रह्मविद्यैकैव चेद्विद्यासंयुक्तं व्रतमपि सर्वत्र संबध्येत । नच संबध्यत इति विद्याभेद इत्यर्थः । प्रकृतग्रन्थवाच्येतच्छब्दबलाद्ब्रह्मप्रकाशकग्रन्थपरो ब्रह्मविद्याशब्द इति परिहरति—नेति । तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र सववदिति निदर्शननिर्देशः । सवाः होमाः । आथर्वणैः स्वसूत्रे उदित एकोऽग्निरेकर्षिसंज्ञया प्रसिद्धस्तस्मिन्नग्नौ कार्या इति यथा नियम्यन्ते तथेत्यर्थः ॥ ३ ॥ किंच वेद्यैक्येन निर्गुणब्रह्मविद्यैक्यं तावच्छ्रुतिर्दर्शयति, तत्संनिधिपाठात्सगुणविद्यानामपि सर्वशाखास्वैक्यसिद्धिरित्याह सूत्रकारः—दर्शयति चेति । सगुणमप्येकं वेदत्रये वेद्यं दर्शयतीत्याह—तथेति । किंच शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शो विद्यैक्यं दर्शयतीत्याह—तथा महद्भयमित्यादिना । एष नर एतस्मिन्ब्रह्मण्यल्पमप्यन्तरं भेदं यदा

### भामतीव्याख्या

तत्पूर्वाध्ययनप्राप्तग्रन्थबोधिता फलं प्रयच्छति नान्यथा । अन्येषां तु छान्दोग्यादीनां सैव विद्याचीर्णशिरोव्रतानां फलदेत्याथर्वणग्रन्थाध्ययनसंबन्धादवगम्यते । तत्संबन्धश्च वेदव्रतेनेति 'नैतदचीर्णव्रतोऽधीते' इति समाम्नानादवगम्यते । 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति विद्यासंयोगेऽप्येतामिति प्रकृतपरामर्शिना सर्वनाम्नाऽध्ययनसंबन्धाविरोधायाथर्वविहितैव विद्योच्यत इति । सवा होमाः सप्त सौर्यादयः शतौदनान्ता आथर्वणिकानां त एकस्मिन्नेवाथर्वणिकेऽग्नौ क्रियन्ते न त्रेतायां ॥ ३ ॥ विद्यैकत्वं दर्शयति च ।

### आनन्दगिरीयव्याख्या

वेदव्रतेष्वन्तर्गतत्वेनोक्तं तेन यथा गोदानाद्यध्ययनाङ्गं तथेदमपीत्यर्थः । अधिकाराच्चेति व्याचष्टे—नैतदिति । एतद्ग्रन्थजातमचीर्णव्रतोऽननुष्ठितशिरोव्रतः पुरुषो नाधीत इति प्रकृतमुण्डकपरामर्शकादेतच्छब्दान्मुण्डकाध्ययनधर्म एवायं न विद्याधर्म इति प्रतिज्ञातं व्याख्यातुं शङ्कतीत्यर्थः । अधिकारादधिकृतविषयादेतच्छब्दाच्चकारादधीत इत्यध्ययनशब्दाच्चेति व्याख्यातम् । इदानीं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति—नन्विति । सर्वत्र ब्रह्मविद्यैकैव चेत्तया शिरोव्रतस्य संयोगाद्धर्मसंकरः स्यात्, नच सोऽस्तीति विद्याभेद इत्यर्थः । ब्रह्मविद्यैव प्रकृतेति ब्रह्मविद्यामिति तत्प्रकाशकमिमं ग्रन्थमिति योज्यम् । अन्यथा प्रकृतविषयतच्छब्दविरोधादित्याह—नेति । सूत्रावयवान्तरमवतारयति—सैव परामृश्यतामित्याशङ्क्य तस्याः सर्वत्रैक्यादथर्वविहितैवात्र परामृष्टव्येत्याह—प्रकृतत्वं चेति । सववच्चेति । तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र सववदिति निदर्शनमिति योजना । ततश्च शिरोव्रतस्य संकरो नेति चकारार्थः । तदेव विवृणोति—यथेति । सवा होमाः । आथर्वणैरुदित एकोऽग्निरेकर्षिसंज्ञया प्रसिद्धस्तेषामेव नियम्यन्ते यतस्तत्रैवाग्नौ क्रियन्ते । स्वाध्यायविशेषसंबन्धादेतच्छब्दादधीतिशब्दाच्च मुण्डकाध्ययनसंबन्धाधिगतेरिति यावत् । धर्मभेदस्य धर्म्यभेदकत्वं फलितमाह—तस्मादिति । नामादिवद्धर्मभेदस्यापि भेदकत्वायोगादित्यर्थः ॥ ३ ॥ किंच वेद्यैकत्वोक्त्या ब्रह्मविद्यायास्तावदैक्यं वेदो दर्शयति । तथान्यत्रापि वेद्याभेदेऽपि विद्यैक्यमित्याह—दर्शयति चेति । सूत्रं व्याचष्टे—दर्शयतीत्यादिना । वेदत्रयेऽपि विद्यैक्यधीरित्याह—विद्यैक्यविषयमुपदेशान्तरमाह—तथेति । किंच शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शादपि विद्यैक्यमित्याह—भेददर्शननिन्दार्थं तथेत्यादिना । एष पुरुषो यदा यस्यामविद्यावस्थायामेतस्मिन्नात्मन्यद्वयत्वेन सर्ववेदान्तप्रसिद्धे स्वाविद्यावशादेवान्तरं

कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य' (तै० २।७।१) इति । तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम् 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा० ५।१८।१) इति । तथा सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानायोपादानात्प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥ ४ ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥




एकोपास्त्यावनाहार्या आहार्या वा गुणाः श्रुतौ ॥ अनुक्तत्वादनाहार्या उपकारः श्रुतैर्गुणैः ॥ १ ॥
श्रुतत्वादन्यशाखायामाहार्या अग्निहोत्रवत् ॥ विशिष्टविद्योपकारः स्वशाखोक्तगुणैः समः ॥ २ ॥

इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञान उपसंहारो भवति । अर्थाभेदात् । य एव हि तेषां गुणानामेकत्रार्थो

रत्नप्रभाव्याख्या

पश्यत्यथ तदा तस्य संसारभयं भवत्येव, यस्माद्विदुषो नरस्य भेददर्शिनस्तदेव ब्रह्म भयंकरं भवति, ब्रह्मैवाहमित्यमन्वानस्येत्यर्थः । प्रादेशमात्रमुपास्त इति सिद्धवदुपादानं वैश्वानरविद्यैक्यं दर्शयतीत्याह—तथेति । किंच सर्वेषु वेदान्तेषूक्थादीनां प्रतीयमानत्वेन हेतुनैतदवगम्यते—अन्यत्रोक्तानां तेषामन्यत्रोपास्त्यर्थमुपादानमिति । ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं बाहुल्येन सिध्यतीत्याह—तथेति । ब्रह्मविद्यैक्यवदुक्थादिविद्यैक्यमित्यर्थः ॥ ४ ॥ सर्वशाखासु विद्यैक्यचिन्तायाः फलमाह—उपसंहार इति । शाखाभेदे समानविद्यायां श्रुता० गुणा यथाश्रुति व्यवस्थिता उत एकत्राश्रुता इतरशाखात उपसंहर्तव्या इति संदेहे विद्यैक्येऽपि तत्र तत्रोक्तैरेव गुणैर्विद्योपकारसिद्धेः शाखाभेदेन गुणा व्यवस्थिता इति पूर्वं पक्षः, तत्र प्रकृत विद्यैक्यचिन्तानैष्फल्यमिति फलम् । सिद्धान्तत्वेन सूत्रं व्याचष्टे—स्थिते चेत्यादिना । गुणानां गुण्य-

भामतीव्याख्या

भूयोभूयो विद्यैकत्वस्य वेददर्शनात्तत्रापि सगुणब्रह्मविद्यानां न साक्षाद्वेद एकत्वमाह तासामपि तत्रायपठितानां तद्विधानां प्रायदर्शनादेकत्वमेव । तथाग्रन्थप्राये लिखितं दृष्ट्वा भवेदयमप्यस्य इति बुद्धिरिति । यच्च काठकादिसमाख्ययोपासनाभेद इति तदयुक्तम् । एता हि पौरुषेय्यः समाख्याः काठकादिप्रवचनयोगात्तासां शाखानां न तूपासनानाम् । नह्येताः कठादिभिः प्रोक्ता नच काठाद्यनुष्ठानमासामितरानुष्ठानेभ्यो विशेष्यते । नच काठप्रोक्ततानिमित्तमात्रेण ग्रन्थे प्रवृत्ता तद्योगाच्च कथंचिल्लक्षणयोपासनासु प्रवृत्तौ संभवन्त्यामुपासनाभिधानमप्यासां शक्यं कल्पयितुम् । नच तद्भेदाभेदौ ज्ञानभेदाभेदप्रयोजकौ, मा भूद्यथास्त्वमासामभेदाज्ज्ञानानामेकशाखागतानामैक्यम् । कठादिपुरुषप्रवचननिमित्ताश्रिताः समाख्याः कठादिभ्यः प्राक् नासन्निति तन्निबन्धनो ज्ञानभेदो नासीदिदानीं चास्तीति दुर्घटमापद्येत । तस्माच्च समाख्यातो भेदः । अभ्यासोऽपि नात्र भेदकः । युक्तं यदेकशाखागतो यजत्यभ्यासः समिदादीनां भेदकं इति । तत्र हि विधित्वमौत्सर्गिकमज्ञातज्ञापनमप्रवृत्तप्रवर्तनं च कुप्येयाताम् । शाखान्तरे त्वध्येतृपुरुषभेदादेकत्वेऽपि नौत्सर्गिकविधित्वव्याकोप इति । अज्ञानिरपि न भेदहेतुः स्वाध्यायोऽध्येतव्य इति स्वशाखायामध्ययननियमः । ततश्च शाखान्तरीयानर्थानन्येभ्यस्तद्विद्भ्योऽधिगम्योपसंहरिष्यति । समाप्तिश्चैकस्मिन्नपि तत्संबन्धिनि समासे तस्य व्यपदिश्यते । यथाऽथर्वणे कर्मणि ज्योतिष्टोमस्य समाप्तिं व्यपदिशन्ति—'ज्योतिष्टोमः समासः' इति । तस्मात्समाप्तिभेदोऽपि न साधनमुपासनभेदस्य । तदेवमसति बाधके चोदनाद्यविशेषात्सर्ववेदान्तप्रत्ययानि कर्माणि तानि तान्येवेति सिद्धम् ॥ ४ ॥ कंचिद्विशेषमाशङ्क्य पूर्वतन्त्रप्रसाधितम् । यक्ष्यमाणार्थसिद्धवर्थमर्थमाह स्म सूत्रकृत् ॥ चिन्ताप्रयोजनप्रदर्शनार्थं सूत्रम्—उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । अत्रेदमा-

आनन्दगिरीयव्याख्या

दरमल्पमपि करोत्यथ तदा तस्यामवस्थायां तस्य भेददर्शनवतो भयमावश्यकं 'द्वितीयाद्वै भयं भवति' इति श्रुत्यन्तरादित्यर्थः । भेददर्शनवतो भयकारणमाह—तत्त्वेवेति । भेददर्शनवतो विदुषस्तत्त्वममन्वानस्य तदेव ब्रह्म भयंकरमित्यर्थः । निर्गुणविद्यायां वैधैकत्वादेकत्वेऽपि कथं सगुणविद्यायामेकत्वं, तत्राह—तथेति । एवं ब्रह्मविद्यैक्येऽपि कथमुक्थाद्युपास्तीनामैक्यं, तत्राह—तथेति । यथा निर्गुणं सगुणं च ब्रह्म सर्वत्रैकमिति तद्विद्या न भिद्यते तथोक्थादीनां सर्ववेदान्तप्रत्ययत्वादेतद्गम्यते । यदन्यत्रोक्तानामन्यत्रोपास्त्यर्थं तेषामादानमिति । ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं प्रायदर्शनन्यायेन बाहुल्येन सिध्यतीत्यर्थः ॥ ४ ॥ सर्वशाखासु विद्यैक्ये गुण्यानुक्तगुणानां तत्र तत्रोपसंहारमनन्तरविचारफलमाह—उपसंहार इति । संक्षेपतोऽधिकरणतात्पर्यमाह—इदमिति । पूर्वविचारफलमनेन सूत्रेणोच्यते तेन तद्देवास्य पादादिसंगतिः । पूर्वपक्षे पूर्वाधिकरणस्य विवक्षितफलासिद्धिः । सिद्धान्ते तस्य तत्सिद्धिः । गुणवर्धीबद्धा गुणा विपर्यासे किं यथाश्रुति व्यवतिष्ठेरन्नुत प्रत्यभिज्ञया ज्ञानोपायादुपसंह्रियेरन्निति मीमांसायामिच्छाभेदादनिराधे षोडशिग्रहवदुपसंहारस्यानावश्यकत्वाद्यथाश्रुति व्यवस्थेति प्राप्ते सिद्धान्तयत्युपसंहारः । समाने चेति विभागं विभजते—स्थिते चेति । तत्र हेतुमुक्त्वा व्याकरोति—अर्थेति । कथं व्यवस्थया श्रुतानां गुणानामुपकारित्वं, तत्राह—

विशिष्टविज्ञानोपकारकः स एवान्यत्रापि । उभयत्रापि हि तदेवैकं विज्ञानं तस्मादुपसंहारः । विधिशेषवत् । यथाहि विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहरणमेवमिहापि । यदि हि विज्ञानभेदो भवेत्ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः । विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ॥ ५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

३ अधिकरणम्

एका भिन्नाथवोद्गीथविद्या छान्दोग्यकाण्वयोः ॥ एका स्यान्नामसामान्यात्संग्रामादिसमत्वतः ॥ १ ॥
उद्गीथावयवोंकार उद्गातेत्युभयोर्भिदा ॥ वेद्यभेदेऽर्थवादादिसाम्यमत्राप्रयोजकम् ॥ २ ॥

वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' (बृ० १।३।१) 'ते ह वाचमूचुस्त्वं न उद्गाय' (बृ० १।३।२) इति प्रक्रम्य वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा

रत्नप्रभाव्याख्या

विनाभावादेतच्छाखास्था विद्या शाखान्तरोक्ततद्विद्यागुणवती, तदभिन्नत्वात्, तद्विद्यावदित्यनुमानाद्विद्यैक्ये गुणोपसंहारसिद्धिरित्यर्थः । प्रधानैक्ये तत्तदुपकारकाणामङ्गानामुपसंहारे दृष्टान्तमाह—**विधिशेषवदिति** । उक्तमेव व्यतिरेकमुखेनाह—**यदिहीति** । न चाग्नेययागावरुद्धानां गुणानां ततोऽभिन्ने सौर्ये प्राप्तिवद्विद्यान्तरस्थगुणानां विद्यान्तरे प्राप्तिः किं न स्यादित्यत आह—**प्रकृतीति** । प्रकृतिगुणानां विकारे प्राप्तिर्युक्ता विद्यानां तु प्रकृतिविकृतिभावासिद्धेर्न तत्प्राप्तिरित्यर्थः । नैवमिति गुणानुपसंहारो नेत्यर्थः । उत्तरसूत्राणामनेन सूत्रेण पौनरुक्त्यं वारयति—**अस्यैवेति** ॥ ५ ॥ पूर्वं चोदनाद्यविशेषादुक्तेर्गतो विद्यैक्यमुक्तं तस्यापवादं वक्तुमाह—**अन्यथात्वमिति** । अत्र वाजिनामुद्गीथब्राह्मणं छन्दोगानामुद्गीथाध्यायं च विषयमाह—**वाजेत्यादिना** । 'ते ह देवाः सात्त्विकवृत्तयः प्राणा अन्योन्यमूचुर्हन्तेदानीमस्मिन्यज्ञे उद्गीथेनोद्गात्रेण

भामतीव्याख्या

शङ्कते—भवतु सर्वशाखाप्रत्ययमेकं विज्ञानं तथापि शाखान्तरोक्तानां तदङ्गान्तराणां न शाखान्तरोक्ते तस्मिन्नुपसंहारो भवितुमर्हति । तस्यैकस्य कर्मणो यावन्मात्रमङ्गजातमेकस्यां शाखायां विहितं तावन्मात्रेणैवोपकारसिद्धेरधिकानपेक्षणात् । अपेक्षणे चाधिकमपि तत्र विधीयेत । नच विहितम् । तस्माद्यथा नैमित्तिकं कर्म सकलाङ्गविहितमपि अशक्तौ यावच्छक्यमङ्गमनुष्ठातुं तावन्मात्रजन्येनोपकारेणोपकृतं भवत्येवमिहाप्यङ्गान्तराविधानादेव भविष्यतीति । एवं प्राप्त उच्यते—सर्वत्रैकत्वे कर्मणः स्थिते गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते । नहि तदेव कर्म सत्तदङ्गमपेक्षते नापेक्षते चेति युज्यते । नैमित्तिके तु निमित्तानुरोधादवश्यकर्तव्ये सर्वाङ्गोपसंहारासंभवादुपकारावच्छेदः कल्प्यते । प्राकृतोपकारपिण्डे चोदकप्राप्ते आज्यभागविधानाद्गृहमेधीयेऽप्युपकारावच्छेदः स्यात् । इह तु शाखान्तरे कतिपयाङ्गविधानं तानि विधत्ते नेतराणि परिसंचष्टे । नच तदुपकारपिण्डे चोदकप्राप्ते आज्यभागवत्तन्मात्रविधानम् । तस्मात्तत्त्वेन कर्मणां सर्वाङ्गसङ्गम औत्सर्गिकोऽसति बलवति बाधके नापवदितुं युक्त इति ॥ ५ ॥

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्** । द्वया द्विप्रकाराः प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवाः, ज्यायसा असुराः शास्त्रजन्यया सात्त्विकया बुद्ध्या संपन्नाः । देवाः ते हि दीव्यन्त इति देवाः शास्त्रयुक्त्यपरिकल्पितमतयः । तत-

आनन्दगिरीयव्याख्या

**उभयत्रेति** । गुणिद्वारा गुणानामपि प्रत्यभिज्ञाने फलितमाह—**तस्मादिति** । अर्थाभेदादुपसंहारे दृष्टान्तमाह—**विधीति** । प्रधानप्रत्यभिज्ञायां सर्वतद्धर्मप्रत्यभिज्ञानात्फलाविशेषाच्च व्यवस्थया श्रुतानामपि गुणानामेकप्रधानोपाधावुपसंहार इति दार्ष्टान्तिकमाह—**एवमिति** । उक्तमेव व्यतिरेकतः स्फोरयति—**यदीति** । आग्नेयसौर्ययोर्भेदेऽप्याग्नेयगतस्यैनिकर्तव्यताजातस्य सौर्ये प्राप्तिवच्छाखान्तरस्थानामपि गुणानां शाखान्तरे प्राप्तिः स्यादित्याशङ्क्याह—**प्रकृतीति** । ज्ञानैक्येऽपि शाखान्तरोक्तगुणानां शाखान्तरोक्तज्ञाने नोपसंहारः । तत्रोक्तगुणमात्रेण तज्ज्ञानोपकारसिद्धेरधिकानपेक्षणात् । अन्यथा तत्रैव तद्विधिप्रसङ्गात् । तस्माद्व्यादित्यस्थानेनोक्तयोरहरहमितिगुणयोर्व्यवस्थानवदुपास्याभेदेऽपि शाखाभेदेनोक्तानां व्यवस्थैवेत्याशङ्क्य शाखाभेदस्योक्तस्थानवदुपास्यविशेषणतया व्यवस्थापकत्वाभावाद्धर्म्युपाधावुक्तगुणानां सर्वत्रापि श्रुतेन धर्मिणा नियमादनुमानतः सार्वत्रिकत्वसिद्धेर्विद्यैक्ये गुणोपसंहारो बाधकाभावे वारयितुं न शक्यते । शाखान्तरे कतिपयगुणवादस्य तद्विध्यर्थतया गुणान्तरावारकत्वादित्याह—**विज्ञानेति** । संज्ञाभेदाद्भेदे तूपसंहाराभावोक्तिः । इतिशब्दः सिद्धान्तसमाप्त्यर्थः । उत्तरसंदर्भस्य पौनरुक्त्यं प्रत्याह—**अस्यैवेति** ॥ ५ ॥ संज्ञाभेदाद्गुणानां चान्यत्रोपसंहार इत्युक्त उद्गीथविद्ययोरपि च्छान्दोग्यबृहदारण्यकोक्तयोः संज्ञाभेदमाशङ्क्य प्रत्याह—**अन्यथात्वमिति** । विषयमाह—चोदनाद्यविशेषादित्यस्यापवादार्थमिदमधिकरणम् । तस्य बृहदारण्यकस्थमुद्गीथब्राह्मणं छान्दोग्यस्थमुद्गीथाध्यायं च विषयमाह—**वाजसनेयक इति** । ते प्रकृता वागादयः प्राणा देवाः सात्त्विकवृत्तिप्रधानाः संभूयान्योन्यमुक्तवन्तो हन्त यदि संमतम्

मुख्यप्राणपरिग्रहः पठ्यते—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' ( बृ० १।३।७ ) इति । तथा छान्दोग्येऽपि—'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' ( छा० १।२।१ ) इति प्रक्रम्येतरान्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते—'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते । तत्र संशयः—किमत्र विद्याभेदः स्यादाहोस्विद्विद्यैकत्वमिति । किं तावत्प्राप्तं पूर्वेण न्यायेन विद्यैकत्वमिति । ननु न युक्तं विद्यैकत्वं प्रक्रमभेदात् । अन्यथा हि प्रक्रमन्ते वाजसनेयिनोऽन्यथा छन्दोगाः 'त्वं न उद्गाय' ( बृ० १।३।२ ) इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति । छन्दोगास्तूद्गीथत्वेन 'तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति । तत्कथं विद्यैकत्वं स्यादिति चेत् ।

रत्नप्रभाव्याख्या

कर्मणा रजस्तमोवृत्तिरूपानसुरानतीत्य देवत्वं गच्छामः' इति ते चैवं निर्दोषमुद्गीथकर्तारमुपास्यं निर्धारयितुं कृतसंवादाः प्रथमं वाचं परीक्षितवन्तस्त्वमौद्गात्रं नोऽस्माकं स्वीकुर्विति तयानृतं कृतं तथा घ्राणचक्षुःश्रोत्रमनांस्यपि कामेनासुरपाप्मना ग्रस्तानीति निन्दित्वा आसन्यमास्ये भवं मुखमध्यस्थं प्राणमुपास्यं निर्धारितवन्त इत्यर्थः । तत्तत्रान्योन्याभिभवात्मकयुद्धे प्रवृत्ते देवाः पूर्ववदुद्गीथमाहृतवन्तः अनेनोद्गीथेनैतानसुराञ्जयेमेत्यर्थः । भेदाभेदमानाभ्यां संशयमाह—तत्रेति । अत्र पूर्वाधिकरणसिद्धान्तन्यायेनोद्गीथविद्येति संज्ञैक्येन विद्यैक्यमिति पूर्वपक्षे मिथो गुणोपसंहारः फलं, सिद्धान्ते संज्ञैक्येऽपि विद्यैक्यापवादादनुपसंहार इति । एवं यत्र पूर्वन्यायेन पूर्वपक्षः तत्रापवादिकी संगतिरिति मन्तव्यम् । सूत्रस्थसिद्धान्तिशङ्काभागं व्याचष्टे—ननु न युक्तमिति । संपूर्णोद्गीथकर्मकर्ता प्राणो वाजिनामुपास्यः, उद्गायेति कर्तृशब्दाच्छन्दोगानां तूद्गीथावयव ॐकारः प्राणदृष्ट्योपास्यः, ॐमित्येतदक्षरमुद्गीथमित्युपक्रम्य प्राणमुद्गीथमिति कर्मरूपत्वशब्दात्, तथाच कर्तृकर्मणोरुपास्ययोर्भेदाद्विद्ययोरन्यथात्वं भेद इति शङ्कार्थः । उद्गीथत्वेनेति ॐकारत्वेनेत्यर्थः । अल्परूपभेदो न

भामतीव्याख्या

सद्वृत्तिप्रधाना असुरा असुभिः प्राणैरनिन्द्रियैरगृहीतैस्तेषु तेषु विषयेषु रमन्त इत्यसुरा अतएव ते ज्यायांसो यतोऽमी तत्त्वज्ञानवन्तः । कनीयसास्तु देवाः । अज्ञानपूर्वकत्वात्तत्त्वज्ञानस्य । प्राणस्य प्रजापतेः सात्त्विकवृत्त्युद्भवस्तामसवृत्त्यभिभवः कदाचित् । कदाचित्तामसवृत्त्युद्भवोऽभिभवश्च सात्त्विकया वृत्तेः । सेयं स्पर्धा । ते ह देवा ऊचुः, हन्त असुरान् यज्ञ उद्गीथेनात्ययाम असुराञ्जयामास्मिन्नाभिचारिके यज्ञ उद्गीथलक्षणसामभक्त्युपलक्षितेनौद्गात्रेण कर्मणेति । ते ह वाचमूचुरित्यादिना संदर्भेण वाक्प्राणचक्षुःश्रोत्रमनसामासुरपाप्मविद्धतया निन्दित्वा अथ हेममासन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यं प्राणं प्राणाभिमानवतीं देवतामूचुस्त्वम् उद्गायेति । तथेत्यभ्युपगम्य तेभ्य एव प्राण उदगायत् तेऽसुरा विदुरनेन प्राणेनोद्गात्रा नोऽस्मान् देवा अत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन्नसुरा यथाश्मानमृत्वा प्राप्य मृल्लोष्टो वा विध्वंसत एवं विध्वंसमाना विष्वञ्चोऽसुरा विनेशुः । तदेतत् संक्षिप्याह—वाजसनेयक इति । तथा छान्दोग्येऽप्येतदुक्तमित्याह—तथा छान्दोग्येऽपीति । विषयं दर्शयित्वा विमृशति—तत्र संशय इति । पूर्वपक्षं गृह्णाति—विद्यैकत्वमिति । पूर्वपक्षमाक्षिपति—ननु न युक्तमिति । एकत्रो-

आनन्दगिरीयव्याख्या

नदास्मिन्नाभिचारिके यज्ञे वयमुद्गीथाख्यभक्तिलक्षितेनौद्गात्रेण कर्मणा तमोवृत्तिप्रधानानसुरानतीत्य स्वमहत्वादिभावमयामेति । ते चैवं कृतसंवादा वाचमौद्गात्रे कर्मणि प्रधानां त्वमस्मदर्थमौद्गात्रं निर्वर्तयेति नियुक्तवन्तस्तथोपक्रम्य वागादीन्घ्राणप्राणचक्षुःश्रोत्रमनांसि पाप्मना ह्येषा विद्धेत्यादिना पाप्मविद्धत्वेन निन्दित्वा तेषामध्येयत्वं निर्धार्य मुख्यप्राणस्योपास्यत्वं न निश्चित्य तत्परिग्रहः श्रूयत इत्यर्थः । वागादीनामनुपास्यत्वनिश्चयानन्तरमित्यथशब्दार्थः । आसन्यमास्ये भवं मुखान्तर्बिलस्थं प्राणं मुख्यप्राणाभिमानिनीं देवतामिति यावत् । उद्गीथमाहरणमुक्त्वोद्गीथाध्यायं कथयति—तथेति । तत्तत्रान्योन्याभिभवात्मके संग्रामे देवाः पूर्ववदुद्गीथलक्षितं कर्माहृतवन्तः । अनेन कर्मणैनानसुरान्स्वाभाविकेन्द्रियवृत्तिलक्षणानभिभविष्याम इत्यभिप्रेत्य कर्मारब्धवन्त इत्यर्थः । तथैवेत्युद्गीथमाहृतवन्त इत्यर्थः । आख्यायिकैव श्रुता न विद्याविधिरित्याशङ्क्य ब्राह्मणाध्याययोर्विवक्षितमर्थमाह—उभयत्रेति । शाखाद्वयस्थोद्गीथविद्यां विषयमुक्त्वा विचारबीजं संशयमाह—तत्रेति । भेदाभेदमानाभ्यां तमेव विशदयति—किमिति । विमृश्य पूर्वपक्षयति—किं तावदिति । पूर्वत्राख्याविशेषाद्विद्यैक्यमुक्तं तद्वदत्राप्युद्गीथविद्येत्याख्याविशेषादैक्यमित्यर्थः । अत्र चोपास्तिभेदोक्त्या वाक्यार्थधीहेतोरेव निरूपणात्पादादिसंगतयः । पूर्वपक्षे गुणोपसंहारः सिद्धान्ते तदसत्त्वेनेति फलभेदः । अन्यथात्वमित्यादिसैद्धान्तिकीं शङ्कां व्याकुर्वन्पूर्वपक्षमाक्षिपति—नन्विति । प्रक्रमभेदादित्युक्तं व्यनक्ति—अन्यथा हीति । कथमुभयत्र प्रक्रमस्यान्यथात्वं, तत्राह—त्वमिति । उद्गीथस्येति । सर्वस्या भक्तेरिति यावत् । उद्गीथत्वेनेति । तदवयवो योऽयमोंकारस्तथात्वेनेत्यर्थः । उद्गानवता प्राणो वाजसनेयके ध्येयत्वेनोच्यते छान्दोग्ये त्वोंकारः प्राणदृष्ट्योपास्य इष्टः । तथाच कर्तृकर्मणोर्भेदाद विद्यैक्यमिति फलितमाह—तदिति ।

नैष दोषः । न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति । अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात् । तथाहि—देवासुरसंग्रामोपक्रमत्वमसुरात्ययाभिप्राय उद्गीथोपन्यासो वागादिसंकीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रयस्तद्वीर्याच्चासुरविध्वंसमश्मलोष्टनिदर्शनेनेत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि चोद्गीथसामानाधिकरण्यं प्राणस्य श्रुतम्—'एष उ वा उद्गीथः' ( बृ० १।३।२३ ) इति । तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम् । तस्माच्च विद्यैकत्वमिति ॥ ६ ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

न वा विद्यैकत्वमत्र न्याय्यं विद्याभेद एवात्र न्याय्यः । कस्मात् । प्रकरणभेदादिति । प्रक्रमभेदादित्यर्थः । तथाहि—इह प्रक्रमभेदो दृश्यते । छान्दोग्ये तावत्—'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा० १।१।१ ) इत्येवमुद्गीथावयवस्योंकारस्योपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानं तत्र कृत्वाथ 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' ( छा० १।१।१० ) इति पुनरपि तमेवोद्गीथावयवमोंकारमनुवर्त्य देवासुराख्यायिकाद्वारेण तम् 'प्राणमुद्गीथमुपासांचक्रिरे' ( छा० १।२।२ ) इत्याह । तत्र यद्युद्गीथशब्देन सकला भक्तिरभिप्रेयेत तस्याश्च कर्तोद्गातर्त्विक्तत उपक्रमश्चो-

---

रत्नप्रभाव्याख्या

विद्यैक्यविरोधीत्युक्तन्यायेन पूर्वपक्षी परिहरति—**नैष इति** । असुरात्ययाभिप्रायः असुरजयार्थसंवादः, यथाश्मानं प्राप्य लोष्टो विध्वंसते तथा प्राणं हन्तुमागता असुरास्तस्य वीर्येण स्वयमेव ध्वस्ता इति श्रुतमुभयत्रेत्यर्थः । अल्परूपभेदमङ्गीकृत्यापि विद्यैक्यमुक्तं सोऽपि नास्तीत्याह—**वाजेति** । उद्गीथरूपत्वेन प्राणस्योभयत्र श्रुतत्वादेकत्र श्रुतं कर्तृत्वमुभयत्र द्रष्टव्यमित्यर्थः ॥ ६ ॥ बहुविरुद्धरूपभेदात् न विद्यैक्यमिति सिद्धान्तयति—**न वेति** । अक्षरं विशिनष्टि—**उद्गीथमिति** । तदवयवमित्यर्थः । पृथिव्यादिरसानां रसतम ॐकारः, आप्तिः समृद्धिरिति गुणायुक्ता गुणवत्योङ्कारे प्राणदृष्टिविधानायाख्यायिका प्रस्तुतेत्याह—**रसतमेति** । ननु वाजिवाक्यैकवाक्यत्वार्थं छान्दोग्योपक्रमस्थमुद्गीथपदं संपूर्णसामभक्तिपरमस्तु, प्राणमुद्गीथमित्यत्राप्युद्गीथकर्ता प्राण उपास्य इति व्याख्यायतामित्यत आह—**तत्र यद्युद्गीथेति** । ॐकार-

भामतीव्याख्या

द्गातृत्वेनोच्यते प्राण एकत्र चोद्गानत्वेन क्रियाकर्मोश्च स्फुटो भेद इत्यर्थः । समाधत्ते—**नैष दोष इति** । बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञायमानं किंचिल्लक्षणया नेतव्यम् । न केवलं शाखान्तरे, एकस्यामपि शाखायां दृष्टमेतच्च तत्र विद्याभेद इत्याह—**वाजसनेयकेऽपि चेति** । बहुतररूपप्रत्यभिज्ञानानुग्रहाय चोमित्यनेनापि उद्गीथावयवेन उद्गीथ एव लक्षणीय इति पूर्वपक्षः ॥ ६ ॥ **न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्** । बहुतरप्रत्यभिज्ञानेऽपि उपक्रमभेदात्तदनुरोधेन चोपसंहारवर्णनादेकस्मिन्नक्षे ॐकारस्योत्तस्यैव चोद्गीथस्य पुनःपुनः संकीर्तनाल्लक्षणायां च छान्दोग्ये वाजसनेयके प्रमाणाभावाद्विद्याभेद इति राद्धान्तः ।

आनन्दगिरीयव्याख्या

बहुतररूपप्रत्यभिज्ञानादप्रत्यभिज्ञानं किंचिल्लक्षणया नेयमिति मत्वा समाधत्ते—**नेत्यादिना** । अविशेषादित्येतद्व्याचष्टे—**नहीति** । एतावता कञ्चित्कर्मरूपत्वेनोपास्यत्वं कर्तृत्वेनान्यत्रेत्येतावन्मात्रेणेत्यर्थः । बहुतराविशेषप्रतीतिमेव प्रकटयति—**तथाहीति** । यथाश्मानं पापाणं प्राप्य मृत्स्नालोष्टो विध्वंसत एवं विध्वंसमाना विष्वञ्चो विनेशुरिति श्रूयत इत्याह—**तदिति** । अविशेषधियं निगमयति—**इत्येवमिति** । न केवलं शाखान्तरे रूपभेदो दृष्टः किं त्वेकस्यामपि । तथापि न तत्र विद्याभेदस्तथोभयोरपि स्यादित्याह—**वाजेति** । प्राणस्योद्गीथत्वमत्रापि श्रुतं चेत्कथमुपास्तिः, तत्राह—**तस्मादिति** । उद्गीथत्वेन श्रुतेरुभयत्राविशेषाच्चेदेकत्र कर्तृत्वं तदितरत्रापि लक्ष्यं, तथाच प्राणस्य कर्तृत्वेन कर्मत्वेन च ध्यानं शास्त्रादित्यर्थः । उभयत्रापि वेद्यरूपाविशेषे प्रतिज्ञां फलितमाह—**तस्माच्चेति** ॥ ६ ॥ विद्यैक्ये पूर्वपक्षे तद्भेदं सिद्धान्तमाह—**न वेति** । वाशब्दस्यावधारणार्थत्वमुपेत्य प्रतिज्ञां व्याचष्टे—**नेति** । अत्रेति प्रकृतशाखाद्वयोक्तिः । उभयत्रापि प्राणस्योद्गीथत्वतत्कर्तृत्वाविशेषस्योक्तत्वाद्विद्याभेदेन विद्याभेदे संभवति कुतस्तद्भेदोक्तिरिति शङ्कते—**कस्मादिति** । तत्र हेतुः—**प्रकरणेति** । शाखाभेदादेव प्रकरणभेदसिद्धेर्न तस्य धीभेदे प्रयोजकत्वमित्याशङ्क्याभीष्टमर्थमाह—**प्रक्रमेति** । शाखाद्वये तद्भेदं विवृणोति—**तथाहीति** । छान्दोग्यगतमुपक्रमप्रकारं दर्शयति—**छान्दोग्य इति** । उपक्रमवाक्यस्यार्थमाह—**उद्गीथेति** । प्रकरणविच्छेदाभावं वक्तुं तदनुसंधत्ते—**रसेति** । भूतपृथिव्योषधिपुरुषवाग्ऋक्सामोद्गीथानां पूर्वस्य पूर्वस्योत्तरमुत्तरं सारतयोक्त्वा तेषामोंकारं रसतमत्वेन निर्दिश्य तमेव पुनराप्तिसमृद्ध्यादिगुणकत्वेनोदीर्य ध्येयमाख्यायिकया निर्धार्योद्गीथोपास्तिरवतारितेत्यर्थः । ननु वाजसनेयके यथोद्गीथेनात्ययामेत्यत्रोद्गीथशब्देन सकला भक्तिरुक्ता स्यं न उद्गायेत्यनेनापि प्राणत्वेनोद्गातोच्यते एवमोमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रमवाक्यस्थोद्गीथशब्देन सकला भक्तिस्तस्याश्च कर्तोद्गाता प्राणत्वेनोच्यतां तथाच प्रक्रमाभेदाद्विद्यैक्यं, तत्राह—**तत्रेति** । ऋत्विक्प्राणत्वेन निरूप्येतेति शेषः । तस्मिन्पक्षे यद्युद्गीथावयवस्य

परुध्येत लक्षणा च प्रसज्येत । उपक्रमानुरोधेन चैकस्मिन्वाक्य उपसंहारेण भवितव्यम् । तस्मादत्र तावदुद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते वाजसनेयके तूद्गीथशब्देनावयवग्रहणे कारणाभावात्सकलैव भक्तिरावेद्यते । 'त्वं न उद्गाय' (बृ० १।३।२) इत्यपि तस्याः कर्तोद्गातृत्विक्प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम् । यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य तदप्युद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विधेयैकत्वमावहति । सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम् । नच प्राणस्योद्गातृत्वमसंभवेन हेतुना परित्यज्यत उद्गीथभाववदुद्गातृभावस्याप्युपासनार्थत्वेनोपदिश्यमानत्वात् । प्राणवीर्येणैव चोद्गातौद्गात्रं करोतीति नास्त्यसंभवः । तथाच तत्रैव श्रावितम्—'वाचा च ह्येव स प्राणेन चोद्गायत्' (बृ० १।३।२४) इति । नच विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छायानुकारमा-

रत्नप्रभाव्याख्या

रोपास्त्युपक्रमभङ्ग उद्गीथपदे कर्तृलक्षणा चेति दोषद्वयं स्यादित्यर्थः । ननु सिद्धान्तेऽपि तत्पदेऽवयवलक्षणा स्वीकार्या ततो वरं कर्तृलक्षणा श्रुत्यन्तरानुग्रहात्तथा चोपसंहारे कर्तृप्राणोपास्तिनिश्चयादुपक्रमेऽपि तन्निश्चय इत्यत आह—उपक्रमेति । संदिग्धोपक्रमो हि वाक्यशेषान्निश्चीयते । यथा 'अक्ताः शर्कराः' इत्यत्राञ्जनद्रव्यसंदेहे 'तेजो घृतम्' इति शेषान्निश्चयः । इह तूपक्रमेऽक्षरस्योपास्यत्वं निश्चितं, तत्समानाधिकरणोद्गीथपदस्यावयवलक्षणा च विनिश्चितेति प्राणमुद्गीथमित्युपसंहारस्तदेकार्थतया नेय इत्यर्थः । एवं छान्दोग्ये ॐकार उपास्य उक्त इतरत्र तु प्राण इत्युपास्यभेदाद्विद्याभेद इत्याह—वाजेति । यदुक्तं वाजिश्रुतावपि प्राणस्योद्गीथरूपत्वश्रुतेरुपास्यैक्यमिति तद्दूषयति—यदपीत्यादिना । तत्रोद्गीथ उपास्यतया नोक्तः किंतु प्राणस्योपास्यस्य गुणतयेत्यर्थः । किंचोद्गीथ ॐकारश्छान्दोग्येऽत्रतु भक्तिरित्युपास्यभेद इत्याह—सकलेति । प्राणस्य जडत्वान्नोद्गातृत्वं किंतूद्गीथत्वमेव वाजिभिरपि ग्राह्यमित्यैक्यमाशङ्क्याह—नचेति । स उद्गाता वाग्निशिष्टप्राणेनौद्गात्रं कृतवानिति श्रुतेरसंभवो-

भामतीव्याख्या

पास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानमोङ्कारस्य । तथाहि—भूतपृथिव्योषधिपुरुषवागृक्साम्नां पूर्वस्योत्तरमुत्तरं रसतया सारतयोक्तम् । तेषां सर्वेषां रसतम ओंकार उक्तश्छान्दोग्ये । नच विवक्षितार्थभेद इति । एकत्रोद्गीथोद्गातारावुपास्यत्वेन विवक्षितावेकत्र तदवयव ॐकार इति । तथा ह्यभ्युदयवाक्ये इति । एवं हि श्रूयते—'त्रिधा एतं प्रजया पशुभिर्भयानि वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय श्रृते चरुम्' इति । तत्र संदेहः—किं कालापराधे यागान्तरमिदं चोद्यत उत तेष्वेव कर्मसु प्रकृतेषु कालापराधे निमित्ते देवतापनय इति । एष तावदत्र विषयः—अमावास्यायामेव दर्शकर्मार्थं वेदिक्रियाग्निप्रणयनक्रिया व्रतादिश्च यजमानसंस्कारः । दध्यर्थश्च दोहः । प्रतिपदि च दर्शकर्मप्रवृत्तिरित्यनुष्ठानक्रमस्ताल्विकः । यस्य तु यजमानस्य कृतभ्रिक्रमनिबन्धनाच्चतुर्दश्यामेवामावास्याबुद्धौ प्रवृत्तप्रयोगस्य चन्द्रमा अभ्युदीयते, तमिदं श्रूयते—'यस्य हविर्निरुप्तम्' इति । तेन यजमानेनाभ्युदितेनामावास्यायामेव निमित्ताधिकारं परिसमाप्य पुनस्तदहरेव वेद्युद्धरणादिकर्म कृत्वा प्रतिपदि दर्शः प्रवर्तयितव्यः । तत्राभ्युदये किं नैमित्तिकमिदं कर्मान्तरं दर्शाच्चोद्यत उत तस्मिन्नेव दर्शकर्मणि पूर्वदेवतापनयनेन देवतान्तरं विधीयत इति । तत्र हविर्भागमात्रश्रवणाच्चरुविधानसामर्थ्याच्च कर्मान्तरम् । यदि हि पूर्वदेवताभ्यो हवींषि विभजेदिति श्रूयेत ततस्तान्येव हवींषि देवतान्तरेण युज्यमानानि न कर्मान्तरं गमयितुमर्हन्ति किंतु प्रकृतमेव कर्म तद्व्यतिक्रमपनीतपूर्वदेवताकं देवतान्तरयुक्तं स्यात् । अत्र पुनस्त्रेधा तण्डुलान् विभजेदिति हविष एव मध्यमादिक्रमेण विभागश्रवणादनपनीता हविषि पूर्वदेवता इति पूर्वदेवतावरुद्धे हविषि देवतान्तरमलब्धावकाशं श्रूयमाणं कर्मान्तरमेव गोचरयेत् । अपिच प्राप्ते पूर्वस्मिन् कर्मणि

आनन्दगिरीयव्याख्या

मोंकाराख्यमक्षरं तत्र प्राणदृष्टिरनुष्ठेयेत्युपक्रमो बाध्येतेत्यर्थः । चकारो वक्ष्यमाणदोषसमुच्चये । यदुद्गीथावयवभूतमोंकाराख्यमक्षरं तद्विषयोद्गीथशब्दस्योद्गातृवाचित्वाभावात्तेनोद्गातुर्लक्ष्यत्वमपि ते स्यादित्याह—लक्षणेति । अक्ताः शर्करा उपदधातीत्यस्य तेजो वै घृतमिति शेषान्निर्णयवत्प्राणमुद्गीथमुपासीतेति इति सकलभक्तिविषयोपसंहारादुपक्रमो नीयतामित्याशङ्क्याह—उपक्रमेति । तस्य संदिग्धार्थत्वाभावात्स्यादुपसंहारापेक्षा । प्रकृते तूपक्रमस्यातिस्पष्टत्वाद्विपर्ययमित्यर्थः । ओमित्येतदक्षरमित्यादौ सर्वदि कोऽर्थः स्यादित्याशङ्क्याह—तस्मादिति । उद्गीथेनात्ययामेत्यत्रापि तदवयवस्योद्गीथशब्दवाच्यत्वानुग्राहकेन प्रक्रमभेदोऽस्तीत्याशङ्क्याह—वाजेति । ओमित्येतदक्षरमित्युपक्रमस्यावयवार्थत्वात्तदुद्गीथमित्युद्गीथशब्देनावयवो गृहीतः । उद्गीथेनात्ययामेत्यत्र तु तथा दृष्टः सकलभक्तिविषयत्वमेव गम्यत इत्यर्थः । यदुक्तमिहापि नोद्गातुरस्ति धीरिति, तत्राह—त्वमिति । कथं प्राणस्योद्गीथकर्तृत्वमुद्गीथेन सामानाधिकरण्यश्रवणात्तयो वैधर्म्यादित्येवं, तत्राह—यदपीति । तत्रेति वाजसनेयकोक्तिः । इतश्च नेदं सामानाधिकरण्यं विधेयैक्यमित्याह—सकलेति । तत्रेति सामानाधिकरण्यवाक्योक्तिः । अपिचोद्गीथेनात्ययामेति वाक्यव्याख्यानार्थः । वैषम्यमनुभवश्च विद्यानानात्वम् । प्राणस्याचेतनत्वान्नोद्गातृत्वमित्याशङ्क्याह—नचेति । असंभवमनूद्यास्य वागनिमित्तमुद्गातृत्वमित्युक्तं संभवसंभवोऽपि नास्तीत्याह—प्राणेति । औद्गात्र-

त्रेण समानार्थत्वमध्यवसातुं युक्तम् । तथाह्यभ्युदयवाक्ये पशुकामवाक्ये च—'त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' इत्यादिनिर्देशसाम्येऽप्यु-

रत्नप्रभाव्याख्या

ऽपि नेत्यर्थः । यदुक्तं बहुतरार्थाविशेषाद्धि विद्यैक्यमिति, तत्राह—**नचेति** । एकत्रोद्गाता प्राण उपास्योऽन्यत्रोद्गार इत्यन्तरङ्गोपास्यरूपभेदे स्पष्टे सति बहिरङ्गार्थवादसाम्यमात्रेण नोपासनैक्यं युक्तमित्यर्थः । वाक्यसाम्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह—**तथाहीति** । 'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपलं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्' इत्यभ्युदयवाक्यम् । अस्यार्थः—यस्य यजमानस्य चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शकर्मार्थं प्रवृत्तस्य पुरस्तात्पूर्वं हविस्तण्डुलदधिपयोरूपं निरुप्तं दर्शदेवताभ्योऽग्न्यादिभ्यः सङ्कल्पितं चन्द्रमाश्च पश्चादभ्युदेति तमेतं यजमानं कालव्यत्ययापराधात्तदेव निरुप्तं हविः प्रजादिनार्धयति वियोजयति शत्रुं चास्य वर्धयति यस्मात्कालभ्रान्तिमान्यजमानः, ये मध्यमादिभावेन त्रेधा भूतास्तण्डुला दध्यादिसहिता निरुप्तास्तान्विभजेदग्न्यादिभ्यो वियोजयेद्वियोज्य च दातृत्वादिगुणकाग्न्यादिभ्यो दर्शदेवभिन्नेभ्यो निर्वपेदिति दधन् दधनि स्थविष्ठतण्डुलचरुं शृते दुग्धेऽणिष्ठचरुमित्यर्थः । अत्र कालापराधे देवान्तरयुक्तं प्रायश्चित्तरूपं दर्शाद्भिन्नं कर्म विधीयत इति प्राप्ते तण्डुलत्रेधात्वाद्यनुवादेन विभजेदिति हविषः प्रकृतदेववियोगेन तस्मिन्नेव दर्शकर्मणि देवतान्तरसंबन्धमात्रविधानं न कर्मान्तरमिति सिद्धान्तितम् । एवम-

भामतीव्याख्या

दध्नस्तण्डुलानां पयसस्तण्डुलानां चेन्द्रादिदेवतासंबन्धश्च विधातव्यः । चरुत्वं चात्र विहितं नास्तीति तदपि विधातव्यम् । तथा प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यं भिद्येत । कर्मान्तरं त्वपूर्वं शक्यमेकेनैव प्रयत्नेनानेकगुणविशिष्टं विधातुमिति निमित्ते कर्मान्तरमेव विधीयते । दर्शस्तु लुप्यते कालापराधादिति प्राप्त उच्यते—न कर्मान्तरम् । पूर्वदेवतातो हविषो विभागपूर्वं निमित्ते देवतान्तरविधानात् । चरुत्वस्य चार्थप्राप्तेः । भवेदेतदेवं यदा त्रेधा तण्डुलान् विभजेदिति तण्डुलानां त्रेधा विभागविधानपरमेतद्वाक्यं स्यादपि तु वाक्यान्तरप्राप्तं तण्डुलानां त्रेधात्वमनूद्य विभजेदित्येतावद्विधत्ते तत्र वाक्यान्तरालोचनया पूर्वदेवताभ्य इति गम्यते । तण्डुलानिति त्वविवक्षितं हविरुभयत्ववत् । तथा च ये मध्यमा इत्यादीनि वाक्यान्यपनीते पूर्ववत् देवतासंबन्धे हविषस्तस्मिन्नेव कर्मण्यप्रत्यूहं देवतान्तरसंबन्धं विधातुं शक्नुवन्ति । तथाच द्रव्यमुखेन प्रकृतमुखप्रत्यभिज्ञानात् देवतान्तरसंबन्धेऽपि न कर्मान्तरकल्पना भवितुमर्हति । ततश्च समासेऽपि नैमित्तिकाधिकारे नित्याधिकारसिद्ध्यर्थं तान्येव पुनः कर्माण्यनुष्ठेयानि । नच दधनि चरुमिति चरुसमर्थयोर्विधानं तयोरप्यर्थप्राप्तत्वात् । प्रकृते हि कर्मणि तण्डुलपेषणप्रथनं पुरोडाशपाकादि दधिपयसी च प्राप्तानि तत्राभ्युदयनिमित्ते दधियुक्तानां पयोयुक्तानां च तण्डुलानां विभजेदिति वाक्येन पूर्वदेवतापनयं कृत्वा ये मध्यमा इत्यादिभिर्वाक्यैर्देवतान्तरसंबन्धः कृतः । नच प्रभूतदधिपयःसंसक्तैरल्पैस्तण्डुलैः पुरोडाशक्रिया संभवति । इति पुरोडाशनिवृत्तौ तदर्थस्य प्रथनस्या-

आनन्दगिरीयव्याख्या

मुद्गाता प्राणवीर्येण करोतीत्येतदेव कथं, तत्राह—**तथाचेति** । तत्रैवेत्युद्गीथप्रकरणोक्तिः । उद्गाता प्राणप्रधानया वाचा कृतवानोङ्कारमिति श्रुत्यर्थः । यत्तु बहुतरार्थाविशेषाद्विद्यैक्यमिति, तत्राह—**नचेति** । वाजसनेयके तावदुद्गीथोद्गातारौ ध्येयत्वेनोच्येते छान्दोग्ये त्वोंकारस्तदवयवः प्राणदृष्ट्योपास्य उक्तः । एवं विवक्षितार्थस्यान्तरङ्गोपास्यस्वरूपस्य भेदे गम्यमाने बहिरङ्गादर्थवादाविशेषादैकार्थ्येन विद्यैक्यमित्यर्थः । वाक्यसादृश्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह—**तथाहीति** । चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शार्थं प्रवृत्तयजमानस्य चन्द्रमाः पश्चादभ्युदेति तद्विषयं वाक्यमभ्युदयवाक्यम् । तस्मिन्वाक्ये पशुकामस्येष्टिविधायके च वाक्ये यद्यपि त्रेधा तण्डुलान्विभजेदित्यादिनिर्देशस्तुल्यस्तथापि 'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति' इति कालातिक्रमापराधेनोपक्रमादभ्युदयवाक्ये नित्ये दर्शकर्मण्येव पूर्वदेवताभ्यो हविषामपनयनेन दातृत्वादिगुणविशिष्टदेवतान्तराङ्गीकारः । पशुकामवाक्ये च 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' इति नित्यं दर्शकर्म परिसमाप्य पुनर्दोहार्थं वत्सापाकरणविध्युपक्रमात्पशुकामस्येष्ट्यन्तरविधानमुपगतम् । न तु वाक्यद्वये निर्देशस्य सादृश्यमात्रेणार्थैक्यं प्रक्रमभेदादर्थभेदनिश्चयात् । तथा प्रकृते शाखाद्वये बहुतरार्थवादिकसादृश्येऽपि पूर्वोक्तप्रक्रमभेदाद्विद्याभेद इत्यक्षरार्थः । एतदुक्तं भवति—'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्' इत्यत्र यस्य यजमानस्य पुरस्तात्पूर्वं हविर्निरुप्तं देवतार्थं संकल्पितं चन्द्रमाश्च पश्चादाभिमुख्येनोदेति तमेतं यजमानं निरुप्तं हविः प्रजादिना विनाशयति शत्रुं चास्य वर्धयति । तथाचासौ चतुर्दश्याममावास्याभ्रान्तिभागी मध्यमादिभावेन त्रेधाभूता ये तण्डुलास्तानग्न्यादिभ्यो दर्शदेवताभ्यो विभजेद्विभज्य च दातृत्वादिगुणवदग्न्यादिभ्यो देवताभ्यो निर्वपेदित्येवमर्थायां श्रुतौ किमभ्युदये नैमित्तिकं कर्मान्तरं दर्शाङ्गोदितं किं दर्शकर्मण्येव पूर्वदेवतात्यागेन देवतान्तरं विधीयत इति संदेहे त्रेधा तण्डुलान्विभजेदिति हविषामेव मध्यमादिक्रमेण विभागवचनात्पू-

पक्रमभेदादभ्युदयवाक्ये देवतापनयोऽध्यवसितः, पशुकामवाक्ये तु यागविधिः । तथेहाप्युपक्रमभेदाद्विद्याभेदः । परोवरीयस्त्वादिवत् । यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' (छा० १।९।१) 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा० १।९।२) इति परोवरीयस्त्वगुणविशिष्टमुद्गीथोपासनमक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नम् । न चेतरेतरगुणोपसंहार एकस्यामपि शाखायां तद्वच्छाखान्तरस्थेष्वप्येवंजातीयकेषूपासनेष्विति ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत संज्ञैकत्वाद्विद्यैकत्वमत्र न्याय्यमुद्गीथविद्येति ह्युभयत्राप्येका संज्ञेति । तदपि नोपप-

---

रत्नप्रभाव्याख्या

भ्युदयवाक्ये कालापराधेनोपक्रमाद्दर्शकर्मण्येव हविषः पूर्वदेवताभ्योऽपनयो वियोगोऽध्यवसितः, पशुकामवाक्ये तु यद्यपि ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति निर्देशोऽभ्युदयवाक्येन समोऽस्ति, तथापि यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यादिति नित्यं दर्शकर्म समाप्य पुनर्दोहार्थं वत्सापाकरणविध्युपक्रमात्पशुकामस्य यागान्तरविधिरेव नाभ्युदयवाक्येनार्थैक्यमिति तथा प्रकृतेऽपि निर्देशसाम्यं न विद्यैक्यप्रयोजकमित्यर्थः । वत्सानपाकुर्यान्मातृदेशाद्देशान्तरं नयेदित्यर्थः । सूत्रोक्तं दृष्टान्तं व्याचष्टे—**परोवरीयस्त्वादिवदिति** । पर इति सकारान्तं परस्तात् परश्चासौ वराच्च वरतर इति परोवरीयानित्येकं पदम् । अनन्तश्च आकाशाख्यः परमात्मा तद्दृष्ट्यालम्बनत्वादुद्गीथस्तथोक्त इत्यर्थः । आकाशात्मना हिरण्यश्मश्रुपुरुषात्मना चोद्गीथोपास्तिसाम्येऽपि विद्याभेदवदिहापि भेद इत्यर्थः ॥ ७ ॥ संज्ञैक्यं पूर्वपक्षबीजमुद्भाव्य दूषयति—**संज्ञात इति** । उपास्यरूपभेदाद्विद्यानानात्वं यदुक्तं तच्छ्रुत्यक्षरानुगतं बलवत्, संज्ञा तु पौरुषेयी दुर्बलेत्यर्थः । संज्ञैक्यं कर्मैक्यव्यभिचारि

भामतीव्याख्या

निवृत्तिरनिवृत्तस्तु पाकोऽपवादाभावात्तथा चार्थप्राप्तश्चोद्यते । भवतु वा अनेकवाक्यकल्पनम् । प्रकृताधिकारावगमबलादस्यापि न्याय्यत्वादिति । तस्मात्तदेवेदं कर्म न तु कर्मान्तरमिति सिद्धम् । पशुकामवाक्ये त्वपूर्वकर्मविधिरभ्युदयवाक्यसारूप्येऽपि । 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्याद्ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति । अत्र हि अमावास्यामिष्ट्वेति समाप्ते यागे पशुकामेष्टिविधानं नात्र पूर्वस्य कर्मणोऽननुवृत्तेर्यागान्तरविधिरिति युक्तम् । **परोवरीयस्त्वादिवत्** । यथोद्गीथोपासनासाम्येऽपि आदित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनातः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासना भिन्ना तद्वदिदमपीति । परस्मात् परो वराच्च वरीयानिति परोवरीयानुद्गीथः परमात्मरूपः संपन्नः । अत एव अनन्तः । परमात्मदृष्टिमुद्गीथे भावयितुम् 'आकाशो ह्येवैभ्यो भूतेभ्यो ज्यायान्' इत्याकाशशब्देन परमात्मानं निर्दिशति ॥ ७ ॥ **संज्ञातश्चेत्तदुक्तमस्ति तु तदपि** । स्फुटतरे भेदावगमे संज्ञैकत्वं नाभेदसाधनमतिप्रसङ्गा-

आनन्दगिरीयव्याख्या

देवताभ्यो हवींषि विभजेदिति चाश्रुतेरपनीता हविःषु पूर्वदेवता इति तदवरुद्धेषु तेषु देवतान्तरमलब्धावकाशं श्रुतं कर्मान्तरमेव गोचरयेदिति देवतान्तरयुक्तकर्मान्तरे विधिरिति प्राप्ते त्रेधा तण्डुलान्विभजेदित्यत्र ये मध्यमाः स्युरित्यादिवाक्यान्तरप्राप्तं त्रेधात्वमनूद्य विभजेदित्यस्यैव विधानात्कस्मादित्यपेक्षायां मध्यमादिवाक्यैर्देवतान्तरेषूक्तेषु तत्प्रतियोगिनीनां देवतानामेव बुद्धिस्थानां विभागप्रतियोगित्वसिद्धेः । तण्डुलशब्दस्य च हविर्मात्रविषयत्वाद्दधिपयसोरपि पूर्वदेवतातो विभागलाभादपनीते पूर्वदेवताके हविषि देवतान्तरस्य सावकाशत्वात्पूर्वद्रव्यमुखेन प्रकृतकर्मप्रत्यभिज्ञानाद्देवतान्तरसंबन्धेऽपि कर्मान्तरकल्पनानवकाशान्नैमित्तिकाधिकारे समाप्ते नित्याधिकारार्थान्येव कर्माण्यनुष्ठेयानीति नास्ति कर्मभेद इति स्थितम् । 'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् । ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेन्मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुं ये क्षोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्र तुल्यश्रुत्या दर्शसमाप्त्यनन्तरं वत्सापाकरणेन गोदोहनं कृत्वा पूर्वदेवताभ्यो हविर्विभज्य देवतान्तरविशिष्टपशुकामेष्टिविधानात्पूर्वस्य कर्मणोऽननुवृत्तेरभ्युदयवाक्यसारूप्येऽपि यागान्तरविधिस्तथेहापि स्यादिति पूर्वत्रप्रसिद्धं दृष्टान्तं बहिरेवोक्त्वा सौत्रं दृष्टान्तमादाय व्याचष्टे—**परोवरीयस्त्वेति** । परस्माद्धरप्राणादेः परोवराच्च तस्मादेव वरीयान्वरतरोऽयमुद्गीथः स च परमात्मदृष्टिसंपत्तेरनन्त इति द्रष्टव्यम् । आकाशे चादित्यादौ च परमात्मदृष्ट्यारोपादुद्गीथोपास्तिसाम्येऽपि परोवरीयस्त्वादिगुणकोद्गीथोपास्तिरन्यान्या च हिरण्यश्मश्रुत्वादिगुणकोद्गीथोपास्तिस्तथेहापीत्यर्थः । दृष्टान्तेष्वधिकगुणानामन्योन्यत्रोपसंहाराद्विद्यैक्यमित्याशङ्क्याह—**नचेति** । पुनरुक्त्या विद्याभेदस्यातिस्पष्टत्वं हेतुं मत्वोक्तम्—**एकस्यामिति** । शाखाभेदाद्वेदभेदनापौनरुक्त्येऽपि तात्पर्यप्रमेयगुणभेदविशिष्टोपासनेषु नानात्वमित्याह—**तद्वदिति** ॥ ७ ॥ पूर्वपक्षबीजमुद्भाव्य दूषयति—**संज्ञातश्चेदिति** । अनुवादं व्याकरोति—**अथेति** । अत्रेति शाखाद्वयमुक्तम् । संज्ञैकत्वं विवृणोति—**उद्गीथेति** । पूर्वसूत्रगतं नञ्शब्दं तच्छब्देन संयोज्य परिहरति—**तदपीति** । पूर्वसूत्रोक्तपरि-

द्यते । उक्तं ह्येतत्—'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' ( ब्र० सू० ३।३।७ ) इति । तदेव चात्र न्याय्यतरं श्रुत्यक्षरानुगतं हि तत्संज्ञैकत्वं तु श्रुत्यक्षरबाह्यमुद्गीथशब्दमात्रप्रयोगाल्लौकिकैर्व्यवहर्तृभिरुपचर्यते । अस्ति चैतत्संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषूद्गीथविद्येति । तथा प्रसिद्धभेदानामप्यग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते तथेहापि भविष्यति । यत्र तु नास्ति कश्चिदेवंजातीयको भेदहेतुस्तत्र भवतु संज्ञैकत्वाद्विद्यैकत्वं यथा संवर्गविद्यादिषु ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

४ अधिकरणम्

किमध्यासोऽथवा बाध ऐक्यं वाथ विशेष्यता ॥ अक्षरस्यात्र नास्त्यैक्यं नियतं हेत्वभावतः ॥ १ ॥
वेदेषु व्याप्त ओंकार उद्गीथेन विशिष्यते ॥ अध्यासादौ फलं कल्प्यं संनिकृष्टांशलक्षणा ॥ २ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' ( छा० १।१।१ ) इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभासनात्कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः । तत्राध्यासो नाम द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धावन्यतरबुद्धिरध्यस्यते यस्मिन्नितरबुद्धिरध्यस्यतेऽनुवर्तत एव तस्मिंस्तद्बुद्धिरध्यस्तेतरबुद्धावपि । यथा नाम्नि ब्रह्मबुद्धावध्यस्यमानायामप्यनुवर्तत एव नामबुद्धिर्न ब्रह्मबुद्ध्या निवर्तते । यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः । एवमिहाप्यक्षर उद्गीथबुद्धिरध्यस्येतोद्गीथे वाऽक्षरबुद्धिरिति । अपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः

---

रत्नप्रभाव्याख्या

चेत्याह—**अस्ति चेति** । किं संज्ञैक्यं सर्वत्राप्रमाणमेव नेत्याह—**यत्र त्विति** । असति बाधके संज्ञैक्यमपि मानं यथा संवर्गविद्येति संज्ञैक्यात्सर्वशाखासु तद्विद्यैक्यं, तथा पञ्चाग्न्यादिविद्यैक्यमित्याद्यसूत्रे दर्शितमित्यर्थः ॥ ८ ॥ **व्याप्तेश्च समञ्जसम्** । सामानाधिकरण्यं विषयीकृत्य संशयमाह—**ओमित्येतदिति** । अध्यासादिपदार्थान्व्याचष्टे—**तत्राध्यास इत्यादिना** । बुद्धिपूर्वकाभेदारोपोऽध्यासः, बाधोऽपवादः, एकत्वं वास्तवाभेदः, विशेषणं व्यावर्तकमिति विवेकः । पूर्वमुद्गातृकर्मकोद्गीथावयवत्वमोङ्कारस्य ध्येयस्य विशेषणं सिद्धवत्कृत्य ध्येयभेदाद्विद्याभेदः सिद्धान्तितः स न युक्त इत्याक्षेपसंगत्या पूर्वप-

भामतीव्याख्या

पातात् । अपिच श्रुत्यक्षरालोचनया भेदप्रत्ययोऽन्तरङ्गश्चानपेक्षश्च । संज्ञैकत्वं तु श्रुतिबाह्यतया बहिरङ्गं च पौरुषेयतया सापेक्षं च । तस्माद्दुर्बलं नाभेदसाधनायालमिति ॥ ८ ॥ **व्याप्तेश्च समञ्जसम्** । **अध्यासो नामेति** । गौणी बुद्धिरध्यासः । यथा माणवकेऽनिवृत्तायामेव माणवकबुद्धिव्यपदेशवृत्तौ सिंहबुद्धिव्यपदेशवृत्तिः सिंहो माणवक इति, एवं प्रतिमायां वासुदेवबुद्धिर्नाम्नि

आनन्दगिरीयव्याख्या

दारस्य बाधकत्वाच्चोद्याभासोऽयमित्याह—**उक्तं हीति** । समाख्याविशेषादभेदो गम्यते रूपभेदाच्च भेदस्तथा सति किमत्र युक्तं, तत्राह—**तदेवेति** । रूपभेदस्यान्तरङ्गतया बलवत्तरत्वात्संज्ञायाश्च श्रुतिबाह्यतया बहिरङ्गत्वात्पौरुषेयतया च सापेक्षत्वेन दुर्बलत्वाद्रूपभेदादुक्तं विद्यानानात्वमेव युक्तमित्यर्थः । कथं संज्ञैक्यं श्रुत्यक्षरश्रुतबाह्यं, तत्राह—**उद्गीथेति** । संज्ञैक्याद्विद्यैक्ये स्यादतिप्रसक्तिरित्यस्तीत्यादि व्याकरोति—**अस्ति चेति** । अपिशब्दोपात्तमुदाहरणान्तरमाह—**तथेति** । संज्ञैक्येऽपि न चेत्तत्रैक्यं तर्हि संज्ञैक्यमुद्गीथज्ञानेऽप्यप्रयोजकमित्याह—**तथेहेति** । कथं तर्हि संज्ञैक्यस्य व्यभिचारित्वे प्रथमसूत्रे तस्यैक्ये हेतुत्वमुक्तमित्याशङ्क्य तदभिमतमर्थमाह—**यत्रेति** । एवंजातीयकः प्रक्रमभेदो वा तत्तुल्यो वेत्यर्थः । असति बलवति बाधके संज्ञैक्यमपि साधकमित्यत्र दृष्टान्तमाह—**यथेति** । आदिपदेन पञ्चाग्निविद्या वैश्वानरविद्येत्यादि गृह्यते ॥ ८ ॥ ओमित्येतदक्षरमुद्गीथमुपासीतेत्यत्रोद्गीथविशेषितत्वमोङ्कारस्यापि सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदमुक्त्वा तमेव विशेषणविशेष्यभावं निरूपयति—**व्याप्तेश्चेति** । ओमुद्गीथशब्दयोः सामानाधिकरण्यमधिकरणस्य विषयं दर्शयति—**ओमित्येतदिति** । विशेषानवधारणकृतं संदेहमाह—**अध्यासेति** । अत्र च विशेषणविशेष्यभावनिरूपणेन विचारस्य वाक्यार्थधीसाधनसंक्रान्ततया पादादिसंगतयः । पूर्वपक्षे समानाधिकरणवाक्यस्यानध्यवसितार्थत्वादप्रामाण्यं सिद्धान्ते तस्यार्थनिश्चयात्प्रामाण्यम् । कथमेतेषां पक्षाणां प्रतिभानं भेदो वेति तत्राध्यासं व्युत्पादयति—**तत्रेति** । तेषां मध्ये योऽध्यासो नाम प्रसिद्धः स व्युत्पाद्यते । गौणी बुद्धिरसावित्युपेत्य व्युत्पादनमभिनयति—**द्वयोरिति** । कथमन्यतरबुद्धावनिवर्तितायामन्यतरबुद्धेरध्यासः स्यात्, तत्राह—**यस्मिन्निति** । अध्यस्तबुद्ध्येतरबुद्धेर्निवर्त्यत्वमाशङ्क्य दृष्टान्तमाह—**यथेति** । वैदिकदृष्टान्तमुक्त्वा लौकिकमाह—**यथा वेति** । विशेषमनवधारयन्दार्ष्टान्तिकमाह—**एवमिति** । अध्यासपक्षसमाप्तावितिशब्दः । अपवादमुदाहरणं प्रतिज्ञाय व्युत्पादयति—**अपवाद इति** । **यत्रेति** । यस्मिन्कस्मिंश्चिद्वस्तुनीत्यर्थः । तत्रापि लौकिकं वैदिकं चोदाहरणमाह—

**विनियुक्तानां न विद्याशेषत्वोपपत्तिः । न ह्येषां विद्याभिः सहैकार्थ्यं किंचिदस्ति । वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । अपिचैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलेन प्रमाणेनान्यत्रापि**

भामतीव्याख्या

क्रमसमाख्ययोर्विरोधोदाहरणम्—पौरोडाशिक इति समाख्याते काण्डे सान्नाय्यक्रमे च शुन्धध्वं दैव्याय कर्मण इति शुन्धनार्थो मन्त्रः समाम्नातः, तत्र संदिह्यते किं समाख्यानस्य बलीयस्त्वात्पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः, आहो सान्नाय्यपात्राणां शुन्धने क्रमो बलीयानिति । किंतावत्प्राप्तम् । समाख्यानं बलीय इति । पौरोडाशिकशब्देन हि पुरोडाशसंबन्धिनीत्युच्यन्ते तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम् । ततश्च यावत्क्रमेण प्रकरणाद्यनुमानपरम्परया संबन्धः प्रतिपादनीयः तावत्समाख्यया श्रुत्यैव साक्षादेव स प्रतिपादित इति अर्थविप्रकर्षेण क्रमात्समाख्यैव बलीयसीति पुरोडाशपात्रशुन्धने मन्त्रः प्रयोक्तव्यः न सान्नाय्यपात्रशुन्धन इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—समाख्यानात्क्रमो बलवानर्थविप्रकर्षादिति । तथाहि—समाख्या न तावत्संबन्धस्य वाचिका किंतु पौरोडाशविशिष्टं काण्डमाह । तद्विशिष्टत्वान्यथानुपपत्त्या तु संबन्धः काण्डस्यानुमीयते न तु साक्षान्मन्त्रभेदस्य । तद्द्वारेण च तन्मध्यपातिनो मन्त्रभेदस्यापि तदनुमानम् । न चासौ संबन्धोऽपि श्रुत्यैव शेषशेषिभावः प्रतीयते । अपि तु संबन्धमात्रम् । तस्माच्छ्रुतिसादृश्यमस्य दूरापेतमिति क्रमेण नास्य स्पर्धोचिता । तत्रापि च सामान्यतो दर्शपूर्णमासप्रकरणपादितदमर्थस्य शौनःशेपोपाख्यानादिवच्चारादुपकारकतया प्रकृतमात्रसंबन्धानुपपत्तिः । मन्त्रस्य प्रयोगसमवेतार्थस्मारणेन सामवायिकाङ्गत्वात् । तथाच यं कंचित्प्रकृतप्रयोगगतमर्थं प्रकाशयतोऽस्य प्रकरणाङ्गत्वमविरुद्धमिति विशेषापेक्षायां सान्नाय्यक्रमः सान्नाय्यं प्रति प्रकरणाद्यनुमानद्वारेण विनियोगं कल्पयितुमुत्सहते न तु समाख्यानम् । तस्य दुर्बलत्वात् । तथाहि—समाख्या संबन्धनिबन्धना सती तत्सिद्ध्यर्थं संनिधिमुपकल्पयति यावत्तावद्वैदिकेन प्रत्यक्षदृष्टेन संनिधानेनाकाङ्क्षा कल्प्यते । यावच्च कॢप्तेन संनिधानेनाकाङ्क्षा कल्प्यते तावदितरत्र कॢप्तयाकाङ्क्षयैकवाक्यता यावच्च कॢप्तयाकाङ्क्षयैकवाक्यता तावदितरत्रैकवाक्यतया कॢप्तयोपकारसामर्थ्यम् । यावच्चानैकवाक्यतयोपकारसामर्थ्यं तावदितरत्र लिङ्गेन विनियोजिका श्रुतिः । यावदत्र लिङ्गेन विनियोजिका श्रुतिस्तावदितरत्र कॢप्तया श्रुत्या विनियोग इति तावतैव प्रकरणपाठोपपत्तेः सर्वं समाख्यानकल्पितं विच्छिन्नमूलत्वाच्छिद्यमानशस्यमिव निर्बीजं भवति । पुरोडाशाभिधायकमन्त्रबाहुल्यात्काण्डस्य पौरोडाशिकसमाख्येति मन्तव्यम् । 'एकद्वित्रिचतुष्पञ्चवस्त्वन्तरयकारितम् । श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥ इत्यर्थविप्रकर्ष उक्तः । तत्रापि च बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया' ॥ इति विशेष उक्तो वृद्धैः । तदयं विस्तराद्बिभ्यतोऽपि प्रथमतन्त्रानभिज्ञानुकम्पया निम्ना विस्तरे पतिताः स्म इत्युपरम्यते । तस्माद्यथानुज्ञापनानुज्ञयोः प्रज्ञातक्रमयोरुपहूत उपह्वयस्वेत्येवं मन्त्रावाम्नातौ देशसामान्यात्तथैवाङ्गतया प्राप्नुतः । उपहूत इति लिङ्गतोऽनुज्ञामन्त्रो नानुज्ञापने उपह्वयस्वेति च लिङ्गतोऽनुज्ञापने च मन्त्रो नानुज्ञायाम् । तदिह लिङ्गेन क्रमं बाधित्वा विपरीतं शेषत्वमापाद्यते । यावद्धि स्थानेन प्रकरणमुत्पाद्यैकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोग इति अकल्पितलिङ्गश्रुतेः क्रमस्य बाधः । तद्वदिहापि विनियोगे प्रत्येकान्तरितेन लिङ्गेन चतुरन्तरितस्य विद्याक्रमस्य बाध इति । यद्यपि प्रथमतन्त्र एवायमर्थ उपपादितस्तथापि विरोधे तदुपपादनमिह त्वविरोधः । नहि लिङ्गेनाभिचारिककर्मसंबन्धः । विद्यासंबन्धेन क्रमकृतेन विरुध्यते । नच विनियुक्तविनियोगलक्षणोऽत्र विरोधो बृहस्पतिसवेऽपि तत्प्रसङ्गात् । अथ प्रतीतिविरोधो नच वस्तुविरोधः स विद्यायां विनियोगेऽपि तुल्यः । तस्मादविरोधाद्वेधादिमन्त्रस्योपासनाङ्गत्वमित्यस्त्यभ्यधिका शङ्का । तत्रोच्यते—'नहि लिङ्गविरोधेन क्रमबाधोऽभिधीयते । किंतु लिङ्गपरिच्छिन्ने न क्रमः कल्पनाक्षमः' । प्रकरणपाठोपपत्त्या हि श्रुतिलिङ्गवाक्यप्रकरणैरविनियुक्तः क्रमेण प्रकरणवाक्यलिङ्गश्रुतिकल्पनाप्रणालिकया विनियुज्यते । तदविनियुक्तस्य प्रकरणपाठानर्थक्यप्रसङ्गात् । उपपादिते तु श्रुत्यादिभिः प्रकरणपाठे क्षीणत्वादर्थापत्तेः क्रमो न स्वोचितां प्रमामुत्पादयितुमर्हति प्रमित्साभावादिति । बृहस्पतिसवस्य तु क्त्वाश्रुतिरेव धातुसंबन्धाधिकारात्समानकर्तृकतायां विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयन्ती न शक्या श्रुत्यन्तरेण निरोद्धुं स्वप्रमामिति वैषम्यम् । तदिदमुक्तम्—**वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरमिति । अपि चैकोऽयं प्रवर्ग्य इति** । तुल्यबलतया बृहस्पतिसवस्य तुल्यताशङ्कापाकरणद्वारेण समुच्चयो न तु पृथगुक्तितया परस्परापेक्षत्वादिति । संनिधि-

आनन्दगिरीयव्याख्या

नहीति । अनुपकारकस्य शेषत्वाभावादुपकारकत्वं च प्रवर्ग्यादिकृतस्य विद्यायामनिरूपणान्न नेषां तच्छेषतेत्यर्थः । यत्तु विनियुक्तविनियोगो न विरोधावेत्यत्रोपेत्यवादेनोदाहरणं, तत्राह—**वाजपेये त्विति** । इष्ट्वेति क्त्वाश्रुतिः समानकर्तृकत्वे विहिता संयोगपृथक्त्वेन विनियुक्तमपि विनियोजयन्त्यतो न तत्र तुल्योस्तुल्यबलयोर्मिथो बाध इत्युभयधात्वं बृहस्पतिसवस्येष्टमित्यर्थः । प्रकृते तुल्यबलत्वं विनियोजकयोर्नास्तीत्याह—**अपिचेति** । तुल्यबलत्वशङ्कानिरासद्वारा विनियुक्तविनियोगायोगे हेत्वन्तरसमुच्चयार्थमपिचेत्युक्तम् । पुरस्तादुपसदामित्यादिवाक्यं बलीयः प्रमाणम् । अन्यत्रेति ज्योतिष्टोमाद्युक्तम् । दुर्बलं प्रमाणं संनिधिः । अन्यत्रापीति विद्योक्ता ।

विनियोगमर्हति । अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यान्न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता संभवति बलवदबलवत्त्वविशेषादेव । तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम् । अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यम् ॥ २५ ॥

**हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥**




उपायनमनाहार्यं हानायाद्रियतेऽथवा ॥ अश्रुतत्वादनाक्षेपाद्विद्याभेदाच्च नाहृतिः ॥ १ ॥
विद्याभेदेऽप्यर्थवाद आहार्यः स्तुतिसाम्यतः ॥ हानस्य प्रत्यभिज्ञानादेकविंशादिवादवत् ॥ २ ॥
विधूननं चालनं स्याद्धानं वा चालनं भवेत् ॥ दोधूयन्ते ध्वजाग्राणीत्यादौ चालनदर्शनात् ॥ ३ ॥
हानमेव भवेद्वाक्यशेषेऽन्योपायनश्रवात् ॥ कार्तां न ह्यपरित्यक्तमन्यः स्वीकर्तुमर्हति ॥ ४ ॥

अस्ति ताण्डिनां श्रुतिः—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' (छा० ८।१३।१) इति । तथाथर्वणिकानाम् 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड० ३।२।८) इति । तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । तथाच कौषीतकिनः 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ० १।४) इति । तदिह क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तूभयमपि हानमुपायनं च तद्यत्रोभयं श्रूयते तत्र तावन्न किंचिद्वक्तव्य-

---

रत्नप्रभाव्याख्या

ताभिः सहैकफलत्वे च मानं किंचिन्नास्तीत्यर्थः । अपिचेत्युक्तार्थम् । ननु तर्हि वेधादिवाक्यानामुपनिषद्भिः सह पाठस्य का गतिस्तामाह—अरण्येति । तस्माद्वेधादिमन्त्रकर्मणां विद्यास्वनुपसंहार इति सिद्धम् ॥ २५ ॥ हानौ तूक्तम् । यथाऽश्वो रजोयुक्तानि जीर्णरोमाणि त्यक्त्वा निर्मलो भवति तथाहमपि पापं विधूय कृतात्मा निर्मलीकृतचित्तः सन् यथा वा राहुग्रस्तश्चन्द्रो राहुमुखात्प्रमुच्य सद्यो भवति तथा शरीरं धूत्वा त्यक्त्वा देहाभिमानान्मुक्तः सन्नकृतं कूटस्थं ब्रह्मात्मकं लोकं अभि प्रत्यक्त्वेन संभवामीत्यर्थः । यथा नद्यः समुद्रं प्राप्य नामरूपे त्यजन्ति तथा विद्वानित्यर्थः । तस्य मृतस्य विदुषः, दायं धनं, तत्तेन विद्याबलेन सुकृतदुष्कृते त्यजतीत्यर्थः । उपायनं ग्रहणं तस्य त्यागपूर्वकत्वात्, अत्यक्तयोर्ग्रहणायोगात्त्यागोऽर्थादायाति । यत्र तु त्याग एव श्रुतः तत्र हानोपायनयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह—

भामतीव्याख्या

पाठमुपपादयति—अरण्यादिवचनवादीति ॥ २५ ॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् । यत्र हानोपायने श्रूयेते तत्राविवादः संनिपाते यत्राप्युपायनमात्रश्रवणं तत्रापि नान्तरीयकतया हानमार्थमित्यस्ति सनिपातः । यत्र तु हानमात्रं सुकृतदुष्कृतयोः श्रुतं न श्रूयते उपायनं, तत्र किमुपायनमुपादानं संनिपतेन्न वेति

आनन्दगिरीयव्याख्या

विरोधाभावादसति विरोधे बाधाभावादुभयत्रापि प्रमाणाभ्यां विनियोगः स्यादित्याशङ्क्याह—अगृह्यमाणेति । एतदुभयत्र विनियुक्तत्वमेवं द्वाभ्यां मानाभ्यामिति यावत् । वाक्यादेः संनिधेश्च विशेषो निश्चितो नास्तीत्याशङ्क्याह—न त्विति । मानदौर्बल्यविशेषप्रदे फलितमाह—तस्मादिति । प्रकरणपाठसिद्ध्यै विनियोगो मन्त्रादीनां कल्प्यते तथान्य बलवत्प्रमाणेनान्यत्र विनियोगे प्रकरणपाठसिद्धौ न क्रमो विनियोजको दौर्बल्यादित्यर्थः । तर्हि संनिधिपाठस्य का गतिस्तामाह—अरण्येति ॥ २५ ॥ विद्यासंनिधौ श्रुतस्यापि मन्त्रादेर्विद्यायामसामर्थ्यादनुपसंहारवत्क्वचिदेव हानसंनिधौ श्रुतस्योपायनस्य तदन्तरेणापि हानसंभवेन तदुपपादनासामर्थ्यादनुपसंहार इत्याशङ्क्याह—हानौ त्विति । विषयं वक्तुं तत्तच्छाखास्थवाक्यान्युदाहरति—अश्वेत्यादिना । यथाऽश्वो जीर्णानि रोमाणि रजोभिः सह शातयित्वा स्वच्छो भवति तथाहमपि पापं सर्वं विधूय निर्मलः सन्ब्रह्मलोकमभिसंभवामीति संबन्धः । यथा च चन्द्रो राहुग्रस्तो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवं शरीरमकृतमशुद्धं प्रवाहरूपेणानादिसिद्धं वा धूत्वा त्यक्त्वा स्वच्छो भूत्वा कृतः सिद्धो न पुनरपूर्वपुण्योपचयेन साध्यो यस्यात्मा सोऽहं कृतकृत्यः सन्ब्रह्मलक्षणं रूपमभिसंभवामि प्रत्यक्त्वेन प्राप्नोमीत्यर्थः । तथा ताण्डिनामिवाथर्वणिकानामस्ति श्रुतिरिति संबन्धः । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' इति दृष्टान्तं परामृशति—तथेति । ताण्डिनश्चाथर्वणिकाश्च तथेत्युच्यन्ते—तस्येति । विदुषो मृतस्येत्यर्थः । तथैवेति शाट्यायनिनो दृष्टान्तिताः । तत्तेन विद्याबलेन सुकृतं च दुष्कृतं च ते विधूनुते निरस्यति विद्वानित्यर्थः । त्यक्तयोस्तयोर्विनियोगं दर्शयति—तस्येति । विषयपरिशेषार्थमापाततो वाक्यार्थमाह—तदिति । तत्तत्र श्रुतावित्युदाहृतेषु वाक्येष्विति यावत् । क्वचित्ताण्डिनामाथर्वणिकानां च श्रुतावित्यर्थः । क्वचित्तयोरेवेत्यत्र क्वचिदिति कौषीतकिश्रुतिर्गृह्यते । क्वचिदिति शाट्यायनिश्रुतिरुक्ता क्वचित्तूभयमित्यत्र

मस्ति । यत्राप्युपायनमेव श्रूयते न हानं तत्राप्यर्थादेव हानं संनिपतति । अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात्तद्धानस्य । यत्र तु हानमेव श्रूयते नोपायनं तत्रोपायनं संनिपतेद्वा न वेति विचिकित्सायामश्रवणादसंनिपातः । विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपिचात्मकर्तृकं सुकृतदुष्कृतयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत । तस्मादसंनिपातो हानावुपायनस्येति । अस्यां प्राप्तौ पठति हानौ त्विति । हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति । तच्छेषत्वात् । हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये । तस्मादन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः । यदुक्तमश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासंनिपात इति तदुच्यते । भवेदेषा व्यवस्थोक्तिर्यद्यनुष्ठेयं किंचिदन्यत्र श्रुतमन्यत्र निनीष्येत । न त्विह हानमुपायनं वाऽनु-

---

रत्नप्रभाव्याख्या

**यत्र त्विति** । अत्र पूर्वपक्षे श्रुतिप्रकर्षासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलम् । यद्यपि ताण्ड्याथर्वणश्रुत्योर्निर्गुणविद्यार्थयोः कर्महानमेव श्रुतं नोपायनं तथापि कौषीतकिश्रुतौ पर्यङ्कस्थसगुणब्रह्मविद्यायामुपायनं श्रुतमत्रोपसंहर्तव्यमित्याशङ्क्य विद्याभेदान्नोपसंहार इत्याह—**विद्यान्तरेति** । किंच यथा मन्त्रकर्मणामनावश्यकत्वाद्विद्यास्वनुपसंहार उक्तः तथा परैरुपादानं विनापि हानसंभवेनोपादानस्यानावश्यकत्वान्न प्राप्तिरिति दृष्टान्तसंगत्या प्राप्ते सिद्धान्तयति—**हानौ त्वित्यादिना** । उपायनशब्दस्य शेषत्वाद्धानशब्देनापेक्षितत्वादिति सूत्रार्थः । अश्वरोमदृष्टान्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात्परैरुपादानं वाच्यमिति भावः । विद्याभेदे गुणानुपसंहार इति व्यवस्थाऽनुष्ठानविषया न स्तुतिविषयेत्याह—**तदुच्यत इति** । मन्यते सूत्रकार इत्यर्थः । ननु श्रुतहानार्थवादेनापि स्तुतिसिद्धौ किमर्थमुपायनवाद

भामतीव्याख्या

संशयः । अत्र पूर्वपक्षं गृह्णाति—**असंनिपात इति** । स्यादेतत् । यथा श्रूयमाणमेकत्र शाखायामुपासनाङ्गं तस्मिन्नेवोपासने शाखान्तरेऽश्रूयमाणमङ्गमुपसंह्रियते । एवं शाखान्तरश्रुतमुपायनमुपसंहरिष्यत इत्यत आह—**विद्यान्तरगोचरत्वाच्चेति** । एकत्वे ह्युपासनकर्मणामन्यत्र श्रुतानामप्यन्यत्र समवायो घटते । न त्विहोपासनानामेकत्वं, सगुणनिर्गुणत्वेन भेदादित्यर्थः । ननु यथोपायनं श्रुतं हानमुपस्थापयत्येवं हानमपि उपायनमित्यत आह—**अपि चात्मकर्तृकमिति** । ग्रहणं हि न स्वामिनोऽपगममन्तरेण भवतीति ग्रहणादपगमसिद्धिरवश्यंभाविनी । अपगमस्त्वसत्यप्यन्येन ग्रहणे दृष्टो यथा प्रायश्चित्तेनापगतिरेनस इति । कर्तृभेदकथनं त्वेतदुपोद्बलनार्थं न पुनरनवश्यंभावस्य प्रयोजकमुपायनेनानैकान्त्यादिति । सिद्धान्तमुपक्रमते—**अस्यां प्राप्ताविति** । अयमस्यार्थः—कर्मान्तरे विहितं हि न कर्मान्तर उपसंह्रियते प्रमाणाभावात् । यत्पुनर्न विधीयते किंतु स्तुत्यर्थं सिद्धतया संकीर्त्यते तदसति बाधके देवताधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । तथाच विधूतयोः सुकृतदुष्कृतयोर्निर्गुणायां विद्यायामश्वरोमादिवत्किं भवत्वित्याकाङ्क्षायां न तावत्प्रायश्चित्तेनेव तद्विलयसंभवस्तथा सत्यश्वरोमराहुदृष्टान्तानुपपत्तेः । न जात्वश्वरोमराहुमुखयोर्विलयनमस्ति । अपि त्वश्वचन्द्राभ्यां विभागः । नच नष्टे विधूननप्रमोचनार्थसंभवः । तस्मादर्थवादस्यापेक्षायां शब्दसंनिधिकृतोऽपि विशेष उपायनं बुद्धौ संनिधापयितुं शक्नोत्यपेक्षां पूरयितुमिति । निर्गुणापि विद्या हानोपायनाभ्यां स्तोतव्या ।

आनन्दगिरीयव्याख्या

तत्र कौषीतकिश्रुतिर्न विचारापेक्षेत्याह—**तदिति** । शाट्यायनिश्रुतिरपि नापेक्षते विचारमित्याह—**यत्रेति** । आर्थिकं हानसंनिपातं साधयति—**अन्यैरिति** । परिशिष्टं विषयमाह—**यत्र त्विति** । हानोपायनयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह—**तत्रेति** । अत्र च विद्यास्तुतिप्रकर्षप्रयोजनस्योपायनोपसंहारस्योक्त्या वाक्यार्थधीहेतुवर्णनात्पादादिसंगतिः । पूर्वपक्षे स्तुतिप्रकर्षासिद्धिः सिद्धान्ते तत्सिद्धिरिति मत्वा पूर्वपक्षं गृह्णाति—**अश्रवणादिति** । क्वचिदश्रवणेऽप्यन्यत्र श्रवणादिहोपसंहारमाशङ्क्याह—**विद्येति** । विद्यैक्ये सत्युपसंहारः स्यान्न चेह तदस्ति कौषीतकिगतपर्यङ्कविद्यायाः सगुणत्वात्ताण्ड्याथर्वणिकश्रुत्योश्च पुण्यपापविधूननहेतुत्वेन श्रुतविद्याया निर्गुणत्वादिति यत्र हानमेव श्रुतं तत्र नोपायनं संनिपतेदित्यर्थः । न केवलमश्रवणादननुवृत्तिर्युक्तिविरोधादपीत्याह—**अपिचेति** । यथा शाट्यायनिश्रुतावुपायने श्रुते हानानुवृत्तिस्तथा ताण्ड्यादिश्रुतावपि हाने श्रुते स्यादुपायनानुवृत्तिरित्याशङ्क्य तत्रानुपपत्त्या संबन्धेऽपि प्रकृते नैवमित्याह—**तयोरिति** । अश्रवणादिफलमुपसंहरति—**तस्मादिति** । अनुपसंहारे स्तुतिप्रकर्षासिद्धिरिति वक्तुमितीत्युक्तम् । सिद्धान्तयति—**अस्यामिति** । अश्वरोमादिदृष्टान्ताद्विधूतयोः सुकृतदुष्कृतयोः परत्रावस्थानापेक्षत्वादत्र हानसंनिधौ श्रुतमुपायनं केवलहानश्रवणेऽप्यपेक्षितत्वादायातीति व्याचष्टे—**हानौ त्विति** । तुशब्दार्थमाह—**केवलायामिति** । तच्छेषत्वादित्युक्तं विवृणोति—**हानेति** । हेतुफलमाह—**तस्मादिति** । अन्यत्र ताण्ड्यादिश्रुतावित्यर्थः । पूर्वपक्षबीजमनुभाषते—**यदिति** । यत्रानुष्ठेयत्वेन श्रवणं तत्रोपसंहारे विद्यैक्यमपेक्षितम् । इह त्वनुष्ठेयतयोक्तस्य नोपसंहारः किंतु सिद्धस्यैव स्तुत्यर्थतयोक्तस्य तेनासति बाधके तस्योपसंहारः स्तुतिप्रकर्षायेत्याह—**तदिति** । व्यवस्थोक्तिर्विद्याभेदे गुणं प्रति नियम-

ष्ठेयत्वेन संकीर्त्येते विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम् । इत्थं महाभागा विद्या यत्सामर्थ्या-दस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते ते चास्य सुहृद्द्विषत्सु निविशेते इति । स्तुत्यर्थं चास्मिन्संकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुता-वुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय । प्रसिद्धा चार्थवादान्तरापेक्षार्थवादान्तरप्र-वृत्तिः—'एकविंशो वा इतोऽसावादित्यः' (छा० २।१०।५) इत्येवमादिषु । कथं हीहैकविं-शतादित्यस्याभिधीयेतानपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असा-वादित्य एकविंशः' इत्येतस्मिन् । तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथम-न्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम् । उपायनशब्दशेषत्वादिति तु शब्दशब्दं समुच्चारयन्स्तुत्यर्थामेव हानाद्युपायनानुवृत्तिं सूचयति । गुणोपसंहारविवक्षायां

रत्नप्रभाव्याख्या

आनीयते, तत्राह—**स्तुतिप्रकर्षलाभायेति** । नन्वर्थवादस्य विधिना संबन्धः प्रसिद्धो नार्थवादान्तरेणेत्यत आह—**प्रसिद्धा चेति** । इतो भूलोकादित्यर्थः । हेमन्तशिशिरयोरैक्यात्पञ्चर्तवः । यज्ञस्य पुरुषरूपकल्पनायां सेन्द्रियत्वाय त्रि-ष्टुभौ भवत इत्युक्तं बह्वृचब्राह्मणे, तत्र त्रिष्टुभश्छन्दोमात्रत्वात्कथमिन्द्रियत्वकल्पनेत्याकाङ्क्षायां यजुर्वाक्यं संवादत इत्यर्थः । नन्वमूर्तयोः पुण्यपापयोः उपादानस्यासंभवादनुपसंहार इत्यत आह—**विद्यास्तुत्यर्थत्वाच्चेति** । विद्वन्निष्ठयोरेव तयोः फलं परे प्राप्नुवन्ति विद्यासामर्थ्यादित्युपयन्तिपदेनोच्यत इत्यर्थः । नन्वन्यनिष्ठकर्मणोरन्यत्र फलसंचारः कथम् । ननु वचनबलादिति चेत् । न । फलमुपयन्तीत्यश्रुतेः । नच यथा पुत्रकृतश्राद्धस्य पितृषु फलं तथात्रेति वाच्यं, यस्य फलमु-द्दिश्य यत्कर्म विहितं तस्य तत्फलमिति न्यायेन पितृणां तृप्त्युद्देशेन कृतकर्मणो व्यधिकरणफलत्वेऽपि विदुषः कर्मकालेऽनु-द्दिष्टव्यधिकरणफलायोगात् । किंच विदुषो देहपाते कर्मणोऽसत्त्वाद्यावज्जीवं विद्वत्सेवकस्य तद्द्वेषिणो वा फलं स्यादित्यत आह—**नातीवाभिनिवेष्टव्यमिति** । विद्वत्सेवाद्वेषाभ्यां विद्वन्निष्ठपुण्यपापतुल्ये पुण्यपापे सेवकद्वेषिणोर्जायेते जातयोः फलतः स्वीकार उपायनमिति परिहारस्य सुलभत्वादनपोह इत्यर्थः । उपायनादेः स्तुतित्वे लिङ्गमाह—**उपायनेति** । उपायनविवक्षाया उपायनस्यैवोपसंहारं सूत्रकारो ब्रूयादतः शब्दस्य तं ब्रुवन्स्तुतिं सूचयतीत्यर्थः । विद्याविचारात्मके पादे स्तुति-

भामतीव्याख्या

स्तुतिप्रकर्षस्तु प्रयोजनं न प्रमाणम् । अप्रकर्षेऽपि स्तुत्युपपत्तेः । न चार्थवादान्तरापेक्षार्थवादान्तराणां न दृष्टा । नच तेन पूर्व-मित्याह—**प्रसिद्धा चेति । विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्येति ।** यद्यप्यन्यदीये अपि सुकृतदुष्कृते अन्यस्य फलं प्रयच्छतः, यथा पुत्रस्य श्राद्धकर्म पितुस्तृप्तिं यथा च पितुर्वैश्वानरीयेष्टिः पुत्रस्य । नार्याश्च सुरापानं भर्तुर्नरकम् । तथा-प्यन्यदीये अपि सुकृतदुष्कृते साक्षादन्यस्मिन्न संभवत इत्याशयेन शङ्का । फलतः प्राप्त्या स्तुतिरिति परिहारः । **गुणोपसंहारवि-वक्षायामित्यपि** न स्वरूपतः सुकृतदुष्कृतसंचाराभिप्रायम् । ननु विद्यागुणोपसंहाराधिकारे कोऽयमकाण्डे स्तुत्यर्थविचार इति

आनन्दगिरीयव्याख्या

स्तद्भेदे तदुपसंहार इति निर्देश इत्यर्थः । तर्हि किमर्थमनयोः संकीर्तनं तदाह—**विद्येति** । संकीर्तनस्य स्तुत्यर्थत्वमभिनयति—**इत्थमिति** । अस्तु स्तुत्यर्थं संकीर्तनं तथापि किमर्था हानाद्युपायनानुवृत्तिः, तत्राह—**स्तुत्यर्थे चेति** । हानाद्युपायनानुवृत्तिं सूत्रकारो मन्यते चेत्तर्हि कथं स्तुतिप्रकर्षस्योपायनोपसंहारकल्पकत्वं, तत्राह—**स्तुतीति** । स्तुतिर्हि विद्यायाः कार्या सा च केवलश्रुतहाने-नापि लभ्या तदैव प्रकर्षोऽपेक्ष्येत यत्प्रकर्षेण स्तुतिर्न चैवं तस्मात्प्रमाणसिद्धोपायनोपसंहारस्य फलं स्तुतिप्रकर्षसिद्धिरित्यर्थः । ननूपायनवादस्यार्थवादत्वे विधिशेषत्वं तस्य तच्छेषत्वान्न तु हानवादार्थवादशेषत्वं, तत्राह—**प्रसिद्धा चेति** । इतोऽस्मात्पृथि-व्याख्यालोकादिति यावत् । तत्रापि कथमर्थवादान्तरापेक्षा, तत्राह—**कथं हीति** । इहेति पूर्वोक्तार्थवादोक्तिः । हेमन्तशिशिरयोरैक्यं मत्वा पञ्चर्तव इत्युक्तम् । अश्रुतमपि श्रुत्यन्तरानुसाराद्ग्राह्यमित्यत्र दृष्टान्तमाह—**तथेति** । यज्ञस्य पुरुषाकारकल्पनायां सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्तं बह्वृचब्राह्मणे । तत्र त्रिष्टुप्शब्देन च्छन्दोमात्राभिधानात्कथं सेन्द्रियत्वमित्युक्ते वाजसनेयके तथात्वेन त्रिष्टु-ब्भस्तत्त्वं गृहीतमित्यर्थः । ननु श्रुत्यन्तरश्रुतमप्युपायनं न हानाद्युपसंहर्तव्यं परकीयसुकृतदुष्कृतोपादानस्य परेण कर्तुमशक्यत्वात्, तत्राह—**विद्येति** । विद्यासामर्थ्यादन्यत्र सुकृतदुष्कृतफलसंचारोक्त्या विद्यास्तुतेरिष्टत्वान्नाभिनिवेशावकाश इत्यर्थः । उपायनस्य स्तुत्यर्थत्वं कथमित्याशङ्क्य सूत्रकारोक्तिसामर्थ्यादित्याह—**उपायनेति** । तदेवोपपादयति—**गुणेति** । उपायनार्थशब्देन सुकृतादिस्वी-कारोपायनमिष्टं फलत उपायनस्येष्टत्वात् । फलोपसंहारं विनाऽर्थोपसंहारोऽभीष्टश्चेदुपायनशेषत्वादिति स्यात्तच्छब्दशेषत्वादिति चाह तथा-च शब्दार्थस्योपसंहारं नेच्छतीत्यर्थः । विद्यागुणोपसंहारप्रस्तावे स्तुत्यर्थविचारो न युक्त इत्याशङ्क्य प्रासङ्गिकत्वादयमदोष इत्याह—

ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात् । तस्माद्गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम् । कुशाच्छन्दस्तुत्युपगानवदित्युपमोपादानम् । तद्यथा भाल्लविनाम्—'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणे शाट्यायनिनामौदुम्बरा इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते । यथाच क्वचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नानात्प्रतीयन्ते । यथाच षोडशिस्तोत्रे केषांचित्कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः । यथैव चाविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः । यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वय एवं हानावप्युपायनान्वय इत्यर्थः । श्रुत्यन्तरकृतं हि विशेषं

रत्नप्रभाव्याख्या

विचारस्य का संगतिरित्यत आह—**तस्मादिति** । शाखान्तरस्थो विशेषः शाखान्तरेऽपि ग्राह्य इत्यत्र दृष्टान्तमाह—**कुशेति** । कुशा उद्गातॄणां स्तोत्रगणनार्थाः शलाका दारुमय्यः, भो कुशा यूयं वानस्पत्याः वनस्थमहावृक्षो वनस्पतिः तत्प्रभवाः स्थ ता इत्थंभूता यूयं मा पात मां रक्षतेति यजमानप्रार्थना । अत्र ता इति स्त्रीलिङ्गनिर्देशादौदुम्बर्य इति भाष्याच्च शलाकासु कुशशब्दस्य स्त्रीत्वं मन्तव्य दर्भविषयस्य न स्त्रीत्वं, अस्त्री कुशमित्यनुशासनात् । छन्दोदृष्टान्तं व्याचष्टे—**यथाचेति** । नवाक्षराणि छन्दांसि आसुराण्यन्यानि दैवानि तेषां क्वचिच्छन्दोभिः स्तुवत इत्यत्राविशेषप्राप्तौ पैङ्गिवाक्याद्विशेषग्रह इत्यर्थः । स्तुतिं विवृणोति—**यथेति** । अतिरात्रे षोडशिनो ग्रहस्याङ्गभूतं स्तोत्रं कदेति छन्दोगादीनामाकाङ्क्षायामुदयसमयाविष्टे सूर्ये षोडशिनः स्तोत्रमित्यार्चश्रुतेः कालविशेषग्रह इत्यर्थः । ऋचोऽधीयत इत्यार्चाः । उपगानं विभजते—**यथेति** । 'ऋत्विज उपगायन्ति' इत्यविशेषश्रुतेः 'नाध्वर्युरुपगायति' इति श्रुत्यन्तरादध्वर्युभिन्ना ऋत्विज उपगायन्तीति विशेषग्रह इत्यर्थः । ननु कुशादिवाक्यानामपि किमिति विशेषश्रुत्यन्तरैकवाक्यताऽभ्युपगम्यते, तत्राह—**श्रुत्यन्तरकृतं हीति** । सामान्यविषयोरेकवाक्यरूपायां गतौ सत्यां वाक्यभेदं कृत्वा नाध्वर्युरिति निषेधादविशेषश्रुतेश्चाध्वर्युरुपगायति नोपगायति चेत्येवं सर्वत्र विकल्पो न युक्तः, व्रीहियवयोस्त्वगत्या विकल्प आश्रित इत्यर्थः । विकल्पस्यान्याय्यत्वमष्टदोषदुष्टत्वात् । तथाहि—यदि व्रीहिवाक्यमाश्रीयते तदा यववाक्यस्येष्टप्रामाण्यत्यागः, अनिष्टाप्रामाण्यस्वीकारः, कदाचिद्यववाक्याश्रयणे त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यत्यागश्चेत्येकस्मिन्यववाक्ये चत्वारो दोषा भवन्ति, एवं व्रीहिवाक्येऽपि चत्वारो दोषा इत्येवं

भामतीव्याख्या

शङ्कामुपसंहरन्नपाकरोति—**तस्माद्गुणोपसंहारविचारप्रसङ्गेनेति** । विद्यागुणोपसंहारप्रसक्तः स्तुतिगुणोपसंहारो विचारितः । प्रयोजनं चोपासके सौहार्दमाचरितव्यं न तत्सौहार्दमिति । छन्द एवाच्छन्द आच्छादनादाच्छन्दो भवति । **यथैव चाविशेषेणोपगानमिति** । ऋत्विज उपगायन्तीत्यविशेषेणोपगानमृत्विजाम् । भाल्लविनस्तु विशेषेण नाध्वर्युरुपगायतीति । तदेतस्माद्भाल्लविनां वाक्यमृत्विज उपगायन्तीत्येतच्छेषं विज्ञायते । एतदुक्तं भवति—अध्वर्युवर्जिता ऋत्विज उपगायन्तीति । कस्मात्पुनरेवं व्याख्यायते । ननु स्वतन्त्राण्येव सन्तु वाक्यानीत्यत आह—**श्रुत्यन्तरकृतमिति** । अष्टदोषदुष्टविकल्पप्रसङ्गभयेन

आनन्दगिरीयव्याख्या

**तस्मादिति** । स्तुत्युपसंहारः स्तुत्युपयोगिनो गुणस्य सुकृतदुष्कृतयोरन्यत्र फलसंचारस्योपसंहारस्तत्प्रकारस्यानुपास्यस्यापि प्रदर्शनार्थं सूत्रमित्यर्थः । शाखान्तरस्थो विशेषः शाखान्तरेऽप्याश्रयणीय इत्यत्र दृष्टान्तमाह—**कुशेति** । तदिदमुपमानं यथा तथा व्याख्येयमिति प्रतिज्ञाय कुशादृष्टान्तं व्याचष्टे—**भाल्लविनामिति** । भोः कुशाः शङ्कवो यूयं वानस्पत्या वनस्पतिप्रभवाः स्थ भवथ ता मा मां पात रक्षतेति यजमानस्य वचनम् । औदुम्बरा इति श्रुतेर्दर्भविषयकुशशब्दस्यास्त्रीत्वम् । अत एवास्त्री कुशमित्यमरसिंहेनानुशिष्टम् । औदुम्बर्य इति भाष्यात्कुशशब्दस्य शङ्कुविषयस्य स्त्रीत्वमपीति विवेक्तव्यम् । छन्दोदृष्टान्तं व्याचष्टे—**यथाचेति** । दशाक्षरादीनि देवच्छन्दांसि नवाक्षराण्यासुराणि तेषां कश्चिच्छन्दोभिः स्तुवत इत्यादावविशेषेण पूर्वापरत्वप्रसङ्गे पैङ्गिश्रुतिवशाद्विशेषसिद्धिरित्यर्थः । स्तुतिदृष्टान्तं विवृणोति—**यथाचेति** । अतिरात्रे षोडशिनः पात्रविशेषस्य ग्रहणे यदङ्गभूतं स्तोत्रं तत्कस्मिन्काले गेयमिति केषांचिच्छन्दोगादीनां कालविशेषाश्रवणात्कालविशेषप्राप्तौ सूर्ये समयाध्युषिते समीपाध्युषिते सूर्यस्योदयसंनिधौ षोडशिस्तोत्रमुपाकर्तव्यमिति विशेषधीरार्चादिश्रुतेर्भवत्यृचोऽधीयत इत्यार्चास्तदीयश्रुतेर्विशेषधीः । यद्वा 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति तैत्तिरीयश्रुतेः षोडशिस्तोत्रेऽर्धास्तमितकालविशेषसिद्धिरित्यर्थः । उपगानं विभजते—**यथैवेति** । ऋत्विज उपगायन्तीत्यविशेषेणोपगानाम्नानान्नाध्वर्युरुपगायतीत्यध्वर्युवर्जिता ऋत्विज उपगायन्तीति विशेषेणोपगानमिति शेषः । दृष्टान्तेष्वभीष्टमंशमनूद्य दार्ष्टान्तिकमाह—**यथेति** । दृष्टान्तेऽपि श्रुत्यन्तरस्य श्रुत्यन्तरान्वयो मा भूद्भवन्त्वेतानि स्वतन्त्राण्येव वाक्यानीत्याशङ्क्याह—**श्रुत्यन्तरेति** । विकल्पोऽपि व्रीहियववदस्तु नेत्याह—**स चेति** । अगतिका हीयं गतिर्यद्विकल्पाश्रयणं तस्याष्टदोषदुष्टत्वात् । तथाहि—व्रीहिभिर्यवैर्वा यजेतेति वाक्यद्वयमपि मानं तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं श्रुतेर्निरपेक्षविरोधाद्युगपदुभयानुष्ठानायोगात् ।

**श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् । स चान्याय्यः सत्यां गतौ । तदुक्तं द्वादशलक्षण्यांम्—'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्' इति ।**

---

### रत्नप्रभाव्याख्या

दुष्टविकल्पपरिहाराय भिन्नशाखाश्रुत्योरप्येकवाक्यता जैमिनिसंमतेत्याह—**तदुक्तमिति** । ज्योतिष्टोमप्रकरणे 'दीक्षितो न जुहोति' इति श्रुतं 'यावज्जीवमग्निहोत्रं जुहुयात्' इति चान्यत्र श्रुतं, तत्र यदि नदीक्षितवाक्यं होमप्रतिषेधकं स्यात्तदा क्रत्वर्थत्वान्निषेधोऽनुष्ठेयः, यावज्जीवविधिना होमो वानुष्ठेय इति विकल्पः स्यात्, स चान्याय्यः । अपि तु यावज्जीववाक्यं प्रति नदीक्षितवाक्यस्य शेषत्वान्नकार इतरपर्युदासार्थकः स्याद्दीक्षितान्यलक्षकः स्यात्, न होमप्रतिषेधकः, तस्माददीक्षितो यावज्जीवं जुहुयादित्येकवाक्यतेति नदीक्षिताधिकरणसिद्धान्तसूत्रार्थः । अत्र भगवत्पादैः सूत्रमेव पठितं, मिश्रैस्तु पर्युदासाधिकरणसिद्धान्तसूत्रं 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इति स्थितम् अत्रार्थतः पठितमित्युक्तं तच्चिन्त्यम् । सूत्रार्थस्तु यज्ञमात्रे येयजामहे इति प्रयोक्तव्यमिति श्रुतं, नानुयाजेषु येयजामहं करोतीत्यपि श्रुतं,

### भामतीव्याख्या

वाक्यान्तरस्य वाक्यान्तरशेषत्वमत्रभवतो जैमिनेरपि संमतमित्याह—**तदुक्तं द्वादशलक्षण्याम्** । 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इत्येतदेव सूत्रमर्थद्वारेण पठति—**अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्स** चान्याय्य इति शेषः । एवं किल श्रूयते—'एष वै सप्तदशः प्रजापतिर्यज्ञे यज्ञेऽन्वायत्त' इति । ततो नानुयाजेषु येयजामहं करोतीति । तदत्रानारभ्य कंचिद्यज्ञं यज्ञेषु येयजामहकरणमुपदिष्टम् । तदुपदिश्य चाम्नातं नानुयाजेष्विति । तत्र संशयः—किं विधिप्रतिषेधयोर्विकल्प उत पर्युदासोऽनुयाजवर्जितेषु येयजामहः कर्तव्य इति । मा भूदर्थप्राप्तस्य शास्त्रीयेण निषेधेन विकल्पः । दृष्टं हि तादात्विकीमस्य सुन्दरतां गमयति नायतौ दोषवत्तां निषेधति । तस्य तत्रौदासीन्यात् । निषेधशास्त्रं तु तादात्विकं सौन्दर्यमबाधमानमेव प्रवृत्त्युन्मुखं नरं निवारयदायत्यामस्य दुःखफलत्वमवगमयति । यथाह 'अकर्तव्यो दुःखफलः' इति । ततो रागतः प्रवृत्तमप्यायत्यां दुःखतो बिभ्यतं पुरुषं शक्नोति निवारयितुमिति बलीयान् शास्त्रीयः प्रतिषेधो रागतः प्रवृत्तेरिति न तया विकल्पमर्हति । शास्त्रीयौ तु विधिनिषेधौ तुल्यबलतया षोडशिग्रहणवद्विकल्प्येते । तत्र हि विधिदर्शनात्प्रधानस्योपकारभूयस्त्वं कल्प्यते । निषेधदर्शनाच्च वैगुण्येऽपि फलसिद्धिरवगम्यते । यथाह—'अर्थप्राप्तवदिति चेन्न तुल्यत्वादुभयं शब्दलक्षणम्' इति । नच वाच्यं यावद्यजतिषु येयजामहकरणं यावद्यजतिसामान्यद्वारेणानुयाजं यजतिविशेषमुपसर्पति तावदनुयाजगतेन निषेधेन तन्निषिद्धमिति शीघ्रप्रवृत्तेः सामान्यशास्त्राद्विशेषनिषेधो बलवानिति । यतो भवत्वेवं विधिषु ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्तितुमिह तु प्राप्तिपूर्वकत्वात्प्रतिषेधस्य । येयजामहस्य चान्यतोऽप्राप्तेस्तन्निषेधेन निषेधप्राप्त्यै तद्विधिरपेक्षणीयः । नच सापेक्षतया निषेधाद्विधिरेव बलीयानित्यतुल्यशिष्टतया न विकल्पः किंतु निषेधस्यैव बाधनमिति सांप्रतं, तथा सति निषेधशास्त्रं प्रमत्तगीतं स्यात् । न च तद्युक्तं तुल्यं हि सांप्रदायिकम् । नच न तौ पशौ करोतीतिवदर्थवादता । असमवेतार्थत्वात् । पशौ हि नान्यभागौ स्त इत्युपपद्यते । न चात्र तथा येयजामहाभावः, यजतिषु येयजामहविधानात् । अनुयाजानां च तद्भावात् । नच पर्युदासस्तदाननुयाजेष्विति, कात्यायनमतेन नियमप्रसक्तेः । तस्माद्विहितप्रतिषिद्धतया विकल्प इति प्राप्तम् । एवं प्राप्त उच्यते—उक्तं षोडशिग्रहणाग्रहणयोर्विकल्प इति । नहि तत्रान्या गतिरस्ति । तेनाष्टदोषदुष्टोऽपि विकल्प आस्थीयते पक्षेऽपि प्रामाण्यमा भूत्प्रमत्तगीततेति । इह तु पर्युदासेनाप्युपपत्तौ संभवन्त्यामन्याय्यं विकल्पाश्रयणमयुक्तम् । एवं हि तदा नञः संबन्धोऽनु

### आनन्दगिरीयव्याख्या

अतो यववाक्यस्थं मानत्वं हेतुभूते त्याज्यं तस्य त्यक्तमानत्वस्यामानत्वमेष्टव्यम् । केनापि हेतुना प्रयोगाङ्गत्वेन यवाङ्गीकारे त्यक्तमानत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृतामानत्वस्य पुनस्त्यागश्चेत्येकस्मिन्वाक्ये चत्वारो दोषाः । द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारोपात्तत्यागा इति त एव दोषाः । तथापि तुल्यबलत्वाद्गत्यन्तराभावाच्च व्रीहियववाक्ययोर्विकल्पोऽङ्गीकृतः । यथाहुः—'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते' इति । इह तु सत्यां गतौ न तदाश्रयणमित्यर्थः । अष्टदोषविकल्पपरिहाराय वाक्यान्तरशेषत्वं वाक्यान्तरस्य जैमिनेरपि संमतमित्याह—**तदुक्तमिति** । द्वादशाध्यायां मीमांसायां दाशमिकमुदाहरति—**अपि त्विति** । दीक्षितो न ददाति न जुहोति न पचतीति ज्योतिष्टोमाधिकारे श्रुतं तत्र किं सर्वदानहोमपाकानां निषेधः किंवा तेषामक्रतुप्रयुक्तानामथ वा तत्प्रयुक्तानामपि चोदकप्राप्तानामाद्यो पर्युदास इति संशये सर्वहोमादिनिषेधे प्रत्यक्षविधिविरोधादक्रतुप्रयुक्तानां वा तत्प्रयुक्तानामपि चोदकप्राप्तानामानुमानिकतया निषेधस्य प्रत्यक्षविरुद्धत्वेन निषेद्धुमशक्यत्वान्निषेध इति प्राप्ते सिद्धान्तसूत्रमपि त्वित्यादि । तुशब्दोऽवधारणार्थो नायं निषेधः किंतु न दीक्षितोऽदीक्षित इत्युक्तानामितरेषामविशेषेण होमादीनां ज्योतिष्टोमे कस्य पर्युदासः स्यादित्यत्र हेतुमाह—**वाक्येति** । अहरहर्दद्यादितिविशेषस्य तत्रापि 'अपि तु यावत् । पर्युदासमनाश्रित्य निषेधेऽभीष्टे ज्योतिष्टोमे दानादीनां विकल्पः स्यात्स चान्याय्य इत्याह—**प्रतिषेध इति** ।

**अथवैतास्वेव विधूननश्रुतिष्वेतेन सूत्रेणैतच्चिन्तयितव्यम्। किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते किंवाऽर्थान्तरमिति। तत्र चैवं प्रापयितव्यम्। न हानं विधूननमभिधीयते 'धूञ् कम्पने' इति स्मरणात्। दोधूयन्ते ध्वजाग्राणीति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्। तस्माच्चालनं विधूननमभिधीयते। चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनादित्येवं प्रापय्य प्रतिवक्तव्यम्। हानावेवैष विधूननशब्दो वर्तितुमर्हति। उपायनशब्दशेषत्वात्। नहि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयोः परैरुपायनं संभवति।**

रत्नप्रभाव्याख्या

तत्र नकारस्य निषेधकत्वेऽप्यतिरात्रे षोडशिग्रहणाग्रहणयोरिवानूयाजेषु यज्ञत्वाविशेषात्प्रयोक्तव्यं निषेधाच्च प्रयोक्तव्यमिति विकल्पः स्यात्, तस्यान्याय्यत्वात् येयजामहविधेरेव नानूयाजवाक्यमेकदेशः स्यात्, पर्युदासवृत्त्या विधिवाक्यशेषः स्यादिति यावत्। तथा चानुयाजभिन्नेषु यागेषु येयजामह इति प्रयोक्तव्यमित्येकवाक्यतेति। वर्णकान्तरमाह—**अथवेति**। पूर्वत्र विधूननं कर्महानिरिति सिद्धवत्कृत्य उपायनोपसंहार उक्तः, अत्र सैव साध्यत इति भेदः। उभयत्र लक्षणासाम्यात्संशयमाह—**किमिति**। विधूननस्य हि फलद्वयमश्वरोमादिषु दृष्टं पूर्वस्वभावात् च्युतिरन्यत्र संक्रान्तिश्चेति। तत्र संक्रान्तिरूपहानिर्लक्षणीया किंवा च्युतिरिति संशयार्थः। तत्र विधूननशब्दस्य कम्पनं मुख्यार्थ इति तावत्सर्वसंमतम्। तच्चामूर्तयोः पुण्यपापयोर्न संभवति। अतस्तयोर्यः स्वभावः फलदातृत्वशक्तिस्ततश्चालनं विलम्बया प्रतिबन्धाच्च्युतिः सा लक्षणीया न हानिरमूर्तयोरन्यत्र संक्रान्त्ययोगादन्यसापेक्षत्वाच्चेति पूर्वपक्षार्थः। सिद्धान्तयति—**हानावेवेति**। यदि च्युतिमात्रं लक्ष्यं तदोपयन्तीत्यनन्वितं स्यात्। नच यत्र धुनोतेरुपायनशब्दसांनिध्यं तत्र हानिर्लक्ष्यते न केवलधुनोतेर्हानिश्चान्यत्र

भामतीव्याख्या

याजेषु यजतिष्वनुयाजवर्जितेषु येयजामहः कर्तव्य इति। किमतो यद्येवम्। एतदतो भवति—नानुयाजेष्वित्येतद्वाक्यमपरिपूर्णं साकाङ्क्षं पूर्ववाक्यैकदेशेन संभन्त्स्यते यदेतद्येयजामहंकरोतीत्येतच्चानुयाजेषु यावदुक्तं स्यादनुयाजवर्जितेष्विति तावदुक्तं भवति नानुयाजेष्विति। तथाच यजतिविशेषणार्थत्वादननुयाजविधिरेवायमिति प्रतिषेधाभावान्न विकल्पः, न चाभियुक्ततरपाणिनिविरोधे कात्यायनस्यासद्वादित्वं नित्यसमासवादिनः संभवति। स हि विभाषाधिकारे समासं शास्ति। तस्मादनुयाजवर्जितेषु येयजामहविधानमिति सिद्धम्। वर्णकान्तरमाह—**अथवैतास्विति**। यथा हि सुकृतदुष्कृतयोरमूर्तयोः कल्पनं नाञ्जसं मूर्तानुविधायित्वात्कम्पस्य। तथान्यदीययोरन्यत्र संचारोऽप्यनुपपन्नोऽमूर्तत्वादेव। तस्माद्यत्र विधूननमात्रं श्रुतं तत्र कम्पनेन वरं स्वकार्यारम्भाच्चालनमात्रमेव लक्ष्यतां न तु ततोऽपगत्यान्यत्र संचारः कल्पनागौरवप्रसङ्गात्। तस्मात्स्वकार्यारम्भाच्चालनं विधूननमिति प्राप्तेऽभिधीयते—यत्र तावदुपायनश्रुतिस्तत्रावश्यं त्यागो विधूननं वक्तव्यम्। क्वचिदपि चेद्विधूननं त्यागे वर्तेते। तथा सत्यन्यत्रापि तथैव वर्तितुमर्हति। एवं हि न वर्तेत यदि विधूननमिह मुख्यं लभ्येत। न चैतदस्ति। तत्रापि स्वकार्याच्चालनस्य लक्ष्य-

आनन्दगिरीयव्याख्या

वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इत्येतदाशमिकं वा सूत्रमर्थद्वारा पठति—**अपि त्विति**। एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इत्युपक्रम्याश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति सप्तदशाक्षरं मन्त्रगणं सप्तदशकलिङ्गदेहसमष्टिरूपप्रजापतित्वेन स्तुत्वा यज्ञे यज्ञेऽन्वायत्तोऽनुगत इत्यनारभ्यवादेन सर्वयज्ञेषु मन्त्रगणो विनियुक्तः। तत्र च यज्ञेषु येयजामहकरणमुक्त्वा नानुयाजेष्विति श्रुतम्। तत्र नानुयाजेष्विति निषेधाद्विधिनिषेधसंनिपाताद्विकल्पो वा स्यात्पर्युदासेनानुयाजं वर्जयित्वेतरेषु यजतिषु येयजामहः कर्तव्य इति वाक्यशेषः सन्विधिरेव वेति संदेहे विधिनिषेधयोः शास्त्रीयतया तुल्यबलत्वेन षोडशिग्रहणाग्रहणवद्विकल्पे प्राप्ते सिद्धान्तितमपि त्विति। नानुयाजेष्वित्ययं न निषेधोऽपि तु येयजामहकरणविधेर्वाक्यशेषः सन्पर्युदासः स्यान्निषेधे तु विकल्पो भवेत्तस्यान्याय्यत्वाद्येयजामहकरणविधीनां नानुयाजेष्विति पर्युदासः सन्नेकदेशः स्यादतः षोडशिग्रहणाग्रहणयोरगत्या विकल्पेऽपि प्रकृते पर्युदासेनोपपत्तौ तदभावादनुयाजवर्जितेषु यजतिषु येयजामहः कर्तव्य इति विधिरेवायमित्यर्थः। वर्णकान्तरमाह—**अथवेति**। सुकृतदुष्कृते विधूनुत इत्यादौ विधूननशब्दं विषयीकृत्य धात्वर्थमुख्यत्वोपायनशब्दसंनिधिभ्यां संशयमाह—**किमिति**। अर्थान्तरं चालनम्। मन्त्रादीनां विद्यासंनिधेरकिंचित्करत्ववदत्रापि विधूननशब्दस्योपायनशब्दसंनिधिरप्रयोजक इत्यभिप्रेत्य पूर्वपक्षमाह—**तत्रेति**। पूर्वपक्षे विद्यावशान्न सुकृतादिनिवृत्तिः। सिद्धान्ते ततस्तत्सिद्धिः। पाणिनिस्मरणं पूर्वपक्षे हेतूकरोति—**धूञिति**। लोकप्रयोगसामर्थ्याच्च विधूननस्य चालनत्वमाह—**दोधूयन्त इति**। स्मृत्या लोकतश्च सिद्धं निगमयति—**तस्मादिति**। कम्पनस्य मूर्तानुविधानादमूर्तयोः सुकृतदुष्कृतयोर्न तद्युक्तमित्याशङ्क्य विशिष्टार्थक्रियाकारित्वाभावस्तद्धर्मोऽत्र लक्षणीय इत्याह—**चालनं त्विति**। चालनस्य विधूननत्वे विद्यया न सुकृतादिध्वस्तिरिति फलं वक्तुमितीत्युक्तम्। पूर्वपक्षमनुभाष्य भाष्याक्षरैः सिद्धान्तयति—**एवमिति**। उपायनशब्दशेषत्वादित्युपायनशब्दसंनिधौ विधूननशब्दस्य श्रुतत्वादित्यर्थः। तदेव प्रपञ्चयति—**नहीति**। पूर्वपक्षेऽपि लक्षणाध्रौव्याद्वि-

यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं संभाव्यते तथापि तत्संकीर्तनात्ता-वत्तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते । क्वचिदपि चेदं विधूननसंनिधावुपायनं श्रूयमाणं कुशाछन्दस्स्तुत्युपगानवद्विधूननश्रुत्या सर्वत्रापेक्षमाणं सार्वत्रिकं निर्णयकारणं संपद्यते । नच चालनं ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्यं संभवति । अद्रव्यत्वात् । अश्वश्च रोमाणि विधून्वानस्त्यजन्रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति 'अश्व इव रोमाणि विधूय पापम्' ( छा० ८।१३।१ ) इति च ब्राह्मणम् । अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः । तदुक्तमिति व्याख्यातम् ॥ २६ ॥

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥




कर्मत्यागो मार्गमध्ये यदि वा मरणात्पुरा ॥ उत्तीर्य विरजां त्यागस्तथा कौपीतकिश्रुतेः ॥ १ ॥
कर्मप्राप्यफलाभावान्मध्ये साधनवर्जनात् ॥ ताण्डिश्रुतेः पुरा त्यागो बाध्यः कौपीतकिक्रमः ॥ २ ॥

देवयानेन यथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौपीतकिनः पर्य-

---

रत्नप्रभाव्याख्या

विदुषः सेवकादौ तुल्यकर्मसंक्रान्तिरिति नासंभव इति वाच्यं, केवलधुनोतेरपि मुख्यार्थासंभवेनान्यत्र लक्ष्यतया बुद्धिस्थहानिलक्षणाया एव युक्तत्वादिति भावः । उपायनस्यामुख्यत्वान्न क्वापि हानिलक्षणाबीजत्वमिति शङ्कित्वा पुण्यपापयोः फलतः स्वीकारात्मकमुपायनं हानिं विनानुपपन्नं सल्लक्षणानिर्णायकमिति परिहरति—**यद्यपीत्यादिना** । यथान्यत्रश्रुतमौदुम्बरत्वादिकं कुशादिनिर्णायकं तथेदमुपायनं विधूननस्य हानत्वे निश्चायकमित्याह—**क्वचिदपीति** । विधूननं मुख्यं किमिति नोच्यते, तत्राह—**नचेति** । तथापि हानं कथं लक्ष्यत इत्याशङ्क्य मुख्यसंबन्धादित्याह—**अश्वश्चेति** । अनुपपत्तिसंबन्धौ लक्षणाबीजरूपावुक्त्वा लक्षकं पदं निर्दिशति—**अश्व इवेति** । विधूयेति पदं दृष्टान्ते हानपर्यन्तं सद्दार्ष्टान्तिकेऽपि हानलक्षकमित्यर्थः । यद्वा हानवाचकमेवास्तु नच धूञ् कम्पन इति धातुपाठविरोधस्तस्योपलक्षणार्थत्वादित्याह—**अनेकेति** । शाखान्तरस्थमुपायनं विधूननस्य हानत्वनिश्चायकमित्यत्र जैमिनिसूत्रं तदुक्तमिति गृहीतपूर्वं व्याख्यातमित्यर्थः । एवं विधूननस्य हानित्वसिद्धेः केवलहानावुपायनोपसंहार इति सिद्धम् ॥ २६ ॥ **सांपराये अन्ये** । व्यध्वनि अर्धमार्गे । पूर्वोक्तं विधूननस्य हानत्वमुपजीव्य हानस्य नदीतरणानन्तर्यश्रुतेरश्व इव रोमाणि इत्यादौ देहत्यागात्प्राक्कालत्व-

भामतीव्याख्या

माणत्वात् । नच प्रामाणिकं कल्पनागौरवं लोहगन्धितामाचरत्यपिचानेकार्थत्वाद्धातूनां त्यागेऽपि विधूयेति मुख्यमेव भविष्यति । प्राचुर्येण त्यागेऽपि लोके प्रयोगदर्शनात् । विनिगमनाहेतोरभावात् । गणकारस्य चोपलक्षणत्वेनाप्यर्थनिर्देशस्य तत्र दर्शनात् । तस्माद्धानार्थ एवात्रेति युक्तम् ॥ २६ ॥ **सांपराये तर्तव्याभावात्तथा ह्यन्ये** । ननु पाठक्रमादर्धपथे सुकृतदुष्कृततरणे प्रतीयेते । विद्यासामर्थ्याच्च प्रागेवावगम्येते । तथा शाट्यायनिनां ताण्डिनां च श्रुतेः श्रुत्यर्थौ च पाठक्रमाद्बलीयांसौ 'अग्निहोत्रं जुहोति यवागूं पचति' इत्यत्र यथा । तस्मात्पूर्वपक्षाभावादनारम्यमेतदत्रोच्यते । नैतत्पाठक्रममात्रमपि तु श्रुतिलिङ्गकृतदुष्कृते विधूनुत इति । तदिति हि सर्वनाम तस्मादर्थं सन्निहितपरामर्शकं तस्य हेतुभावमाह । सन्निहितं च यदनन्तरं श्रुतम् । तच्चार्धपथवर्ति विरजानदीमनोऽभिगमनमित्यर्धपथ एव सुकृतदुष्कृतत्यागः । नच श्रुत्यन्तरविरोधः । अर्धपथेऽपि पापविधूनने ब्रह्मलोकसंभवात्प्राकालतोपपत्तेः । एवं शाट्यायनिनामप्यविरोधः । नहि तत्र जीवन्निति वा जीवत इति वा

आनन्दगिरीयव्याख्या

धूननशब्दसंनिहितोपायनशब्दानुसारेण हानमेव लक्ष्यमित्यर्थः । उपायनस्यापि मुख्यस्यायोगात्तच्छेपतया कथं हानमित्याशङ्क्याह—**यद्यपीति** । उपायनशब्दस्य विधूननशब्दसंनिधौ क्वचिदेव भावात्कथं तद्वशान्निर्णयः, तत्राह—**क्वचिदपीति** । यथा कुशादिषु क्वचिदुक्तेषु संदिग्धेषु श्रुत्यन्तरान्निर्णयोऽङ्गीकृतस्तथेदमुपायनं विधूननसंनिधौ क्वचिदेव श्रुतमपि यत्र यत्र विधूननं श्रूयते तत्र तत्र सर्वत्र तत्संदिग्धार्थं निर्णायकत्वेनापेक्षितं निर्णायकमित्यर्थः । यत्तु लौकिकप्रयोगाद्विधूननं कम्पनमेवेति, तत्राह—**नचेति** । दृष्टान्ते विधूननं कम्पनमेव दृष्टेर्दार्ष्टान्तिकेऽपि तदेव ग्राह्यमित्याशङ्क्याह—**अश्वश्चेति** । हानमपि तत्र भातीत्यर्थः । तथापि दार्ष्टान्तिके विधूननं चालनमेवेत्याशङ्क्य तयोस्तुल्यत्वान्नैवमित्याह—**अश्व इवेति** । यत्तु पाणिनिस्मरणाद्विधूननं कम्पनमेवेति, तत्राह—**अनेकेति** । श्रुत्यन्तरस्थो विशेषः श्रुत्यन्तरेऽनाश्रितश्चेद्विकल्पः सर्वत्र स्यात् । स चायुक्तः सत्यां गताविति पर्युदासाधिकरणे व्युत्पादितमित्याह—**तदुक्तमिति** ॥ २६ ॥ कर्मक्षयहेतुत्वं विद्यायाः सिद्धं कृत्वा हानसंनिधावुपायनोपसंहारो दर्शितः संप्रति तदेवासिद्धं मार्गमध्ये श्रुतकर्मक्षयस्य विद्याहेतुकत्वाभावादित्याशङ्क्याह—**सांपराय इति** । यद्वा द्वितीयवर्णकोक्तविधूननशब्दस्य हानस्य कालोऽत्र निरूप्यते । विधूननं हानमित्युक्त्वा तदेव क्वचिदध्वन्यर्धपथे श्रुतं विचारयितुं विचारविषयमाह—**देवयानेनेति** । उक्तं विचार-

क्ष्वविद्यायामामनन्ति 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौ० १।३) इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' (कौ० १।४) इति। तत्किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यमाहोस्विदादावेव देहादपसर्पण इति विचारणायां श्रुतिप्रामाण्याद्यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति सांपराय इति । सांपराये गमन एव देहादपसर्पण इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवतीति प्रतिजानीते । हेतुं चाचष्टे तर्तव्याभावादिति। नहि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति यदर्थं कतिचित्क्षणानक्षीणे ते कल्पेयाताम् । विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति । तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते। तथा ह्यन्येऽपि शाखिनस्ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' (छा० ८।१३।१) इति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ॥ २७ ॥

---

रत्नप्रभाव्याख्या

श्रुतेश्च संशयमाह—**तत्किमिति** । ब्रह्मलोकमार्गमध्ये विरजाख्यां नदीमत्येति तत्सुकृतदुष्कृते विधूनुते, इत्यत्र तदितिसर्वनामश्रुत्यास्तेनेत्यर्थतया संनिहितनदीतरणस्य कर्महानिहेतुत्वोक्तेरर्धपथे कर्मक्षय इति पूर्वपक्षः । तत्र विद्यायाः कर्मक्षयहेतुत्वासिद्धिः पूर्वपक्षे, सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तयति—**सांपराय इति** । मरणात्प्रागित्यर्थः । संपरेतस्य मृतस्य कंचित्कालं कर्मसत्त्वे फलाभावाद्देवयानमार्गप्रवेशायोगाद्यादावेव क्षय इत्यर्थः । क्षयहेतोर्विद्याया मध्ये मार्गमसत्त्वाचेत्याह—**विद्याविरुद्धेति** । नदीतरणानन्तरपाठस्तु बाध्यः अर्थविरोधादित्याह—**तस्मादिति** । तदिति सर्वनाम्नापि प्रकृतविद्यैवोच्यत इति भावः ॥ २७ ॥ किंच मृतस्य छन्दतो यथाकामं विद्यानुष्ठानानुपपत्तेरुभयोर्विद्याकर्म-

भामतीव्याख्या

श्रुतम् । तथा चार्धपथ एव सुकृतदुष्कृतविमोकः । एवंच न पर्यङ्कविद्यातस्तत्क्षय इति पूर्वः पक्षः । राद्धान्तस्तु विद्यासामर्थ्यविधूतकल्मषस्य ज्ञानवत उत्तरेण पथा गच्छतो ब्रह्मप्राप्तिर्न चाप्रक्षीणकल्मषस्योत्तरमार्गगमनं संभवति । यथा यवागूपाकप्राग्भाग्निहोत्रम् । यमनियमाद्यनुष्ठानसहिताया विद्याया उत्तरेण मार्गेण पर्यङ्कस्थब्रह्मप्राप्त्युपायत्वश्रवणात् । अप्रक्षीणपाप्मनश्च तदनुपपत्तेः । विद्यैव तादृशी कल्मषं क्षपयति क्षपितकल्मषं चोत्तरमार्गं प्रापयतीति कथमर्धपथे कल्मषक्षयः । तस्मात्पाठक्रमबाधेनार्थक्रमोऽनुसर्तव्यः । ननु न पाठक्रममात्रमत्र तदिति सर्वनामश्रुत्या संनिहितपरामर्शादित्युक्तम् । तदयुक्तं बुद्धिसंनिधानमात्रमत्रोपयुज्यते नान्यत्, तच्चानन्तरस्येव विद्याप्रकरणाद्विद्याया अपीति समाना श्रुतिरुभयत्रापीति । अर्थपाठौ परिशिष्येते तत्र चार्थो बलीयानिति। नच ताण्ड्यादिश्रुत्यविरोधः पूर्वपक्षे। अश्व इव रोमाणि विधूयेति हि स्वतन्त्रस्य पुरुषस्य

आनन्दगिरीयव्याख्या

वचनमधिकृत्य श्रुतिविप्रतिपत्त्या संशयमाह—**तदिति** । अश्व इव रोमाणि विधूय पापमित्यारभ्य धूत्वा शरीरमित्युक्त्वा ब्रह्मलोकमभिसंभवामीति श्रुत्वा देहत्यागात्प्रागेव सुकृतादिहानोक्तेर्विद्यासामर्थ्याच्च जीवत एव तद्धानसिद्धेः सति पुष्कले हेतौ कार्यक्षेपायोगाद्विद्यायाश्च कर्मक्षये पुष्कलहेतुत्वात्सुकृतदुष्कृते विधूनुत इत्यत्र च पाठक्रमादर्धपथे सुकृतादित्यागानुगमात्पाठक्रमाच्चार्थक्रमस्य बलवत्त्वात्पूर्वपक्षाभावमाशङ्क्य तत्प्राप्तिमाह—**श्रुतीति** । तत्सुकृतदुष्कृते विधूनुत इत्येतत्र पाठमात्रं किंतु तच्छब्देन सर्वनाम्ना तस्मादिति हेत्वर्थेन विरजानद्यतिक्रमस्य विधूननं प्रति हेतुतां वदन्ती श्रुतिरियम् । नच श्रुत्यन्तरविरोधोऽर्धपथेऽपि कर्मक्षयस्य ब्रह्मलोकसंभवनात्प्राक्कालत्वसिद्धेरिति भावः । विधूननशब्दवत्सुकृतादिहानस्य काकोक्तिद्वारा वाक्यार्थधीहेतुकथनात्पादादिसंगतिः । पूर्वपक्षे विद्यासामर्थ्यानादरः । सिद्धान्ते तदादरणमित्यभिप्रेत्य पूर्वपक्षप्राप्तिमुक्त्वा सिद्धान्तसूत्रमवतार्य योजयति—**पठती**-त्यादिना । किं फलवशादर्धपथे दुष्कृतादिहानं कल्प्यं किंवा तत्रैव हानहेतोः सत्त्वात् । तत्राद्यं प्रत्याह—**नहीति** । संपरेतस्य परलोकं प्रति प्रस्थितस्येत्यर्थः । द्वितीयं निराह—**विद्येति** । अनपाकृतपापस्य देवयानेन पथा गमनायोगाज्जीवत एव विदुषो विद्यासामर्थ्यात्पापहानमित्यर्थः । का तर्हि कौषीतकिश्रुतेर्गतिः, तत्राह—**तस्मादिति** । तदितिसर्वनामश्रुत्या प्रकरणपठितविद्यायाः प्राधान्यात्परामर्शाद्विरजानद्यतिक्रमस्यानन्तरप्रकृतस्याप्यप्राधान्यादपरामर्शात्पाठक्रमबाधेनार्थक्रमः स्वीकर्तव्य इत्यर्थः । किंच सति पुष्कलहेतौ कार्यं भवत्येवेति न्यायानुगृहीतं श्रुत्यन्तरमेव बलवदिति मत्वा श्रुत्यन्तरमुदाहरति—**तथाहीति** । नहि तस्याविरोधेन नयनं पूर्वपक्षे युक्तं विधूय पापमिति विधूनने पुंसः स्वातन्त्र्यदृष्टेरित्याशयेनाह—**अश्व इवेति** । किंच प्रागवस्थायामेव सुकृताद्यादानस्य श्रुतत्वात्कृते न तत्त्यागाच्चदादानायोगाच्चार्धपथे कर्मनिवृत्तिरित्याह—**तस्येति** ॥ २७ ॥ विद्याफलत्वाद्ब्रह्मलोका-

## छन्दत उभयाविरोधात् ॥ २८ ॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात् । तस्मात्पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात् । तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम् । एवं निमित्तनैमित्तिकयोरुपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥ २८ ॥

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥




उपास्तिबोधयोर्मार्गः समो यद्वा व्यवस्थितः । सम एवोत्तरो मार्ग एतयोः कर्महानवत् ॥ १ ॥
देशान्तरफलप्राप्त्यै युक्तो मार्ग उपास्तिषु । आरोग्यवद्बोधफलं तेन मार्गो व्यवस्थितः ॥ २ ॥

क्वचित्पुण्यपापापहानसंनिधौ देवयानः पन्थाः श्रूयते क्वचिन्न । तत्र संशयः—किं हानावविशेषेणैव देवयानः पन्थाः संनिपतेदुत विभागेन क्वचित्संनिपतेत्क्वचिन्नेति । यथा तावद्धानाववि-

---

### रत्नप्रभाव्याख्या

क्षययोः श्रुतौ हेतुफलभावो विरुध्यते । किंच सति पुष्कलहेतौ न कार्यविलम्ब इति न्यायोपेतताण्ड्यादिश्रुतिविरोधस्तत्र स्यादस्मत्पक्षे त्वविरोध इत्याह—**छन्दत इति** । तस्मात्कर्महानस्य विद्याफलत्वात्केवलहानावुपायनोपसंहारो विद्यास्तुतय इति सिद्धम् ॥ २८ ॥ **गतेरर्थवत्त्वं** । क्वचित्सगुणविद्यायां मार्गः श्रूयते निर्गुणविद्यायां न श्रूयते । तत्र हानसंनिधौ मार्गस्य श्रुतत्वादनपेक्षितत्वाच्च संशये दृष्टान्तसंगत्या पूर्वपक्षमाह—**यथा तावदिति** । उपायनवन्मार्गस्यापि क्वचिच्छ्रु-

### भामतीव्याख्या

व्यापारं श्रुतं नच परेतस्यास्ति स्वातन्त्र्यम्, तस्मात्तद्विरोधः ॥ २७ ॥ **छन्दत उभयाविरोधात्** । केभ्यश्चित्पदेभ्य इदं सूत्रम् । ननु यथा परेतस्योत्तरेण पथा ब्रह्मप्राप्तिर्भवतीति विद्याफलमेवं तस्यैवार्धपथे सुकृतदुष्कृतहानिरपि भविष्यतीति शङ्कापदानि तेभ्य उत्तरमिदं सूत्रम् । तद्व्याचष्टे—**यदि च देहादपसृप्तस्येति** । विद्याफलमपि ब्रह्मप्राप्तिर्नापरेतस्य भवितुमर्हतीति शङ्कापदेभ्यः । यथाहुः—नाजनित्वा तत्र गच्छन्तीति । सुकृतदुष्कृतप्रक्षयस्तु सत्यपि नरशरीरे संभवतीति समर्थस्य हेतोर्यमनियमादिसहिताया विद्यायाः कार्यक्षयायोगाद्युक्तो जीवत एव सुकृतदुष्कृतक्षय इति सिद्धम् । छन्दतः स्वच्छन्दतः स्वेच्छयेति यावत् । स्वेच्छयानुष्ठानं यमनियमादिसहिताया विद्यायाः । तस्य जीवतः पुरुषस्य स्यान्न मृतस्य । तत्पूर्वकं च सुकृतदुष्कृतहानं स्याज्जीवत एव । समर्थस्य क्षेपायोगात् । एवं कारणानन्तरं कार्योत्पादे सति निमित्तनैमित्तकयोस्तद्भावस्योपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरितरथा स्वातन्त्र्याभावेनासंगतिरुक्ता स्यात् । तदनेनोभयाविरोधो व्याख्यातः । ये तु परस्य विदुषः सुकृतदुष्कृते कथं परत्र संक्रमत इति शङ्कोत्तरतया सूत्रं व्याचख्युः । छन्दतः संकल्पत इति श्रुतिस्मृत्योरविरोधादेव । न त्वत्रागमगम्येऽर्थे स्वातन्त्र्येण युक्तिर्निवेशनीयेति । तेषामधिकरणशरीरानुप्रवेशे संभवत्यर्थान्तरोपवर्णनमसङ्गतमेवेति ॥ २८ ॥ **गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः** । यथा हानिसंनिधावुपायनमन्यत्र श्रुतमिति यत्रापि केवला हानिः श्रूयते तत्रापि उपायनमुपस्थाप्यत्येवं तत्संनिधावेव देवयानः पन्थाः श्रुत इति यत्रापि सुकृतदुष्कृतहानिः केवला श्रुता तत्रापि देवयानं पन्थानमुपस्थापयितुमर्हति । नच निरञ्जनः परमं साम्यमुपैतीत्यनेन विरोधः । देवयानेन पथा ब्रह्मलोकप्राप्तौ निरञ्जनस्य परमसाम्योपपत्तेः । तस्माद्धानिमात्रे देवयानः पन्थाः संबध्यत इति प्राप्तम् । एवं प्राप्त उच्यते—विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति हि विदुषो विधूतपुण्यपापस्य विद्यया क्षेमप्राप्तिमाह । भ्रमनिबन्धनोऽक्षेमो याथात्म्यज्ञानलक्षणया विद्यया विनि-

### आनन्दगिरीयव्याख्या

मिवत्कर्मक्षयोऽपि देहत्यागादूर्ध्वं स्यादित्याशङ्क्याह—**छन्दत इति** । सूत्रं व्याचष्टे—**यदि चेति** । जीवतो ब्रह्मलोकाप्तेरयोगादेहपातापेक्षा कर्महानेस्तु देहवत एव सिद्धेर्नैवमित्यर्थः । छन्दतः स्वच्छन्दतः स्वेच्छयेति व्याकरोति—**इच्छात इति** । अर्थस्य हेत्वनुष्ठानासिद्ध्या साध्यासिद्धौ फलितमाह—**तस्मादिति** । उभयाविरोधादिति भागं व्याकरोति—**एवमिति** । समर्थस्य क्षेपायोगात्पूर्णे हेतावनन्तरमेव कार्योत्पत्तिरन्यथा निमित्तनैमित्तिकत्वमेव तयोर्न स्यादित्यर्थः । सूत्रपदस्यार्थान्तरमाह—**ताण्डीति** । सार्वदत्थं विद्यासामर्थ्यात्प्रागेव सुकृतादिनिवृत्तिरित्युपसंहर्तुमितीत्युक्तम् ॥ २८ ॥ सुकृतादिहानसंनिधानोक्तदेवयानगतेरुपायनवदेव सार्वत्रिकत्वप्राप्तावुक्तम्—**गतेरिति** । विचारविषयमाह—**क्वचिदिति** । संशयार्थं कोटयन्तरमाह—**क्वचिन्नेति** । हानसंनिधौ मार्गश्रुतेर्विशेषाज्ञानाच्च मार्गविषये संशयमाह—**तत्रेति** । हानसंनिधौ क्वचिदेव श्रुतोपायनस्य सार्वत्रिकत्ववत्क्वचिदेव कर्मक्षयसंनिष्युक्तस्य पथो देवयानस्य केवलक्षयश्रवणेऽपि युक्ताऽनुवृत्तिरिति संगतिगर्भं पूर्वपक्षमाह—**यथेति** । निर्गुणब्रह्मविद्या गतिमती ब्रह्मविद्यात्वात्सगुणब्रह्मविद्यावदिति भावः । प्रासङ्गिकविधूननसमर्थोक्त्या प्रस्तुतगुणोपसंहारोऽत्रापवादोक्तिद्वारा विचारस्य ब्रह्मार्थ-

शेषेणैवोपायनानुवृत्तिरुक्तैवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे । गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति क्वचिदर्थवती गतिः क्वचिन्नेति नाविशेषेण । अन्यथा ह्यविशेषेणैवैतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात् । 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ( मु० ३।१।३ ) इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत । कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् । गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥ २९ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति । तल्लक्षणार्थोपलब्धेः । गतिकारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते । तत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते तत्रार्थवती गतिः । नहि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किंचिदस्ति तत्रानर्थिका गतिः । लोकवच्चैष विभागो द्रष्टव्यो यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तावेवमिहापीति । भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥ ३० ॥

---

रत्नप्रभाव्याख्या

तत्त्वात्सर्वत्रोपसंहार इत्यर्थः । अत्र निर्गुणविदोऽपि मुक्त्यर्थं मार्गापेक्षा पूर्वपक्षे, सिद्धान्ते त्वनपेक्षेति फलम् । देशादिव्यवहितवस्तुप्राप्तौ मार्गस्यापेक्षेतिन्यायानुगृहीतश्रुतिविरोधान्नोपसंहार इति सिद्धान्तः । निरञ्जनोऽसङ्गः, साम्यं ब्रह्म ॥ २९ ॥ ननु तर्हि सगुणविद्यायामपि मार्गो व्यर्थ इत्यत आह—उपपन्न इति । सा गतिर्लक्षणं कारणं यस्यार्थस्य स

भामतीव्याख्या

वर्तनीयः । नासौ देशविशेषमपेक्षते । नहि जातु रज्जौ सर्पभ्रमनिवृत्तये समुत्पन्नं रज्जुतत्त्वज्ञानं देशविशेषमपेक्षते । विद्योत्पादस्यैव स्वविरोध्यविद्यानिवृत्तिरूपत्वात् । नच विद्योत्पादाय ब्रह्मलोकप्राप्तिरपेक्षणीया । यमनियमादिविशुद्धसत्त्वस्येहैव श्रवणादिभिर्विद्योत्पादात् । यदि परमारब्धकार्यकर्मक्षपणाय शरीरपातावध्यपेक्षेति न देवयानेनास्तीहार्थ इति श्रुतिदृष्टविरोधापाधितव्य इति । अस्ति तु पर्यङ्कविद्यायां तस्यार्थ इत्युक्तं द्वितीयेन सूत्रेणेति । ये तु यदि पुण्यमपि निवर्तते किमर्था तर्हि गतिरित्याशङ्क्य सूत्रमवतारयन्ति । गतेरर्थवत्त्वमुभयथा दुष्कृतनिवृत्त्या सुकृतनिवृत्त्या च । यदि पुनः पुण्यमनुवर्तेत ब्रह्मलोकगतस्यापीह पुण्यफलोपभोगायावृत्तिः स्यात् । तथा चैतेन प्रतिपद्यमाना इत्यनावृत्तिश्रुतिविरोधः । तस्माद्दुष्कृतस्येव सुकृतस्यापि प्रक्षय इति तैः पुनरनाशङ्कनीयमेवाशङ्कितम् । विद्याक्षिप्तायां हि गतौ केयमाशङ्का यदि क्षीणसुकृतः किमर्थमयं यातीति । नह्येषा

आनन्दगिरीयव्याख्या

ज्ञानोपायगामित्वात्पादादिसंगतिः । पूर्वपक्षे निर्गुणविदोऽपि गत्यपेक्षाया नियतिः । सिद्धान्ते सगुणविद्यावत एव तदपेक्षेति विवक्षित्वा सिद्धान्तयति—अस्यामिति । प्रतिज्ञां व्याख्याय हेतुं व्याख्याति—अन्यथेति । विरोधमेव साधयति—कथं हीति । सर्वगतस्यासङ्गस्यात्मनो नोपाध्यतिरेकेण गत्युपपत्तिरित्यर्थः । गन्तृरूपालोचनया गतेरयोगमुक्त्वा गन्तव्यरूपालोचनयापि तदयोगमाह—गन्तव्यं चेति । स्वतो भिन्नयोरैक्यायोगादाविद्ये भेदे विपर्ययेव निवृत्तेर्थवायाश्च स्वोत्पत्तौ स्वफले वा देशभेदापेक्षाभावादनर्थिका गतिरित्युपसंहरति—इतीति । निर्गुणब्रह्मधीः सप्तम्यर्थः ॥ २९ ॥ निर्गुणविद्यायां गतिर्व्यर्थेति प्राधान्येनोक्त्वा पर्यङ्कविद्यादौ प्राधान्येन तदर्थवत्त्वमाह—उपपन्न इति । तत्र प्रतिज्ञां व्याकरोति—उपपन्नश्चेति । क्वचिदर्थवती गतिरित्यत्र हेतुमवतार्य लक्षणशब्दस्य लक्षणया कारणार्थत्वं गृहीत्वा व्याचष्टे—तदिति । उपलब्धिमेवाभिनयति—तत्रेति । देशाद्देशान्तरप्राप्त्यायत्ते फले श्रुते फलितमाह—तत्रेति । पर्यङ्कविद्यासगुणोपास्तिः सप्तम्यर्थः । निर्गुणविद्यायामपि हेतुरस्तीत्याशङ्क्याह—न स्थिति । तदेवोपपादयति—नहीति । तेषां प्राप्तपरानन्दत्वमाह—आप्तेति । इहेति जीवदवस्थोक्तिः । निरस्तसमस्तानर्थत्वमाह—दग्धेति । तर्हि सद्यो देहपातः स्याच्चेत्याह—आरब्धेति । हेतोर्व्यभिचारं निरस्य क्वचिन्नेत्युक्तं निगमयति—तत्रेति । सम्यग्धीः सप्तम्यर्थः । निर्गुणब्रह्मविद्याचिरादिगतिमान्मुक्तिफलभावत्वान्नुच्यमानहिरण्यगर्भवदिति भावः । क्वचिदर्थवती गतिः क्वचिन्नेत्युक्तं सौत्रेण दृष्टान्तेन स्पष्टयति—लोकवच्चेति । इहेति सगुणनिर्गुणविद्योक्तिः । इतिशब्दः सूत्रव्याख्यासमाप्तौ । 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुतेर्देवयानेनाध्वना गतस्यैव मुक्तिरित्याशङ्क्याह—भूयश्चेति ॥ ३० ॥ सगुणनिर्गुणविद्यासु

धर्मा उच्यन्ते सत्याः कामा अस्येति । तथाप्युपाधिसंबन्धाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसंभवः । अनेकाकारत्वप्रतिषेधात् । प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम् 'न स्थानतोऽपि परस्योभयलिङ्गम्' (ब्र० सू० ३।२।११) इत्यत्र । अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवत् । नहि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि निमित्तानि शक्यन्ते वर्णयितुं द्वितीयविषयत्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥

**संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥**




भोग्यसृष्टावस्ति बाह्यो हेतुः संकल्प एव वा ॥ आज्ञामोदकवैषम्याद्धेतुर्बाह्योऽस्ति लोकवत् ॥ १ ॥
संकल्पादेव पितर इति श्रुत्यावधारणात् ॥ संकल्प एव हेतुः स्याद्वैषम्यं चानुचिन्तनात् ॥ २ ॥

हार्दविद्यायां श्रूयते—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा० ८।२।१) इत्यादि । तत्र संशयः—किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति । तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता । यथा लोकेऽस्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि

रत्नप्रभाव्याख्या

तत्राह—**अत एव चेति** । सर्वधर्मनिषेधादेवेत्यर्थः ॥ ६ ॥ धर्माणां सत्यत्वमत्यन्तासत्यत्वं चेति पक्षद्वयमयुक्तम् । अद्वैतश्रुतीनां सर्वज्ञत्वादिश्रुतिव्यवहारयोश्च बाधापातादतस्तृतीयपक्षः श्रेयानिति सिद्धान्तयति—**एवमपीति** । अत्र केचिन्मुह्यन्ति—अखण्डचिन्मात्रज्ञानान्मुक्तस्याज्ञानाभावात्कुत आज्ञानिकधर्मयोग इतिं, ते इत्थं बोधनीयाः । ये ईश्वरधर्मास्त एव चिदात्मनि मुक्ते जीवान्तरैर्व्यवह्रियन्ते इति । नच मूलाविद्यैक्यात्तन्नाशे कुतो जीवान्तरमिति वाच्यं, न वयं तन्नाशे जीवान्तरव्यवहारं ब्रूमः, किंतु तदंशनाशेनांशारब्धाध्यात्मिकशरीरद्वयाभिमानिनो मुक्तावंशान्तरोपाधिका जीवा व्यवहर्तार इति वदामः । तर्हि नानाविद्यापक्ष एव कुतो नाद्रियते जीवभेदस्यावश्यकत्वादिति चेत् । न । प्रकृतिनानात्वं प्रतिजीवं प्रपञ्च भेद इत्याद्यप्रामाणिकानेकार्थगौरवादिति सर्ववृद्धसंमत एकाविद्यापक्ष एव श्रेयान्, अंशभेदेन च बन्धमुक्तिव्यवस्थेति संक्षेपः ॥ ७ ॥ एवं परविद्याफलमुक्तमिदानीमपरविद्याफलं प्रपञ्चयति—**संकल्पादेव तु तच्छ्रुतेः** । एवकारस्यायोगान्ययोग-

भामतीव्याख्या

**एवैते** अपहतपाप्मत्वादयो न तु सांव्यवहारिका अपीति ॥ ६ ॥ **एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः** । तदेतदतिशौण्डीरमौडुलोमेर्न मृष्यते । बादरायण आचार्यो मृष्यन्नपि हि तन्मतम् ॥ एवमपीत्यौडुलोमिमतमनुजानाति । शौण्डीरं तु न सहत इत्याह—**व्यवहारापेक्षयेति** । एतदुक्तं भवति—सत्यं तात्त्विकानन्दचैतन्यमात्र एवात्मा, अपहतपाप्मसत्यकामत्वादयस्त्वौपाधिकतयाऽतात्त्विका अपि व्यावहारिकप्रमाणोपनीततया लोकसिद्धा नात्यन्तासन्तो येन 'तच्छन्दा राहोः शिर इतिवद्वाच्या इत्यर्थः ॥ ७ ॥ **संकल्पादेव तु तच्छ्रुतेः** । यत्नानपेक्षः संकल्पो लोके वस्तुप्रसाधनः । न दृष्टः सोऽत्र यत्नस्य लाघवादवधारितः ॥ लोके हि कंचिदर्थं चिकीर्षुः प्रयतते प्रयतमानः समीहते समीहानस्तमर्थमाप्नोतीति क्रमो दृष्टः । न त्विच्छानन्तरमे-

आनन्दगिरीयव्याख्या

शङ्कयाह—**सत्येति** । उपाधीनामपि तदभेदाद्वास्तवमेव धर्मत्वमित्याशङ्कयाह—**अनेकेति** । उपन्यासस्यैव त्रिविधव्यपदेशयोगतिमाह—**अत इति** । अनेकाकारत्वस्य निषिद्धत्वादेवेति यावत् । दृष्टान्तेऽपि मुख्यत्वमाशङ्क्योक्तम्—**नहीति** । उपन्यासादीनामन्यथासिद्धत्वे श्रुतिसिद्धमर्थमुपसंहरति—**तस्मादिति** ॥ ६ ॥ सिद्धान्तयति—**एवमपीति** । चिन्मात्रस्यापि सतो ब्रह्मणस्तत्त्वातत्त्वविभागाद्द्विधात्वसिद्धिरिति सूत्रार्थं विवृणोति—**एवमित्यादिना** ॥ ७ ॥ पूर्वाधिकरणेषु परविद्याफलमभिधायापरविद्याफलं प्रपञ्चयितुमधुनोपक्रमते—**संकल्पादिति** । विषयं वक्तुं वाक्यमुदाहरति—**हार्देति** । एवकारस्यायोगान्ययोगव्यवच्छेदसाधारणतया संकल्पं विषयीकृत्य संशयमाह—**तत्रेति** । अत्र च सगुणब्रह्मविदो ब्रह्मभूतस्य विभूतिनिर्माणसाधननिरूपणात्पादादिसंगतिः । पूर्वपक्षे लोकवृत्तानुसारित्वं सिद्धान्ते श्रुतिवृत्तानुसारि चरणमित्यभिप्रेत्यावधारणश्रुत्या संकल्पस्य निरपेक्षत्वसिद्धया पूर्वपक्षानुत्थानमाशङ्कयाह—**तत्रेति** । लोकवदित्युक्तं विवृणोति—**यथेति** । मुक्तस्य पित्रादिभोगहेतुसंपत्तिः संकल्पातिरिक्तयत्नादिसापेक्षा भोगहेतुसंपत्तित्वादस्मदादिभोग-

स्यात् । एवं दृष्टविपरीतं न कल्पितं भविष्यति । संकल्पादेवेति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते । नच संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते ब्रूमः—संकल्पादेव तु केवलात्पित्रादिसमुत्थानमिति । कुतः—तच्छ्रुतेः । 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' ( छा० ८।२।१ ) इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत । निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्याद्भवतु न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमितीष्यते । प्राक्संपत्तेर्वन्ध्यसंकल्पत्वप्रसङ्गात् । नच श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतोदृष्टं क्रमते । संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः । प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव चावन्ध्यसंकल्पत्वादनन्याधिपतिर्विद्वान्भवति नास्यान्योऽधिपतिर्भवतीत्यर्थः । न हि प्राकृतोऽपि संकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ संकल्पयति । श्रुतिश्चैतद्दर्शयति—

### रत्नप्रभाव्याख्या

व्यवच्छेदसाधारण्यात्संशयः, ब्रह्मलोकं गतस्योपासकस्य संकल्पो यत्नान्तरसापेक्षः, भोगसामग्रीसंकल्पत्वादस्मदादिसंकल्पवत् । न चैवकारविरोधः संकल्पेन सामग्र्याद्ययोगव्यवच्छेदेन सौलभ्यार्थत्वात्, यत्नानङ्गीकारे भोगपुष्टयसिद्धेश्चेति पूर्वपक्षार्थः । अत्र लोकवृत्तानुसरणं फलं, सिद्धान्ते तु विद्याबलेन संकल्पस्यैव भोगपुष्टिकरत्वसिद्धिरिति भेदः । किंच यदि भोगसंकल्पानन्तरमपि यत्नान्तरसाध्यनिमित्तापेक्षा स्यात्तर्हि निमित्तप्राप्तेः प्रागजातसंकल्पस्य वन्ध्यत्वं स्याद्भोगे विलम्बात्ततः सत्यसंकल्पश्रुतेर्न यत्नान्तरापेक्षेत्याह—निमित्तान्तरमपि त्विति ॥ ८ ॥ नन्वीश्वराधीनस्य विदुषः कथं संकल्पमात्राद्भोगसिद्धिरत आह—अत एवेति । ईश्वरधर्म एव विदुष्याविर्भूत इति न संकल्पभङ्ग इति भावः ॥ ९ ॥ एवकारवन्मनसेति विशेषणेनान्य-

### भामतीव्याख्या

वास्येच्यमाणमुपतिष्ठते । तेन श्रुत्यापि लोकवृत्तमनुरुध्यमानया विदुषस्तादृश एव क्रमोऽनुमन्तव्यः । अवधारणं तु संकल्पादेवेति लौकिकं यत्नगौरवमपेक्ष्य विद्याप्रभवतो विदुषो यत्नलाघवात् । यत्तु तदसत्कल्पमिति । स्यादेतत् । यथा मनोरथमात्रोपस्थापिता स्त्री स्त्रैणानां चरमधातुविसर्गहेतुरेवं पित्रादयोऽप्यस्य संकल्पोपस्थापिताः कल्पिष्यन्ते स्वकार्यायेत्यत आह—नच संकल्पमात्रसमुत्थाने इति । सन्ति हि खलु कानिचिद्वस्तुस्वरूपसाध्यानि कार्याणि यथा स्त्रीवस्तुसाध्यानि दन्तक्षतमणिमालादीनि । कानिचित्तु ज्ञानसाध्यानि यथोक्तचरमधातुनिसर्गरोमहर्षादीनि । तत्र मनोरथमात्रोपनीते पित्रादौ भवन्तु तज्ज्ञानमात्रसाध्यानि कार्याणि ननु तत्साध्यानि भवितुमर्हन्ति । नहि स्त्रैणस्य रोमहर्षादिवद्भवन्ति स्त्रीवस्तुसाध्या मणिमालादयस्तदिदमुक्तं पुष्कलभोगमिति प्राप्तेऽभिधीयते—पित्रादीनां समुत्थानं संकल्पादेव तच्छ्रुतेः । न चानुमानबाधोऽत्र श्रुत्या तस्यैव बाधनात् ॥ प्रमाणान्तरानपेक्षा हि श्रुतिः स्वार्थं गोचरयन्ती न स्वसामग्रीमध्यपातेनापेक्षमाणं प्रमाणान्तरेण शक्या बाधितुम् । अनुमानमेव तु स्वोत्पादाय पक्षधर्मतादिवन्मानान्तराबाधितविषयत्वं नोपपद्यते । तस्माद्विद्यासामग्रीखण्डनेन तद्विरुद्धया श्रुत्या बाध्यते । अत एव नरशिरःकपालादिशौचानुमानमागमबाधितविषयतया

### आनन्दगिरीयव्याख्या

हेतुमंपसिवदिति मत्वा दार्ष्टान्तिकमाह—एवमिति । अनुमानफलमाह—एवं दृष्टेति । लोकवृत्तानुसारेण श्रुतेरर्थवत्त्वसिद्धावेव तद्विपरीतं न कल्प्यमिह स्वधारणस्य तदनुसरणे सत्यर्थवत्त्वमेव न स्यादित्याशङ्क्याह—संकल्पादिति । पित्रादेः संकल्पमात्रजन्यत्वे मनोरथविजृम्भितस्त्रीपुत्रादिवदर्थक्रियासामर्थ्याभावादपि संकल्पातिरिक्तसाधनापेक्षा वक्तव्येत्याह—नचेति । मनोरथनिर्मितादपि दर्पादिकार्यं दृष्टमित्याशङ्क्य ज्ञानमात्रसाध्यकार्यसत्त्वेऽपि ज्ञेयवस्तुसाध्यं कार्यं तत्र नास्तीत्याह—पुष्कलमिति । संकल्पस्य यत्नादिसापेक्षस्यैव पित्रादिनिर्माणहेतुत्वेतदनूद्य सिद्धान्तसूत्रमवतार्य व्याकरोति—एवमिति । संकल्पस्य यत्नसापेक्षत्वेऽनुमानस्योक्तत्वात्तस्य केवलस्य पित्राद्युद्भवहेतुतेति शङ्कते—कुत इति । श्रुतिविरुद्धतया कालात्ययापदिष्टमनुमानमित्याह—तच्छ्रुतेरिति । किंच निमित्तान्तरमपि संकल्पायत्तं वा यत्नान्तरसाध्यं वा, तत्राद्यमङ्गीकृत्य द्वितीयं दूषयति—निमित्तान्तरमिति । ननु लोकवत्संकल्पापेक्षया विलम्बितोत्पत्तिकत्वात्प्राक्तदुत्पत्तेर्विदुषो मोघसंकल्पत्वं स्यात्तथ द्वितीयस्यायुक्तत्वमित्याह—प्रागिति । ननु लोकवन्निमित्तान्तरापेक्षेति, तत्राह—नचेति । यदपि मनोरथविजृम्भितवदनिश्चलत्वान्न भोगसाधनत्वं संकल्पप्रभवानां पित्रादीनामिति, तत्राह—संकल्पेति । अस्मदादिसंकल्पितेष्वदृष्टं स्थैर्यं कथं मुक्तसंकल्पितेषु कल्प्यते, तत्राह—प्राकृतेति ॥ ८ ॥ विदुषः सत्यसंकल्पत्वे लाभान्तरमाह—अत इति । उपासितुरीश्वराधीनो भोगो न संकल्पमात्राद्भवितुमर्हतीत्याशङ्क्य सूत्रं व्याकरोति—अत एवेति । सत्यसंकल्पत्वेऽपि कथमीश्वराधीनत्वं विदुषो नेष्यते, तत्राह—नहीति । ईश्वरप्रसादाद्भोगः स्यादिति प्रार्थयमानो जनो दृश्यत इत्याशङ्क्याह—सत्यामिति । विदुषोऽनन्याधीनत्वमैश्वर्यमस्तीत्यत्र मानमाह—श्रुतिश्चेति । विद्यानुबन्धद्वारा तत्फलो

'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा० ८।१।६) इति ॥ ९ ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥




व्यवस्थितावैच्छिकौ वा भावाभावौ तनोर्यतः ॥ विरुद्धौ तेन पुंभेदादुभौ स्यातां व्यवस्थितौ ॥ १ ॥
एकस्मिन्नपि पुंस्येतावैच्छिकौ कालभेदतः ॥ अविरोधात्स्वप्नजाग्रद्भोगवद्युज्यते द्विधा ॥ २ ॥

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा० ८।२।१) इत्यादि श्रुतेर्मनस्तावत्संकल्पसाधनं सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न वा सन्तीति समीक्ष्यते । तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते । कस्मात् । एवं ह्याहाम्नायः 'मनसैतान्कामान्पश्यन्रमते' (छा० ८।१२।५) 'य एते ब्रह्मलोके' (छा० ८।१३।१) इति । यदि मनसा शरीरेन्द्रियैश्च विहरेन्मनसेति विशेषणं न स्यात् । तस्मादभावः शरीरेन्द्रियाणां मोक्षे ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते । यतः 'स एकधा भवति त्रिधा भवति' (छा० ७।२६।२) इत्यादिनाऽनेकधाभावविकल्पमामनन्ति । न ह्यनेकविधता विना शरीरभेदेनाञ्जसी स्यात् । यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावविकल्पः

---

रत्नप्रभाव्याख्या

योगव्यवच्छेदाद्देहाद्यभाव इति पूर्वपक्षयति—**अभावं बादरिराह ह्येवम्** । अत्रापि वादिविवादात्संशयः, तत्र देहादयो न सन्त्येव सदा सन्त्येवेति च पक्षद्वयं पूर्वपक्षः । कालभेदेनेच्छया सन्ति न सन्ति चेति सिद्धान्तपक्षो द्रष्टव्यः । फलं तु

भामतीव्याख्या

भावाद्विदुषां संकल्पमात्रादेव पित्राद्युपस्थानमिति सांप्रतम् । तथाहुरागमिनः—को हि योगप्रभावादृतेऽगस्त्य इव समुद्रं पिबति स इव दण्डकारण्यं सृजति । तस्मात्सर्वमवदातम् ॥ ८ ॥ ९ ॥ **अभावं बादरिराह ह्येवम्** । अन्ययोगव्यवच्छित्त्या मनसेति विशेषणात् । देहेन्द्रियवियोगः स्याद्विदुषो बादरेर्मतम् ॥ अनेकधाभावश्रुद्धिप्रभावभुवो मनोभेदाद्वा स्तुतिमात्रं वा कथंचिद्भूमविद्यायां निर्गुणायां तदसंभवादसतापि हि गुणेन स्तुतिर्भवत्येवेति ॥ १० ॥ **भावं जैमिनिर्विकल्पामननात्** । शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः । न चार्थसंभवे युक्तं स्तुतिमात्रमनर्थकम् ॥ नहि मनोमात्रभेदे स्फुटतरोऽनेकधाभावो यथा शरीरेन्द्रियभेदे । अत एव सौभरेरभिनिर्मितविविधदेहस्यापर्यायेण मान्धातृकन्याभिः पञ्चाशता विहारः पौराणिकैः स्मर्यते । न चार्थसंभवे स्तुतिमात्रमनर्थकमवकल्पते । संभवति चास्यार्थवत्त्वम् । यद्यपि निर्गुणायामिदं भौमविद्यायां पठ्यते तथापि तस्याः पुरस्तादनेन

आनन्दगिरीयव्याख्या

मित्यारम्भार्थोऽथशब्दः ॥ ९ ॥ विदुषो ब्रह्मीभूतस्य सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्व्यावहारिकतात्त्विकताभ्यां व्यवस्थामुक्त्वा संकल्पातिरिक्तसाधनभावाभावयोरेकोपाधावापाततो विरोधाल्लोकसिद्धपदपदार्थापेक्षायाः श्रुतेर्लौकिकादनुमानाद्बाध इति पूर्वपक्षयित्वा पदपदार्थधीमात्रेण श्रुतेरपेक्षायामपि वाक्यार्थबोधने तदभावाद्विमतो यत्नाद्यनपेक्षसंकल्पजन्यो योगजन्यसामर्थ्यदृष्टत्वादगस्त्यकृतसमुद्रपानवदित्यनुमानानुगृहीतश्रुत्या बाधितत्वादनुमानस्य संकल्पमात्रसिद्ध्या विदुषो भोगहेतुसिद्धिरित्युक्तम् । संभवत्यवधारणादन्ययोगव्यवच्छेदेन संकल्पस्यैव पित्रादिसाधनत्ववदिहापि मनसेति विशेषणस्यान्ययोगव्यवच्छेदकत्वेनावधारणार्थत्वाद्विदुषो देहाद्यभाव इति पूर्वपक्षयति—**अभावमिति** । मनसः सद्भावोऽपि किमिति विदुषो न विचार्यते, तत्राह—**संकल्पादेवेति** । शरीरेन्द्रियाणि विषयस्तानि किं विद्यावतो मुक्तस्य सन्ति किंवा न सन्त्याहो सन्ति च न सन्ति चेति वादिविप्रतिपत्तेः संशयमाह—**शरीरेति** । अत्र सगुणब्रह्मविदः संकल्पादेव देहादिभावाभावयोरुक्त्या ब्रह्माधीफलविभूतेरुक्तेरस्ति पादादिसंगतिः । पूर्वपक्षे विशेषणश्रुतेरनेकधाभावश्रुतेर्वा मुख्यार्थत्वसिद्धिः । सिद्धान्ते द्वयोरपि श्रुत्योर्विदुषः सत्यसंकल्पत्वादेव मुख्यार्थत्वोपपत्तिरित्यङ्गीकृत्य पूर्वपक्षसूत्रं योजयति—**तत्रेति** । सत्यामपि विप्रतिपत्तावभावनियमासिद्धिरिति शङ्कते—**कस्मादिति** । विशेषणश्रुत्या परिहरति—**एवं हीति** । पक्षान्तरेऽपि विशेषणमयोगव्यवच्छेदकत्वेन युक्तमित्याशङ्क्याह—**यदीति** । अन्ययोगव्यवच्छेदाय मनसेतिविशेषणाद्यामेन पश्यतीत्यादाविवेतरव्यावृत्तिर्गम्यते । अयोगव्यवच्छेदे तु न तथा विशेषणमर्थवदित्यर्थः । विशेषणफलमुपसंहरति—**तस्मादिति** ॥ १० ॥ पूर्वपक्षान्तरमाह—**भावमिति** । सूत्राक्षराणि योजयति—**जैमिनिस्त्विति** । विकल्पामननं मनोभेदादेव किं न स्यादित्याशङ्क्याह—**नहीति** । देहभेदाभावे मनोभेदस्यापि दुर्भणत्वान्नञ्जदकं विकल्पामननमित्यर्थः । निर्गुणविद्याधिकारे पाठाद्विकल्पामननं स्तुतिरेवेत्याशङ्क्याह—**यद्यपीति** । देहे प्रियादिसंयोगदर्शनं

कल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इति ॥ ११ ॥ उच्यते—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते यदा सशरीरतां संकल्पयति तदा सशरीरो भवति यदा त्वशरीरतां तदाऽशरीर इति । सत्यसंकल्पत्वात् । संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा द्वादशाहः सत्रमहीनश्च भवति । उभयलिङ्गश्रुतिदर्शनादेवमिदमपीति ॥ १२ ॥

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

यदा तनोः सेन्द्रियस्य शरीरस्याभावस्तदा यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामा भवन्त्येवं मोक्षेऽपि स्युरेवं ह्येतदुपपद्यते ॥ १३ ॥

**भावे जाग्रद्वत् ॥ १४ ॥**

भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामा भवन्त्येवं मुक्तस्याप्युपपद्यते ॥ १४ ॥

---

रत्नप्रभाव्याख्या

तत्तच्छ्रुतेर्मुख्यत्वमिति विवेकः ॥ १० ॥ ११ ॥ **द्वादशाहवदिति** । य एवंविद्वांसः सत्रमुपयन्ति इत्युपायिचोदनागम्यत्वश्रुतेर्द्वादशाहस्य सत्रत्वं, आसतेति चोपयन्तीति वा चोदितत्वं सत्रलक्षणमिति स्थितिः । तथा द्वादशाहेन प्रजाकामं याजये-

भामतीव्याख्या

सगुणावस्थागतेनैश्वर्येण निर्गुणेव विद्या स्तूयते । न चान्ययोगव्यवच्छेदेनैव विशेषणम् । अयोगव्यवच्छेदेनापि विशेषणात् । यथा चैत्रो धनुर्धरः । तस्मान्मनःशरीरेन्द्रिययोग ऐश्वर्यशालिनां नियमेनेति मेने जैमिनिः ॥ ११ ॥ **द्वादशाहवदुभयविधं बादरायणोऽतः**। मनसेति केवलमनोविषयां च स एकधा भवति त्रिधा भवतीति शरीरेन्द्रियभेदविषयां च श्रुतिमुपलभ्यानियमवादी खलु बादरायणो नियमवादौ पूर्वयोर्न सहते । द्विविधश्रुत्यनुरोधात् । न चायोगव्यवच्छेदेनेवंविधेषु विशेषणमवकल्पते । कामेषु हि रमणं समनस्केन्द्रियेण शरीरेण पुरुषाणां सिद्धमेवेति नास्ति शङ्का मनोयोगस्येति तद्व्यवच्छेदो व्यर्थः । सिद्धस्य तु मनोयोगस्य तदन्यपरिसंख्यानेनार्थवत्त्वमवकल्पते । तस्माद्वामेनाक्ष्णा पश्यतीतिवदत्रान्ययोगव्यवच्छेद इति सांप्रतम् । **द्वादशाहवदिति** । द्वादशाहस्य सत्रत्वमासनोपायिचोदने । अहीनत्वं च यजतिचोदने सति गम्यते ॥ द्वादशाहमृद्धिकामा उपेयुरित्युपायिचोदनेन य एवं विद्वांसः सत्रमुपयन्तीति च द्वादशाहस्य सत्रत्वं बहुकर्तृकस्य गम्यते । एवं तस्यैव द्वादशाहेन प्रजाकामं याजयेदिति यजतिचोदनेन नियतकर्तृपरिमाणत्वेन द्विरात्रेण यजेतेत्यादिवदहीनत्वमपि गम्यत इति संप्रति शरीरेन्द्रियाभावेन मनोमात्रेण विदुषः स्वप्नवत्सूक्ष्मो भोगो भवति । कुतः— उपपत्तेः । मनसैतानिति श्रुतेः । यदि पुनः सुषुप्तवद्भोगो भवेत् नैषा श्रुतिरुपपद्येत । नच सशरीरस्योपभोगः शरीराद्यनुपादानवैयर्थ्यात् । सशरीरस्य तु पुष्कलो भोगः । इहाप्युपपत्तेरित्यनुषञ्जनीयम् । तदिदमुक्तं सूत्राभ्याम् **तन्वभावे संध्यवदुप-**

आनन्दगिरीयव्याख्या

निर्गुणध्याने स्तुतित्वेनानेकधात्वस्यान्वयेऽपि विशिष्टभोगसंसर्गयोग्ये दहराद्युपासने फलत्वेनान्वय इत्यर्थः । ननु मनसेति विशेषणमन्ययोगव्यावर्तकं देहादि व्यवच्छिनत्तीति युक्तं चैत्रो धनुर्धर इतिवदयोगव्यवच्छेदेनापि तद्योगादिति भावः ॥ ११ ॥ सिद्धान्तयति— उच्यत इति । सूत्रं व्याचष्टे—**बादरायण इति** । मनसेतिविशेषणसामर्थ्यादेकधा भवति त्रिधा भवतीत्यादिविकल्पाम्नानसामर्थ्याच्चेत्यतःशब्दार्थं स्फुटयति—**उभयेति** । सशरीरत्वमशरीरत्वं चैकस्यैव विरुद्धमित्याशङ्क्य कालभेदादविरोधं दर्शयति—**यदा त्विति** । कार्यवैचित्र्ये हेतुः—**संकल्पेति** । विदुषः संकल्पानुसारि कार्यमित्यत्र हेतुमाह—**सत्येति** । इतिशब्दस्योभयविधत्वमिति पूर्वेण संबन्धः । प्रकृते तु मनसैतानिति धनुर्धरत्वादि हि विशेषणं पाक्षिकप्राप्तविशेषपदयोगव्यवच्छेदकं युक्तं नहि चैत्रो धनुर्दधान एवावतिष्ठते । कामभोगेषु मनसो नित्यप्राप्तत्वात्तदनुवादेनान्ययोगनिवृत्त्यर्थत्वात् इत्याशङ्क्य दृष्टान्तमवतार्य व्याचष्टे—**द्वादशाहवदिति** । तस्य बहुकर्तृकतया सत्रत्वे नियतकर्तृकतयाऽहीनत्वे च हेतुमाह—**उभयेति** । द्वादशाहो हि यजनानवदुत्पादासनोपायनोपदेशाच्च सत्रं य एवं विद्वांसः सत्रमुपयन्तीत्युपायनचोदनादर्शनात्सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्नित्यासनचोदनायाश्च द्वादशाहाधिकारे दृष्टत्वादासनोपायनचोदनयोरन्यतरत्वस्य सत्रलक्षणत्वाद्द्वादशाहेन प्रजाकामं याजयेदिति यजतिचोदनादर्शनान्नियतकर्तृकत्वावगमाच्च द्विरात्रवदहीनत्वं चास्य गम्यते । तथेदमपि विदुषः सशरीरत्वमशरीरत्वं च द्विविधश्रुतिसिद्धं विचित्रसंकल्पनिबन्धनमविरुद्धमित्यर्थः ॥ १२ ॥ विदुषो देहाद्यसत्त्वमयुक्तं भोगाभावप्रसङ्गादित्याशङ्क्याह—**तन्वभाव इति** । स्वप्ने देहाभावेऽपि तत्र संनिकर्षस्य ज्ञानहेतुना मनःस्थितिमात्रहेतुत्वेनान्यथासिद्धत्वाद्योगिनश्च विद्यासामर्थ्यादेव मनोवस्थानादिति मत्वाह—**संध्यवदिति** । सूत्राक्षराणि व्याकरोति—**यदेत्यादिना** । विदुषो देहादेरभावे मनसेतिविशेषणोपपत्तिं हेतूकरोति—**एवं हीति** ॥ १३ ॥ तर्हि देहाद्युपादानमनर्थकं, तत्राह—**भाव इति** । पुष्कलभोगसिद्ध्यर्थं देहाद्यादानमिति मन्वानः सूत्रं योजयति—**भावे पुनरिति** ॥ १४ ॥ संकल्पाधीनमनेकदेह-

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥




निरात्मनोऽनेकदेहाः सात्मका वा निरात्मकाः ॥ अभेदादात्ममनसोरेकस्मिन्नेव वर्तनात् ॥ १ ॥
एकस्मान्मनसोऽन्यानि मनांसि स्युः प्रदीपवत् ॥ आत्मभिस्तदवच्छिन्नैः सात्मकाः स्युस्त्रिधेत्यतः ॥ २ ॥

'भावं जैमिनिर्विकल्पामननात्' (ब्र० सू० ४।४।११) इत्यत्र सशरीरत्वं मुक्तस्योक्तम्। तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्रवत्सृज्यन्ते किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा। तत्र चात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति। एवं प्राप्ते प्रतिपद्यते—प्रदीपवदावेश इति। यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात्। एवमेकोऽपि सन्विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति। कुतः, तथाहि दर्शयति शास्त्रमेकस्यानेकभावम्—'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा० ७।२६।२) इत्यादि। नैतद्दारुयन्त्रोपमाभ्यु-

---

### रत्नप्रभाव्याख्या

दिति यजतिचोदनादर्शनान्नियतकर्तृकत्वावगमेन द्विरात्रादिवदहीनत्वं चेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ प्रदीपवदावेशः। संकल्पमात्रान्निर्मितदेहानुपजीव्य तेषूभयथादर्शनात्संशयमाह—भावमिति। अनादिलिङ्गशरीरस्यैकस्मिन्नेव शरीरे भावान्निर्मितानेकदेहेषु भोगासिद्धिः पूर्वपक्षफलं, सिद्धान्ते तत्सिद्धिरिति मत्वा सूत्रं व्याचष्टे—यथेत्यादिना। स एकधा त्रिधा पञ्चधेत्यादिश्रुत्या विदुष एवानेकधाभाव उक्तः। विद्वांस्तु न देहो नापि चिन्मात्रः। किंतु लिङ्गोपहितात्मा। नच तस्य लिङ्गभेदं विनाऽनेकत्वं संभवति। अतः श्रुतिबलादेकस्यैवानादिलिङ्गस्यानेकदेहेषु प्रवेशेन भेद एष्टव्यः। यद्यपि मूलप्रदीपस्य वर्त्यन्तरेषूत्पन्नदीपानां चात्यन्तभेदोऽस्ति लिङ्गस्य तु देहभेदकृतो भेदो न स्वतः, स्वतो लिङ्गभेदे तदुपहितजीवभेदादनुसंधानानुपपत्तेः। आगन्तुकानेकलिङ्गसृष्टावसत्कार्यवादापाताच्च। तथापि प्रदीपत्वजात्यैक्येन व्यक्तिष्वैक्यारोपात् दृष्टान्तदार्ष्टान्तिकयोः साम्यं द्रष्टव्यम्। तथाच यथा प्रदीपोऽनेकवर्तिषु प्रविशति एवं विद्यायोगबलाद्विद्वल्लिङ्गस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थः। विदुषोऽनेकधात्वं श्रुतमन्यथा न घटते इत्याह—नैतदिति। इतश्च सात्मकत्वमित्याह—

### भामतीव्याख्या

पत्तेः। भावे जाग्रद्वत्। इति ॥ १२ ॥ १३ ॥ १४ ॥ प्रदीपवदावेशस्तथा हि दर्शयति। वस्तुतः परमात्मनोऽभिन्नोऽप्ययं विज्ञानात्माऽनाद्यविद्याकल्पितप्रादेशिकान्तःकरणावच्छेदेनानादिजीवभावमापन्नः प्रादेशिकः सन्न देहान्तराणि स्वभावनिर्मितान्यपि नानाप्रदेशवर्तीनि सान्तःकरणो युगपदाविष्टुमर्हति। न चात्मान्तर स्रष्टुमपि। सृज्यमानस्य सद्भूतिरेकेऽनात्मत्वादात्मत्वे वा कर्तृकर्मभावाभावाद्भेदाश्रयत्वादस्य। नाप्यन्तःकरणान्तरं तत्र सृजति सृज्यमानस्य तदुपाधित्वाभावात्। अनादिना खल्वन्तःकरणेनौत्पत्तिकेनायमवरुद्धो नेदानीन्तनेनान्तःकरणेनोपाधितया संबद्धुमर्हति। तस्माद्यथा दारुयन्त्रं तत्प्रयोक्त्रा चेतनेनाधिष्ठितं सकृदिच्छामनुरुध्यते। एवं निर्माणशरीराण्यपि सेन्द्रियाणीति प्राप्ते प्रत्यभिधीयते—शरीरत्वं न जानु स्याद्भोगाधिष्ठानतां विना। स त्रिधेति शरीरत्वमुक्तं युक्तं च तद्भिदो ॥ स त्रिधा भवति पञ्चधा सप्तधा नवधेत्यादिका श्रुतिर्विदुषो नानाभावमाचक्षमाणा भिन्नशरीरेन्द्रियोपाधिसंबन्धेऽवकल्पते नादेहहेतुभेदे। नहि यन्त्राणि भिन्नानि निर्माय वाहयन्यन्त्रवाहो नानात्वेनापदिश्यते। भोगाधिष्ठानत्वं च शरीरत्वं नाभोगाधिष्ठानेषु यन्त्रेष्विव युज्यते। तस्माद्देहान्तराणि सृजति। न चानेनाधिष्ठितानि देहपक्षे वर्तन्ते। नच सर्वगतस्य वस्तुतो विगलितप्रायाविद्यस्य विदुषः पृथग्जनस्येवौत्पत्तिकान्तःकरणवश्यता येन तदौत्पत्तिकमन्तःकरणमागन्तुकान्तःकरणान्तरसंबन्धमस्य

### आनन्दगिरीयव्याख्या

निर्माणमफलं निरात्मकेषु देहभेदेषु भोगायोगादित्याशङ्क्याह—प्रदीपवदिति। वृत्तानुवादपूर्वकं मुक्तस्योक्तानि सांकल्पिकानि शरीराणि विषयीकृत्योभयथोपलब्धेः संदेहमाह—भावमिति। तत्रेति मुक्तोक्तिः। मुक्तस्यापरविद्याफलभूतस्य सांकल्पिकेषु प्रवेशप्रकारोक्त्या पादादिसंगतिः। पूर्वपक्षे भोक्तुरेकत्वादेकत्रैव भोगसिद्धिः। सिद्धान्ते भोक्तुरैक्येऽपि स्वेच्छया तस्यानेकत्र भोगोपपत्तिरिति मत्वा पूर्वपक्षयति—तत्रेति। आत्मनो विभुत्वेऽपि मनसेव चैतन्यव्यक्तेस्तदवच्छेदकैकदेहावस्थितस्य देहान्तरावेशायोगादन्तःकरणान्तरोपादानेऽपि तस्यानाद्यन्तःकरणावच्छिन्नस्य पुनरागन्तुकान्तःकरणावच्छेदासंभवात्संभवे च जीवभेदाद्भोगाननुसंधानप्रसङ्गादेकस्मादितराणि निरात्मकानीति प्राप्तमित्यर्थः। पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतारयति—एवमिति। तत्र दृष्टान्तं व्याचष्टे—यथेति। दीपादीनां भिन्नत्वेऽपि दीपत्वस्यैकत्वमेकवर्तिवर्तिदीपेषूत्पन्नभिन्नवर्तिवर्तिनां दीपानां भिन्नतेति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमावेदयन्निदं दर्शयति—एवमिति। तत्र हेतुत्वेनावशिष्टं सूत्रावयवं व्याचष्टे—तथाहीति। यथा दारुयन्त्रं चैतन्यशून्यमपि चेतनेच्छामनुरुध्यते तथा निर्माणशरीराणि सेन्द्रियाणीति कस्मान्नाभ्युपगम्यते तेन निरात्मकत्वमेव शरीरान्तराणामित्याशङ्क्याह—नैतदिति। यन्त्रवाहकस्य हि यन्त्राणि भिन्नानि निर्माय वाहयतोऽपि नानात्वेन व्यपदेशाभावाद्विदुषश्च तथा व्यपदेशात्तद्वैध-

पगमेऽवकल्पते नापि जीवान्तरावेशे । नच निरात्मकानां शरीराणां प्रवृत्तिः संभवति । यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासंभव इति । नैष दोषः । एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति । सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया ॥ १५ ॥ कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते यावता 'तत्केन कं विजानीयात्' (बृ० ४।५।१५) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ० ४।३।३०) 'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ० ४।३।३२) इति चैवंजातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति—

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः सुषुप्तम् 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' (छा० ६।८।१) इति श्रुतेः । संपत्तिः कैवल्यम् 'ब्रह्मैव सन्ब्रह्माप्येति' (बृ० ४।४।६) इति श्रुतेः । तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते क्वचित्कैवल्यावस्थाम् । कथमवगम्यते यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीति' (बृ० २।४।१२) 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ० २।४।१४) 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' (बृ० ४।३।१९। माण्डू० ५।)

---

रत्नप्रभाव्याख्या

**नच निरात्मकानामिति** । यदनादि मन एकदेहस्थं तदनुसारीणि देहान्तरस्थानि मनांसि भवन्ति तदवस्थानां तन्नियम्यत्वसंभवादिति। अत्र योगशास्त्रसंमतिमाह—**एषैवेति** । निर्माणचित्तान्यस्मितामात्रात्प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषामिति भगवत्पतञ्जलिना सूत्रितम् । योगिनोऽभिमानमात्रान्निर्माणचित्तानि निर्माणदेहेषु भवन्ति, तेषां नियामकमनादिचित्तमित्यर्थः ॥ १५ ॥ उत्तरसूत्रव्यावर्त्यशङ्कामाह—**कथं पुनरिति** । सलिलवत्सलिलः, स्वच्छ इत्यर्थः । न तु तद्द्वितीयमस्तीति क्वचित्सुषुप्तिमधिकृत्योक्तं 'तत्केन कम्' इत्यादि क्वचिन्मुक्तिं, प्रकृत्योक्तम् । एवं विशेषज्ञानाभाववचनं सुषुप्तिमुक्त्यन्यतरापेक्षं सगुणोपासकस्य भोगोक्तौ न विरुध्यते भिन्नविषयत्वादित्याह—**स्वाप्ययेति** । तत्रैव श्रुतौ तदधिकारवशात्सुषुप्त्यादिप्रकरणबलात्, उक्तवचनानामन्यतरापेक्षात्वमाविष्कृतं हि यतः स्वतोऽवगम्यत इत्यर्थः । अत्र समुत्थानादिवाक्यं मुक्तिविषयं यत्र सुप्त-

भामतीव्याख्या

वारयेत् । तस्माद्विद्वान् सर्वस्य वशी सर्वेश्वरः सत्यसंकल्पः सेन्द्रियमनांसि शरीराणि निर्माय तानि चैकपदे प्रविश्य तत्तदिन्द्रियमन्तःकरणैस्तेषु लोकेषु मुक्तो विहरतीति सांप्रतम् । प्रदीपवदिति तु निदर्शनं प्रदीपैक्यं प्रदीपव्यक्तिपूपचर्यते भिन्नवर्तिवर्तिनीनां भिन्नव्यक्तीनां भेदात् । एवं विद्वज्जीवात्मा देहभेदेऽप्येक इति परामर्शार्थः । **एकमनोनुवर्तीनी**त्येकाभिप्रायवर्तीनीत्यर्थः ॥ १५ ॥ **कथं पुनर्मुक्तस्येति** । सलिल संपन्नः केवलो मुक्त इत्युच्यते । न चैतस्येत्थंभावसंभवः श्रुतिविरोधादित्युक्तमर्थजातमाक्षिपति—इति । सलिलमिव सलिलः सलिलप्रातिपदिकात्सर्वप्रातिपदिकेभ्य इत्युपमानादाचारे क्विपि कृते पचाद्यचि च कृते रूपम् । एतदुक्तं भवति—यथा सलिलमम्भोनिधौ प्रक्षिप्तं तदेकीभावमुपयाति । एवं द्रष्टापि ब्रह्मणेति । अत्रोत्तरं सूत्रम्—**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि** । आसु काश्चिच्छ्रुतयः सुषुप्तिमपेक्ष्य काश्चित्तु संपत्तिं तदधिकारात् । ऐश्वर्यश्रुतयस्तु सगुणविद्यावि-

आनन्दगिरीयव्याख्या

जीवान्तरावेशेऽपि नैतदवकल्पत इत्याह—**नापीति** । अव्यवच्छेदो भातीत्यर्थः । तर्हि निर्माणदेहेष्वात्मान्तराणि सृजति विद्वानित्याशङ्क्याह—**नचेति** । इति संबन्धः । एकस्यानेकभावाभावश्रुतिविरोधादननुसंधानप्रसङ्गाच्चेत्यर्थः । शरीरान्तराणां निरात्मकत्वाभावे हेत्वन्तरमाह—**यत्त्विति** । पूर्वपक्षबीजमनुभाषते—आत्मानधिष्ठितानामचेतनानां प्रवृत्त्ययोगाद्भोगाभावप्रसङ्गाच्च शरीरान्तरेषु न निरात्मकत्वमित्यर्थः । जीवभेदाभावात्तदुपाधिव्यक्त्यैवान्यो स्वतन्त्रानादिमनोभेदे सत्येव जीवभेदादेकमनःसंकल्पसमुत्थानात्तदायत्तानां मनसां भेदेऽपि जीवभेदाभावात्तदुपाधिव्यक्तत्वमेकाभिप्रायाविरोधित्वम् । उक्तेऽर्थे योगशास्त्रसंमतिमाह—विद्वानैश्वर्यभागित्युपगमे न किंचिदवद्यमिति परिहरति—**नैष इत्यादिना** । एकमनोनुवर्तनमेकाभिप्रायाविरोधित्वम् । **एषैवेति** । निर्माणचित्तान्यस्मितामात्रं प्रवृत्तिभेदप्रयोजकं चित्तमेकमनेकेषामित्यादिनैषैव प्रक्रियोक्तेत्यर्थः ॥ १५ ॥ मुक्तस्य यथोक्तमैश्वर्यं विशेषज्ञाननिषेधकश्रुतिविरुद्धमिति शङ्कते—**कथमिति** । शङ्कोत्तरत्वेन सूत्रमवतारयति—**अत इति** । प्रतिज्ञां व्याचष्टे—**स्वाप्यय इति** । उक्तमेव व्यक्तीकर्तुं विभजते—**क्वचिदिति** । तत्केन कमित्यादिकं वाक्यं क्वचिदित्युच्यते द्वितीयस्तु क्वचिच्छब्दः सलिलादिवाक्यगोचरः । हेतुभागमाकाङ्क्षाद्वारा व्याकरोति—**कथमित्यादिना** । तत्रेत्युक्तवाक्यप्रकरणोक्तिः । तदधिकारः सुषुप्तिमोक्षयोरन्यतरस्य प्रकरणम् । तत्र समुत्थानवाक्यं यत्र सुप्तवाक्यं स्वापाधिकारविषयम् । यत्र त्वस्येति मोक्षाधि-

इत्यादिश्रुतिभ्यः । सगुणविद्याविपाकस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ॥ १६ ॥

## जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥



जगत्स्रष्टृत्वमस्त्येषां योगिनामथ नास्ति वा ॥ अस्ति स्वाराज्यमाप्नोतीत्युक्तैश्वर्यानवग्रहात् ॥ १ ॥
सृष्टावप्रकृतत्वेन स्रष्टृता नास्ति योगिनाम् ॥ स्वाराज्यमीशो भोगाय ददे मुक्तिं च विग्रया ॥ २ ॥

ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित्सावग्रहमिति संशयः । किं तावत्प्राप्तम् । निरङ्कुशमेवैश्वर्यं भवितुमर्हति 'आप्नोति स्वाराज्यम्' (तै० १।६।२) 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै० १।५।३) 'तेषां सर्वेषु लोकेषु कामचारो भवन्ति' (छा० ७।२५।२; ८।१।६) इत्यादिश्रुतिभ्य इति । एवं प्राप्ते पठति—जगद्व्यापारवर्जमिति । जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य । कुतः—तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम् । पर एव हीश्वरो जगद्व्यापारेऽधिकृतः । तमेव प्रकृत्योत्पत्त्याद्युपदेशात् । नित्यशब्दनिबन्धनत्वाच्च ।

---

### रत्नप्रभाव्याख्या

इति मुक्तिविषयमिति विभागः ॥ १६ ॥ जगद्व्यापारवर्जम् । संकल्पादेवेत्यादिनोक्तैश्वर्यस्य जगत्स्रष्टृत्वादिव्यतिरिक्तविषयत्वेनात्रापवादात्संगतिः । उभयथा दर्शनात्संशयः । ईश्वरनानात्वं पूर्वपक्षफलं, सिद्धान्ते तु विद्यायोगिनामीश्वरनियम्यत्वादेकस्य नित्यसिद्धस्येश्वरस्यैव जगत्कर्तृत्वसिद्धिरिति विवेकः । प्रलयात्सर्गसमये यस्येक्षणपूर्वं कर्तृत्वं श्रुतौ प्रकृतं तस्यैव नियन्तृत्वादिर्जगद्व्यापारः । नह्युपासकानां देहं विनेक्षणं संभवति । किंचेश्वरस्य नित्यसिद्धत्वाच्छब्दैः समधिगम्यत्वाच्च जगत्स्रष्टृत्वं युक्तं, न तु तत्प्रसादलब्धसिद्धीनां जीवानामित्याह—नित्यशब्दनिबन्धनत्वाच्चेति । किंच विदुषां समप्राधान्ये मिथो

### भामतीव्याख्या

पाकावस्थापेक्षा मुक्त्यभिसंधानं तु तदवस्थासत्त्वेर्यथाऽरुणदर्शने संध्यायां दिवसाभिधानम् ॥ १६ ॥ जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च । स्वाराज्यकामचारादिश्रुतिभ्यः स्यान्निरङ्कुशः । स्वकार्ये ईश्वराधीनसिद्धिरप्यत्र साधकः ॥ 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहन्ति' 'सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतिभ्यो विदुषः परमब्रह्मण इवान्यानधीनत्वमैश्वर्यमवगम्यते । नन्वस्य ब्रह्मोपासनालब्धमैश्वर्यं कथं ब्रह्मानधीनं न तु स्वभावो नहि कारणाधीनजन्मानो भावाः स्वकार्ये स्वकारणमपेक्षन्ते । किं तत्र ते स्वतन्त्रा एव । यथाहुः—मृत्पिण्डदण्डचक्रादि घटो जन्मन्यपेक्षते । उदकाहरणे त्वस्य तदपेक्षा न विद्यते ॥ नन्विदुषां परमेश्वराधीनैश्वर्यसिद्धित्वात्तद्वृतमैश्वर्यं येन लौकिका इव राजानो महाराजाधीनाः स्वव्यापारे विद्वांसः परमेश्वराधीना भवेयुः । न खलु यदधीनोत्पादं यस्य रूपं तत्तद्रूपादूनं भवतीति कश्चिन्नियमः । तत्समानां तदधिकानां च दर्शनात्तथा ह्यन्तेवासी गुर्वधीनविद्यः तत्समस्तदधिको वा दृश्यते । दुष्टसामन्ताश्च पार्थिवाधीनैश्वर्याः पार्थिवान्स्पर्धमानास्तान्विजयमाना वा दृश्यन्ते । तदिह निरतिशयैश्वर्यत्वात् परमेश्वरस्य मा नाम भूवन्विद्वांसस्ततोऽधिकास्तत्समास्तु भविष्यन्ति । तथाच न तदधीनाः । नहि समप्रधानभावानामस्ति मिथोऽपेक्षा । तदेते स्वतन्त्राः सन्तस्तद्व्यापारे जगत्सर्जनेऽपि प्रवर्तेरन्निति प्राप्ते प्रत्यभिधीयते—नित्यत्वादनपेक्षत्वात् श्रुतेस्तत्प्रक-

### आनन्दगिरीयव्याख्या

कारविषयमिति भेदः । विशेषज्ञानाभावाभिधानं मुक्तिमुक्त्योरन्यतराभिप्रायेणेत्युक्तम् । इदानीमैश्वर्याभिधानस्य सगुणविद्याविषयत्वेन भिन्नगोचरत्वान्न विरोधाशङ्केत्याह—सगुणेति । कथं तर्हि सगुणविद्याफले मुक्तिशब्दप्रवृत्तिरित्याशङ्क्य संध्यायां दिवाशब्दवत्प्रत्यासत्तिमात्रेणेति मत्वाह—तस्मादिति ॥ १६ ॥ मनोदेहसर्गादावुत्सर्गतो यदैश्वर्यमुपासितुरुक्तं तस्य जगत्सर्गेऽप्रमाणादपवादं दर्शयति—जगदिति । अपरब्रह्मणा सायुज्यं गतानामैश्वर्यं विषयीकृत्य तस्योभयथादृष्ट्या संशयमाह—ये सगुणेति । सगुणब्रह्मविद्याफलभूतैश्वर्यस्य निरतिशयत्वनिवारणात्पादादिसंगतिः । पूर्वपक्षे विद्वदैश्वर्यस्य निरङ्कुशत्वादीश्वरभेदादनेकमत्या जगदुत्पत्त्यादिव्यवस्थाऽसिद्धिः । सिद्धान्ते तद्भेदाभावात्परमेश्वराधीनतया जगदुदयादिव्यवस्थोपपत्तिरित्यभिप्रेत्य प्रश्नपूर्वकं पूर्वपक्षयति—किं तावदिति । श्रुतीनां श्रुतार्थग्रहेण पूर्वपक्षयित्वा सिद्धान्तयति—एवमिति । तत्र प्रतिज्ञां विभजते—जगदिति । तत्र हेतुद्वयं प्रश्नपूर्वकमाह—कुत इति । ईश्वरस्य नित्यसिद्धस्यैव जगदुत्पत्त्यादिव्यापार इत्यत्र प्रकरणादिति हेतुं विवृणोति—पर इति । प्रलयादुत्थानकाले सर्वस्य जगतो यः कर्ता तस्यैव स्थित्यादावपि कर्तृत्वोक्तेरन्यस्य चादिसर्गे कर्तृत्वाभावादीश्वरस्यैव जगद्व्यापारे संनिधिरित्याह—तमेवेति । किंच परस्यैव नित्यत्वेन स्वहेत्वनपेक्षणस्य कूटशक्तित्वाज्जगत्सर्जनं प्रति कल्प्यसामर्थ्यत्वाच्च विदुषामीश्वरविषयैव जगत्सृष्टिरेष्टव्या । किंच पौर्वापर्यालोचनायामीश्वरस्यैव जगत्सर्गः शब्दाद्गम्यते । जन्मादिसूत्रमारभ्य चैतदुपपादितम् । ततोऽद्वितीयप्रतिज्ञा सिद्धैवेत्याह—नित्येति । ईश्वरस्य जगद्व्यापारे संनिधिमुक्त्वा विदुषां तत्रासंनिधिमाहप्रतिज्ञाद्वितीयं

तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते । तेनासंनिहितास्ते जगद्व्यापारे । समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात् । अथ कस्यचित्संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥ १७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' (तै० १।६।२) इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति तत्परिहर्तव्यम् । अत्रोच्यते । नायं दोषः । आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते । यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' (तै० १।६।२) इत्याह । यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति । तदनुसारेणैव चानन्तरम् 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' (तै० १।६।२) इत्याह । एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम् ॥ १८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

---

रत्नप्रभाव्याख्या

विरोधः । एकं प्रत्यन्येषां गुणत्वे त्वेक एवेश्वर इत्याह—**समनस्कत्वादिति** ॥ १७ ॥ अधिकारे नियोजयत्यादित्यादीनित्याधिकारिकः, स चासौ मण्डलस्थश्च तस्य प्राप्यत्वोक्तेरित्यर्थः । मनसस्पतिः सूर्यमण्डलान्तःस्थः परमात्मा 'तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्' इति श्रुतेः।तथाच यदि पूर्वं निरङ्कुशं स्वाराज्यमुक्तं स्यात्तर्हि ईश्वरस्याग्रे प्राप्यतां न ब्रूयात् अतो भोगे स्वाराज्यं न जगज्जन्मादिष्विति भावः । वाक्पतित्वादिकमपीश्वराधीनमित्याह—**तदनुसारेणेति** । उक्तन्यायं काम्यचारादिवाक्येष्वतिदिशति—**एवमिति** ॥ १८ ॥ जगद्व्यापार उपासकप्राप्यः तदुपास्यनिष्ठत्वात्संकल्पसिद्ध्यादिवदित्याशङ्क्योपास्यस्थनिर्गुणस्वरूपे व्यभिचारमाह—**विकारावर्ति चेति** ॥ १९ ॥ निर्गुणस्वरूपे प्रमाणमाह—**दर्शयतश्चेति** । यथा

भामतीव्याख्या

मादपि । ऐकमत्याच्च विदुषां परमेश्वरतन्त्रता ॥ जगत्सर्गलक्षणं हि कार्यं कारणैकस्वभावस्यैव हि भवतु आहो कार्यकारणस्वभावस्य । तत्रोभयस्वभावस्य स्वोत्पत्तौ मूलकारणापेक्षस्य पूर्वसिद्धः परमेश्वर एव कारणमभ्युपेतव्य इति स एवैकोऽस्तु जगत्कारणम् । तस्यैव नित्यत्वेन स्वकारणानपेक्षस्य कॢप्तसामर्थ्यात् । कल्प्यसामर्थ्यास्तु जगत्सर्जनं प्रति विद्वांसः । नच जगत्स्रष्टृत्वमेषां श्रूयते । श्रूयते त्वत्रभवतः परमेश्वरस्यैव । तमेव प्रकृत्य सर्वासां तच्छ्रुतीनां प्रवृत्तेः । अपिच समप्रधानानां हि न नियमवदैकमत्यं दृष्टमिति यदैकः सिसृक्षति तदैवेतरः संजिहीर्षतीत्यपर्यायेण सृष्टिसंहारौ स्याताम् । न चोभयोरपीश्वरत्वं व्याघातात् । एकस्य तु तदाधिपत्ये तदभिप्रायानुरोधिनां सर्वेषामैकमत्योपपत्तेरदोषः । तत्रागन्तुकानां कारणाधीनजन्मैश्वर्याणां गृह्यमाणाविशेषतया समत्वान्नित्यैश्वर्यशालिनो गृह्यते तेभ्यो विशेष इति स एव तेषामधीश इति तत्तन्त्रा विद्वांस इति परमेश्वरव्यापारस्य सर्गसंहारस्य नेदाने ॥ १७ ॥ पूर्वपक्षिणोऽनुशयबीजमाशङ्क्य निराकरोति—**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः** । यतः परमेश्वराधीनमैश्वर्यं तस्मात्ततो न्यूनमणिमादिमात्रं स्वाराज्यं न तु जगत्स्रष्टृत्वम् । उक्तन्यायात् ॥ १८ ॥ **विकारावर्ति च तथाहि स्थितिमाह** ।

आनन्दगिरीयव्याख्या

समर्थयते—**तदन्वेषणेति** । श्रूयते तेषां सर्वेषु लोकेषु कामचारो भवतीत्याद्यानिति शेषः । सहवृत्तरभाविनामुपासकानां सृष्टिकाले सत्त्वाभावात्पूर्वकल्पसिद्धानां प्रलयकाले मुक्तत्वान्न स्रष्टृत्वादि तेषां श्लिष्टमित्यर्थः । इतश्च विदुषां न निरङ्कुशैश्वर्यमित्याह—**समनस्कत्वादिति** । किं विदुषां समप्रधानत्वमाहो गुणप्रधानत्वम् । आद्ये समप्रधानानां नियमेनैकमत्यादर्शनादेकस्य सिसृक्षायामपरस्य संजिहीर्षासंभवादपर्यायमेव सर्गसंहारौ स्याताम् । अपरथा द्वयोरपि नेश्वरत्वं कार्यविघातादित्यर्थः । द्वितीयमनुभाष्य दूषयति—**अथेत्यादिना** । एकाभिप्रायानुवर्तितायामन्येषामागन्तुकैश्वर्याणामगृह्यमाणविशेषतया कस्यचित्प्राधान्यायोगादनागन्तुकैश्वर्यपरमेश्वरवर्तित्वमितरेषामेषितव्यमित्यर्थः ॥ १७ ॥ पूर्वपक्षबीजमनूद्य दूषयति—**प्रत्यक्षेति** । अनुवादभागं व्याकरोति—**अथेति** । अधिकारे नियोजयत्यादित्यादीन्नित्याधिकारिकस्तत्र परिहारमवतारयति—**अत्रेति** । नञर्थमुक्त्वा हेतुमवतार्य व्याचष्टे—**नेत्यादिना** । यदि पूर्वमेव निरङ्कुशं स्वाराज्यमुक्तं तर्हि पश्चादीश्वरप्राप्तिवचनं न स्यात्तस्माद्भोगे स्वाराज्यं न तु जगतः स्रष्टृत्वाद्यावित्यर्थः । विवक्षितार्थसिद्धये वाक्यार्थं कथयति—**यो हीति** । विदुषामीश्वराधीनमैश्वर्यं स्वाराज्यमित्यत्र वाक्यशेषमनुकूलयति—**तदनुसारेणेति** । परमेश्वराधीनमणिमादिलक्षणमैश्वर्यं विदुषां स्वाराज्यं न तु जगतः स्रष्टृत्वादीत्युक्तमर्थं तेषां सर्वेषु लोकेष्वित्यादिवाक्येषु संचारयति—**एवमिति** ॥ १८ ॥ निरतिशयैश्वर्यवदीश्वरोपासकास्तदात्मतां प्राप्ताः सातिशयैश्वर्यवन्तो भवन्तीत्ययुक्तं तदात्मत्वविरोधादित्याशङ्क्य प्रतिक्षिपति—हेतुमाह—**यदिति** । यस्मात्कारणात्स्वाराज्यप्राप्त्यनन्तरमाहाप्नोति मनसस्पतिमिति । सगुणप्राप्तानां निर्गुणप्रा-

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ( छा० ३।१२।६ ) इत्येवमादिः । नच तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्त एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम् ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' ( कठ० ५।१५। श्वेता० ६।१४। मुण्ड० २।२।१० ) इति । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' ( गी० १५।६ ) इति च । तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते—'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति 'स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' ( बृ० १।५।२३ ) इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥२१॥ नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य

---

### रत्नप्रभाव्याख्या

ज्ञानाभावान्निर्गुणं न प्राप्तं तथा ध्यानाभावाज्जगत्स्रष्टृत्वादि न प्राप्यते । ध्यानाभावश्च विध्यभावादिति भावः ॥ २० ॥ तमुपासकं ब्रह्मलोकगतमाह हिरण्यगर्भः मया खल्विमा आपो अमृतरूपा मीयन्ते भुज्यन्ते तवाप्यसौ लोकोऽमृतोदकलक्षण इत्यर्थः । श्रुत्यन्तरमाह—**स यथेति** । भोगसाम्ये स दृष्टान्तो यथेत्यर्थः । तेनो इत्युशब्दोऽप्यर्थः । सलोकताम-

### भामतीव्याख्या

एतावानस्य महिमेति विकारवर्ति रूपमुक्तम् । ततो ज्यायांश्चेति निर्विकारं रूपम् । तथा पादोऽस्य विश्वा भूतानीति विकारवर्ति रूपं त्रिपादस्यामृतं दिवीति निर्विकारमाह रूपम् ॥१९॥ दर्शयतश्चापरे श्रुतिस्मृती निर्विकारमेव रूपं भगवतस्ते च पठिते । एतदुक्तं भवति—यदि ब्रूपे सगुणे ब्रह्मण्युपास्यमाने यथा तद्गुणस्य निरवग्रहत्वमपि वस्तुतोऽस्तीति निरवग्रहत्वं च विदुषा प्राप्तव्यमिति तदनेन व्यभिचार्यते । यथा सविकारे ब्रह्मण्युपास्यमाने वस्तुतः स्थितमपि निर्विकाररूपं न प्राप्यते तत्कस्य हेतोः, अतत्क्रतुत्वादुपासकस्य । तथा तद्गुणोपासनया वस्तुतः स्थितमपि निरवग्रहत्वं नाप्यते । तच्चोपासनासु पुरुषक्रतुत्वात् । उपासकस्य तत्क्रतुत्वं च निरवग्रहत्वस्योपासनविध्यगोचरत्वाद्विध्यधीनत्वाच्चोपासनामु पुरुषस्वातन्त्र्याभावात्स्वातन्त्र्ये वा प्रातिभत्वप्रसङ्गादिति ॥ २० ॥ **भोगमात्रसाम्यलिङ्गाच्च** । न केवलं स्वाराज्यस्येश्वराधीनतया जगत्सर्जनम् साक्षाद्भोगमात्रेण तेन परमेश्वरेण साम्याभिधानादपि व्यपदेशलिङ्गादिति । भूतान्यवन्ति प्रीणयन्तीति भोजयन्तीति यावत् । सूत्रान्तरावतारणाय शङ्कते—**नन्वेवं सति सातिशयत्वदिति** । सह परमेश्वरस्यातिशयेन वर्तत इति विदुष ऐश्वर्यं सातिशयम् । यच्च कार्यं सातिशयं तच्च यथा लौकिकमैश्वर्यम् । तदनेन कार्यत्वमु-

### आनन्दगिरीयव्याख्या

प्त्यभाववदेतदुक्तमिति वक्तुं ब्रह्मणो द्वैरूप्यमाह—**विकारावर्तीति** । तत्र प्रतिज्ञाविभागं व्याचष्टे—**विकारेति** । नकारसूचितमर्थमाह—**नेति** । हेतुभागं व्याचष्टे—**तथाहीति** । तत्र प्रथमतृतीयपादाभ्यां विकारवर्ति रूपमुच्यते द्वितीयचतुर्थपादाभ्यां विकारावर्ति ब्रह्मणो रूपमुक्तमिति भेदः । अस्तु ब्रह्मणो विकारावर्ति रूपं तथापि किं स्यात्' तत्राह—**नचेति** । वस्तुतस्तथात्वेऽपि यथोपासनमेव तत्प्राप्तिरुपासनं च विध्यधीनं निरवग्रहमहत्त्वादिधर्मस्य चोपास्त्यगोचरत्वादनुपासितस्याप्राप्तिरिति फलितमाह—**अतश्चेति** ॥ १९ ॥ विकारावर्ति रूपमस्तीत्यत्रैव श्रुतिस्मृती प्रमाणयति—**दर्शयतश्चेति** । प्रसिद्धे प्रत्यक्षानुमाने प्रत्याचक्षाणः सूत्राक्षराणि योजयति—**दर्शयतश्चेत्यादिना** । उक्तेऽर्थे सुलभानि श्रुतिस्मृतिवचनानीति मन्वानो वाक्यार्थमाह—**तदेवमिति** ॥ २० ॥ अपरब्रह्मविदां विश्वसृष्ट्याद्यभावे हेत्वन्तरमाह—**भोगमात्रेति** । न केवलं स्वाराज्यस्य परमेश्वरायत्ततया विदुषां जगद्व्यापाररहित्वं किंतु तेन भोगमात्रेण साम्योक्तिलिङ्गादपीत्यर्थः । चकारार्थमाह—**इतश्चेति** । हेत्वन्तरमेवावशिष्टसूत्राक्षरयोजनया स्पष्टयति—**यस्मादिति** । तं ब्रह्मलोकगतमुपासकं हिरण्यगर्भः स्वसमीपमुपागतं सानुनयमाह मया खल्वाप एवामृतमय्यो मीयन्ते दृश्यन्ते भुज्यन्ते तवाप्यसावमृतरूपोदकलक्षणो लोको भोग्यो यथासुखं भुज्यतामित्याह—**तमाहेति** । उपासकस्योपास्यदेवतया भोगमात्रसाम्ये श्रुत्यन्तरमाह—**स यथेति** । सशब्दो दृष्टान्तपरः । अवन्ति भजन्ते । तत्रैव वाक्यान्तरमाह—**तेनेति** । उशब्दोऽप्यर्थः सलोकताम-

स्याचतश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान्बादरायण आचार्यः पठति—

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥**

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरं मदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते । कुतः । 'तयोर्ध्वमायन्नमृतत्वमेति' (छा० ८।६।६ कठ० ६।१६) 'तेषां न पुनरावृत्तिः' (बृ० ६।२।१५) 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा० ४।१५।६) 'ब्रह्मलोकमभिसंपद्यते' (छा० ८।१५।१) 'न च पुनरावर्तते' (छा० ८।१५।१) इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् 'कार्यात्यये तदध्यक्षेण सहातः परम्' (ब्र०

रत्नप्रभाव्याख्या

पीत्यन्वयः । सायुज्यं समानदेहत्वं क्रमेण मुक्तिर्वा । शास्त्रसमाप्तिं सूचयन्सूत्रकारं पूजयति—**भगवानिति** । भगवत्त्वं सर्वज्ञत्वम् । सूत्रद्वारा शिष्याणामाचारे स्थापनादाचार्यत्वम् । बादरायणपदेन बदरिकाश्रमवासोक्त्या नित्यसर्वज्ञस्य परमगुरोर्नारायणस्य प्रसादद्योतनात्तत्प्रणीतशास्त्र निरवद्यतामुद्योतयति ॥ २१ ॥ सगुणविद्यायाः सातिशयफलत्वेऽपि ततो निर्गुणविद्ययानावृत्तिरित्याह—**अनावृत्तिः शब्दादनावृत्तिः शब्दात्** । ये ब्रह्मलोकं गच्छन्ति ते तं प्राप्य नावर्तन्ते इति संबन्धः । लोकं विशिनष्टि—**यस्मिन्निति** । इतोऽस्मात्पृथिवीलोकात्तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नर इति ण्य इति चार्णवतुल्यौ सुधाह्रदावित्यर्थः । ऐरमन्नमयं, मदीयं मदकरं सरः, सोमसवनः अमृतवर्षी । यद्यपि तेषामिह न पुनरावृत्तिरिमं मानवमिति च श्रुतिष्विहेममितिविशेषणादस्मिन्कल्पे ब्रह्मलोकं गतानां कल्पान्तरे आवृत्तिर्भाति, तथापीश्वरोपास्तिं विना पञ्चाग्निविद्याश्वमेधदृढब्रह्मचर्यादिसाधनैर्ये गतास्तेषां तत्त्वज्ञाननियमाभावादावृत्तिः स्यात्, ये तु दहरादीश्वरोपास्त्या गतास्तेषां सगुणविद्याफलक्षयेऽपि निरवग्रहेश्वरानुग्रहलब्धात्मज्ञानान्मुक्तिरिति नियम इत्यभिप्रेत्याह—**अन्तवत्त्वेऽपि त्विति** । नन्वत्र सूत्रकृता सगुणविदामेवानावृत्तिक्रम उक्तो न निर्गुणविदां तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्काभावादित्याह—**सम्य-**

भामतीव्याख्या

क्तम् । तथाच कार्यत्वादन्तवत्प्राप्तमिति तच्च न युक्तमानन्त्येन तद्विदुषां तत्र प्रवृत्तेरिति ॥ २१ ॥ अत उत्तरं पठति—**अनावृत्तिः शब्दादनावृत्तिः शब्दात्** । किमर्चिरादिमार्गेण ब्रह्मलोकप्राप्तानामैश्वर्यस्यान्तवत्त्वं त्वया साध्यते । आहोस्विच्चन्द्रलोकादिवद्ब्रह्मलोकादेतल्लोकप्राप्तिर्मुक्तेरन्तवत्त्वम् । तत्र पूर्वस्मिन् कल्पे सिद्धसाधनम् । उत्तरत्र तु श्रुतिस्मृतिविरोधः । तद्विदुषां च

आनन्दगिरीयव्याख्या

यीति संबध्यते । प्रकृतेनोपासनेनोपास्याया देवतायाः सायुज्यं तेन समानदेहतां समानलोकतां च भावनाविशेषाद्याप्नोतीत्यर्थः ॥ २१ ॥ विदुषां निरङ्कुशैश्वर्याभावे दोषमाशङ्कते—**नन्विति** । सह परमेश्वरस्यैश्वर्येणातिशयेन वर्तत इति सातिशयं विदुषामैश्वर्यं तथाच परमेश्वराधीनत्वाल्लौकिकैश्वर्यवत्कार्यं कार्यत्वाच्चान्तवदित्यर्थः । विद्वदैश्वर्यस्यान्तवत्त्वे का क्षतिरित्याशङ्क्य विदुषां मुक्तता न स्यादित्याह—**ततश्चेति** । एतदुत्तरत्वेनोत्तरसूत्रं सूत्रकारं पूजयन्नवतारयति—**अत इति** । भगवानित्यनेन सर्वज्ञत्वादिसंपत्तिरुक्ता । आचार्यशब्देन शास्त्रार्थबहुलीकरणं सदाचारे शिष्याणां स्थापनं स्वयं तदाचरणं चेत्यत्र नैपुण्यमुक्तमिति भेदः । यत्तु सातिशयत्वेन कार्यत्वं ततश्चान्तवत्त्वमित्यनुमानं तत्र किमैश्वर्यस्यान्तवत्त्वमात्रं साध्यं किंवा मुक्त्यभावो विदुषामिति विकल्प्याद्ये सिद्धसाध्यत्वं मत्वा द्वितीये क्रममुक्तिवादिश्रुतिविरोधमाह—**अनावृत्तिरिति** । सूत्रस्थं प्रतिज्ञापदं व्याचष्टे—**नाडीति** । अर्चिरादिपदोक्तदेवयानं पन्थानं स्मारयितुं विशेषणद्वयम् । ये ब्रह्मलोकं गच्छन्ति ते तं प्राप्य भुक्तभोगास्ततो नावर्तन्त इति संबन्धः । कानि तानि शास्त्रोक्तानि विशेषणानीत्युक्ते यथाशास्त्रं तान्यनुक्रामति—**यस्मिन्निति** । इतो लोकात्पृथिवीलक्षितात्तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नरण्यसंज्ञौ द्वावर्णवावित्यर्थः । तस्मिन्नेवान्नमयं हर्षकरं च सरोऽस्तीत्याह—**यस्मिन्नैरमिति** । सोमसवन इत्यत्र सोमशब्दोऽमृतवचनः । कर्मज्ञानशून्यानां दुष्प्रापत्वमपराजितत्वम् । ब्रह्मणो हिरण्यगर्भस्येति यावत् । प्रभुशब्दोऽपि हिरण्यगर्भमेवाधिकरोति । उक्तविशेषणवति ब्रह्मलोके मानमाह—**यश्चेति** । चन्द्रलोकादिवेति वैधर्म्योदाहरणम् । प्रतिज्ञामेवं व्याख्याय मोक्षहेतुमाकाङ्क्षापूर्वकं व्याख्याति—**कुत इत्यादिना** । ननु दर्शितानामनावृत्तिश्रुतीनामर्थवादत्वादविरोधेऽप्रामाण्यमिति नानुमानापबाधने सामर्थ्यमिममिहेति च विशेषणात्कल्पान्तरे भवत्यावृत्तिरिति, तत्राह—**अन्तवत्त्वेऽपीति** । ये तावदूर्ध्वरेतसः स्वाश्रमधर्ममात्रनिष्ठा ब्रह्मचर्येण ब्रह्मलोकमधिरूढास्तेषामन्तरेण विद्यां बन्धध्वंसासिद्धेरस्त्येवावृत्तिः । ये तु सगुणोपासकास्तेषामैश्वर्यस्य क्षयमात्रस्थायित्वेऽपि क्रममुक्तिविवक्षयाऽनावृत्तिरविरुद्धेत्यर्थः । सगुणब्रह्मविदामेवानावृत्तिरत्र प्रतिपाद्यते न निर्गुणब्रह्मविदां तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्का-

सू० ४।३।१० ) इत्यत्र । सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः । तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥ इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

रत्नप्रभाव्याख्या

गिति । तदाश्रयणेनेति सगुणविदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैवानावृत्तिः साधिता, अतः स्वत एव सम्यग्दर्शिनामावृत्तिशङ्का नेति किमु वाच्यमित्यर्थः । यत्राध्यायसमाप्तिस्तत्र पदमात्रस्याभ्यासो दर्शितः, इह सूत्रस्यैवाभ्यासाच्छास्त्रसमाप्तिर्द्योत्यत इत्याह—अनावृत्तिः शब्दादिति । एवं समन्वयोक्त्या ब्रह्मात्मैक्यस्य वेदान्तप्रमाणकत्वमवधारयितुं वाक्यार्थज्ञाने स्मृतितर्कादिसर्वप्रकारविरोधः परिहृतः, साधनसंपत्तिश्च दर्शिता, तस्माद्विवेकादिसाधनसंपन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबन्धस्याखण्डात्मसंबोधात्समूलबन्धध्वंसे सत्याविर्भूतनिष्कलङ्कानन्तस्वप्रकाशचिदानन्दात्मनावस्थानमिति सिद्धम् ॥ २२ ॥

नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति । शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे ॥ १ ॥
अन्तर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः । अतोऽत्र दोषोऽशङ्क्यः स्यादेष ह्येवेतिशासनात् ॥ २ ॥
वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च सीतां कोदण्डदीक्षामभयवरयुतां वीक्ष्य रामाङ्गसङ्गः ।
स्वस्याः क्व स्यादितीयं हृदि कृतमनना भाष्यरत्नप्रभाख्या, स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्कृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥

भामतीव्याख्या

क्रममुक्तिप्रतिपादनादिति । तत्त्वमसिवाक्यार्थैकोपासनापरान् प्रत्याह—सम्यग्दर्शनविध्वस्ततमसामिति । द्विधाविद्या तमः निरुपाधिब्रह्मसाक्षात्कारस्तत्त्वदर्शनम् । न चैतन्निर्वाणं स्वरूपावस्थानलक्षणं कार्यं येनानित्यं स्यादित्याह—नित्यसिद्ध इति ॥ २२ ॥

भङ्क्त्वा वाग्सुरेन्द्रवृन्दमखिलाविद्योपधानातिगं येनाम्नायपयोनिधेर्नयमथा ब्रह्मामृतं प्राप्यते ।
सोऽयं शाङ्करभाष्यजातविषयो वाचस्पतेः सादरं संदर्भः परिभाव्यतां सुमतयः स्वार्थेषु को मत्सरः ॥ १ ॥
अज्ञानसागरं तीर्त्वा ब्रह्मतत्त्वमभीप्सताम् । नीतिनौकर्णधारेण मयाऽपूरि मनोरथः ॥ २ ॥
यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः । यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥ ३ ॥
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया । समर्पितमथैतेन प्रीयतां परमेश्वरः ॥ ४ ॥
नृपान्तराणां मनसाप्यगम्यां भ्रूक्षेपमात्रेण चकार कीर्तिम् । कार्तस्वरासारसुपूरितार्थसार्थः स्वयं शास्त्रविचक्षणश्च ॥ ५ ॥
नरेश्वरा यच्चरितानुकारमिच्छन्ति कर्तुं न च पारयन्ति । तस्मिन्महीपे महनीयकीर्तौ श्रीमन्नृगेऽकारि मया निबन्धः ॥ ६ ॥

इति श्रीवाचस्पतिमिश्रविरचिते शंकरभगवत्पादभाष्यविभागे भामत्यां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः ।

आनन्दगिरीयव्याख्या

भावादित्याह—सम्यगिति । सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तिरिति स्थिते सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीति कैमुतिकन्यायमाह—तदाश्रयणेनेति । उपासकानामीश्वरायत्तमैश्वर्यं न निरतिशयमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम् । सूत्राभ्यासस्य प्रयोजनमाह—अनावृत्तिः शब्दादिति । यत्राध्यायपरिसमाप्तिरेव तत्र पदस्यैवाभ्यासो दृष्टः प्रकृते सूत्रस्यैवाभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वयाविरोधसाधनफलानां साकल्येनोक्तत्वाद्वक्तव्यानवशेषात्परिसमापनमुचितमिति भावः ॥ २२

व्याख्याऽसंख्याततर्कक्रकचचयरयस्तदुस्तर्कशङ्का शङ्काव्याजप्रकारप्रसरणसमतावस्तुतत्त्वं श्रयन्ती ।
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगाढोक्तिरूढानन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्तात् ॥ १ ॥
सन्त्येव बहुलानीह व्याख्यानानि महाधियाम् । व्याख्या तथापि सौख्येन व्याख्यानाय मया कृता ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते श्रीमच्छारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## ॥ इति चतुर्थस्याध्यायस्य ब्रह्मप्राप्ति–ब्रह्मलोकस्थितिनिरूपणाख्यश्चतुर्थः पादः ॥

## ॥ इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये फलाख्यश्चतुर्थोऽध्यायः ॥

॥ ॐ तत्सत् ॥

